હોય છે अहंकारपरायण होते है, तेषाम् તેઓનાં उनके, उदयप्रलयौ જન્મ અને મરણ થાય છે जन्म और मरण होते है, ये तु પણ જેઓ किन्तु जो, अत એઓથી इनसे, अन्यथा વિપરીત હોય છે विपरीत होते है, तेषाम् તેઓનાં उनके, न જન્મમરણ થતાં નથી जन्ममरण नही होतें ॥ ६९ ॥

69. Those who are attached to the pairs of opposites and to egoism, are subject to creation and dissolution; but not those who are not so attached.

परमात्मनो लिङ्गानि—

**प्राणापानौ निमेषाद्या जीवनं मनसो गतिः ।**
**इन्द्रियान्तरसंचारः प्रेरणं धारणं च यत् ॥७०॥**
**देशान्तरगतिः स्वप्ने पञ्चत्वग्रहणं तथा ।**
**दृष्टस्य दक्षिणेनाक्ष्णा सव्येनावगमस्तथा ॥७१॥**
**इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः ।**
**बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः ॥७२॥**
**यस्मात् समुपलभ्यन्ते लिङ्गान्येतानि जीवतः ।**
**न मृतस्यात्मलिङ्गानि तस्मादाहुर्महर्षयः ॥ ७३ ॥**

प्राणापानौ પ્રાણ- અપાન प्राण- अपान, निमेषाद्याः નિમેષ વગેરે निमेष आदि, जीवनम् જીવન जीवन, मनसः મનની मनका, गतिः ગતિ जाना, इन्द्रियान्तर- જુદી જુદી ઇન્દ્રિયોમાં एक इन्द्रियसे दूसरी इन्द्रियमें, संचारः સંચાર जाना, प्रेरणम् મનને પ્રેરવું मनको प्रेरणा करना, यत् च અને જે और जो, धारणम् મનનું ધારણ કરવું मनको धारण करना, स्वप्ने સ્વપ્નમાં स्वप्नमें, देशान्तर બીજા દેશમાં दूसरे देशमें, गतिः મનની ગતિ मनका जाना, तथा पञ्चत्वग्रहणम् મરણ પામવું તે पचत्वको प्राप्त होना, तथा दक्षिणेन જમણી दाहिनी, अक्ष्णा આંખથી आखसे, दृष्टस्य જોયેલાનું देखे हुए विषयका, सव्येन ડાબી આંખથી वाईं आखसे, अवगमः જ્ઞાન ज्ञान, इच्छा ઇચ્છા इच्छा, द्वेषः દ્વેષ द्वेष, सुखम् सुख सुख, दुःखम् દુઃખ दुःख, प्रयत्नः પ્રયત્ન प्रयत्न, चेतना ચેતના चेतना, धृतिः ધૃતિ धृति, बुद्धिः બુદ્ધિ बुद्धि, स्मृति સ્મૃતિ स्मृति, अहङ्कार અને અહંકાર और अहकार, परमात्मन એ સૂક્ષ્મ આત્માનાં ये सूक्ष्म आत्माके, लिङ्गानि લક્ષણો છે लक्षण है, यस्मात् જેથી जिससे, एतानि આ ये, लिङ्गानि લક્ષણો लक्षण, जीवतः જીવતા માણસમાં જ जीवित पुरुषमें, समुपलभ्यन्ते જોવામાં આવે છે मालूम होते हैं, मृतस्य મરેલામાં मरे हुएमें, न જોવામાં નથી આવતાં मालूम नहीं होते, तस्मात् તેથી इससे, महर्षयः મહર્ષિઓ महर्षि, आत्मलिङ्गानि એઓને આત્માનાં લક્ષણો इनको आत्माके लक्षण, आहुः કહે છે कहते हैं ॥ ७०-७३ ॥

70-73 The signs of the self are—respiration, winking etc, animation, mental activity, inter-communication of sense-perceptions, impelling, upholding, travelling to far countries in dreams, likewise experience of death in dreams, recognition by the left eye of what is seen by the right eye, desire, hate, pleasure, pain, effort, awareness, resolution, understanding, recollection and the sense of ego Since these signs are observed in the living organism alone and not in the dead, therefore the great sages have declared them to be indicative of the Self

**शरीरं हि गते तस्मिन् शून्यागारमचेतनम् ।**
**पञ्चभूतावशेषत्वात् पञ्चत्वं गतमुच्यते ॥ ७४ ॥**

हि કારણ કે क्योकि, तस्मिन् તે આત્મા उस आत्माके, गते જતાં રહેતાં चले जाने पर, शून्यागारम् શૂન્ય ઘર જેવું शून्य गृह जैसा, अचेतनम् અચેતન अचेतन, शरीरम् શરીર शरीर, पञ्चभूत- પાંચ ભૂતો જ पचभूतोंके, अवशेषत्वात् બાકી રહેવાથી अवशिष्ट रहनेसे, पञ्चत्वम् પંચત્વ पचत्वको, गतम् પામ્યું प्राप्त हुआ, उच्यते કહેવાય છે कहा जाता है ॥ ७४ ॥

74 The Self having left the lifeless body, like an untenanted house,

man is said to be reduced to a pentad because of the five residual elements

निष्क्रियस्य पुरुषस्य क्रियानिर्देशः—

**अचेतनं क्रियावच्च मनश्चेतयिता परः ।**
**युक्तस्य मनसा तस्य निर्दिश्यन्ते विभोः क्रियाः॥७५॥**

**मनः** મન मन, **अचेतनम्** અચેતન जड़, **क्रियावत्** **च** અને ક્રિયાયુક્ત છે और क्रियावाला है, **परः** આત્મા आत्मा, **चेतयिता** ચેતનદાતા છે चेतन देनेवाला है, **मनसा** મન સાથે मनसे, **तस्य विभोः** તે વ્યાપક આત્માનો उस व्यापक आत्माका, **युक्तस्य** સ યોગ થતાં संयोग होने पर, **क्रियाः** આત્માની ક્રિયાઓ आत्माकी क्रियायें, **निर्दिश्यन्ते** કહેવામાં આવે છે कहलाती हैं ॥ ७५ ॥

75. The mind is unconscious but active. The impeller, however, is the self, of which, when yoked to the mind, all activity is predicated.

**चेतनावान् यतश्चात्मा ततः कर्ता निरुच्यते ।**
**अचेतनत्वाच्च मनः क्रियावदपि नोच्यते ॥७६॥**

**यतः च** જેથી जिससे, **आत्मा** આત્મા आत्मा, **चेतनावान्** ચેતનાવાળો છે चेतनायुक्त है, **ततः** તેથી इससे, **कर्ता** કર્તા कर्ता, **निरुच्यते** કહેવાય છે कहा जाता है, **मनः च** અને મન और मन, **क्रियावत्** ક્રિયાયુક્ત क्रियायुक्त, **अपि** હોવા છતાં પણ होने पर भी, **अचेतनत्वात्** અચેતન હોવાથી चेतनारहित होनेसे, **न उच्यते** કર્તા કહેવાતું નથી कर्ता नहीं कहा जाता।

76. Because the self is the conscious element, therefore it is called the agent or doer; while the mind, though actually performing, is not called the doer, because it is devoid of consciousness.

स्वतन्त्रस्यापि पुरुषस्यानिष्टयोनिषु जन्मग्रहणे हेतुः—

**यथास्वेनात्मनाऽऽत्मानं सर्वः सर्वासु योनिषु ।**
**प्राणैस्तन्त्रयते प्राणी नह्यन्योऽस्त्यस्य तन्त्रकः ॥७७॥**

**सर्वः** સર્વ सब, **प्राणी** પ્રાણી प्राणी, **यथास्वेन** પોતપોતાના કર્મ દ્વારા अपने अपने कर्म अनुसार, **आत्मना** પોતે स्वयं, **आत्मानम्** પોતાને अपने आपको, **सर्वासु** સર્વ सब, **योनिषु** યોનિઓમાં योनियोंमें, **प्राणैः** પ્રાણોથી प्राणोंके साथ, **तन्त्रयते** યોજે છે युक्त करते है, **हि** કારણકે क्योंकि, **अन्य** બીજો કોઈ પુરુષ अन्य कोई पुरुष, **अस्य** એનો इसका, **तन्त्रकः** પ્રેરક प्रेरक, **न अस्ति** નથી नहीं है ॥ ७७ ॥

77. In as much as all living beings cause themselves to be linked to all kinds of bodies by their own free will, there is no question of another and external administrator.

वशिनोऽपि पुरुषस्यासुखैर्भर्विराक्रमणे कारणम्—

**वशी तत् कुरुते कर्म यत् कृत्वा फलमश्नुते ।**
**वशी चेतः समाधत्ते वशी सर्वं निरस्यति ॥७८॥**

**वशी** સ્વેચ્છાધીન પ્રવૃત્તિવાળો આત્મા वशी आत्मा, **तत्** તે उन, **कर्म** કર્મ कर्मोंको, **कुरुते** કરે છે करता है, **यत्** જે जिन्हें, **कृत्वा** કરીને करके, **फलम्** ફલ फल, **अश्नुते** ભોગવે છે भोगता है, **वशी** સ્વેચ્છાધીન પ્રવૃત્તિવાળો वशीआत्मा, **चेतः** ચિત્તવૃત્તિઓનો चित्तका, **समाधत्ते** નિરોધ કરે છે निरोध करता है, **वशी** અને તે સ્વેચ્છાધીન પ્રકૃત્તિવાળો આત્મા वह वशी आत्मा, **सर्वम्** સર્વ કર્મનો सब कर्मका, **निरस्यति** ત્યાગ પણ કરે છે त्याग भी कर देता है ॥ ७८ ॥

78 Being its own master, the self performs those actions, whereof it subsequently enjoys the fruits; of its own accord, too, the self composes the mind; of its own accord, also, it withdraws from everything.

सर्वगतस्यापि पुरुषस्य सर्ववेदनाज्ञानाभावे हेतुः—

**देही सर्वगतोऽप्यात्मा स्वे स्वे संस्पर्शनेन्द्रिये ।**

७९. देही सर्वगतोऽप्यात्मा—सर्वदेहगतश्चात्मा (ढ)
,, ,, —देहे सर्वगतश्चात्मा (ष)
,, सर्वगतोऽप्यात्मा—सर्वगतो ह्यात्मा (च.)

**सर्वाः सर्वाश्रयस्थास्तु नात्माऽतो वेत्ति वेदनाः॥७९॥**

**सर्वगतः** સર્વવ્યાપી सर्वगत, **अपि** હોવા છતાં પણ होने पर भी, **आत्मा** આત્મા आत्मा, **देही** દેહધારી થતાં देहधारी होता हुआ, **स्वे स्वे** પોતપોતાના अपने अपने, **संस्पर्शनेन्द्रिये** સ્પર્શનેન્દ્રિયથી યુક્ત શરીરમાં स्पर्शनेन्द्रियसे युक्त शरीरमें, **वेदनाः** વેદનાઓ वेदनाको, **वेत्ति** જાણે છે जानता है, **अत** તેથી इससे, **आत्मा** આત્મા आत्मा, **सर्वाश्रयस्थाः** સઘળાં શરીરમાં રહેલી सब शरीरमें स्थित, **सर्वाः** બધી વેદના सब वेदनाओंको, **तु** તો तो, **न** જાણતો નથી नही जानता ॥ ७९ ॥

79. The self, although omnipresent, is localized in its organs of sense, when embodied, and so cannot apprehend all sensations occurring in all bodies.

विभोरप्यात्मनः शैलादितिरस्कृतस्याज्ञाने हेतु.—

**विभुत्वमत एवास्य यस्मात् सर्वगतो महान् ।**
**मनसश्च समाधानात् पश्यत्यात्मा तिरस्कृतम् ॥८०॥**

**यस्मात्** જેથી जिससे, **सर्वगतः** એ સર્વગત यह सर्वगत, **महान्** અને મહાન છે और महान है, **अतः एव** એથી જ इसी लिए, **अस्य** એનું इसका, **विभुत्वम्** વિભુપણું છે विभुत्व है, **मनस** મનની मनकी, **समाधानात् च** સમાધિથી समाधिसे, **आत्मा** આત્મા आत्मा, **तिरस्कृतम्** તિરોહિત વસ્તુને छिपी वस्तुको, **पश्यति** જુએ છે देखता है ॥ ८० ॥

80. The self is infinite for the very reason that it is omnipresent and supreme. By concentrating the mind, the self is able to perceive even the hidden.

**नित्यानुबन्धं मनसा देहकर्मानुपातिना ।**
**सर्वयोनिगतं विद्यादेकयोनावपि स्थितम् ॥८१॥**

**सर्वयोनिगतम् अपि** સર્વ યોનિગત આત્માને પણ सर्व योनिगत आत्माको भी, **देहकर्म-** દેહના કર્મને देहके कर्मके, **अनुपातिना** અનુસરનારા अनुसारी, **मनसा** મન સાથે मनसे, **नित्यानुबन्धम्** નિત્ય સંબંધયુક્ત હોવાથી नित्य संबधवाला होनेसे, **एक-** એક एक, **योनौ** યોનિમાં योनिमें, **स्थितम्** રહેલો स्थित, **विद्यात्** જાણવો જોઈએ जानना चाहिए ॥ ८१ ॥

81. Yoked to the mind which cleaves to it by virtue of the acts performed through the instrumentality of the body, the self though present in all bodies is for all practical purposes to be regarded as localized in one particular body.

क्षेत्रक्षेत्रज्ञयोः किं पूर्वमिति प्रश्नस्योत्तरम्—

**आदिर्नास्त्यात्मनः क्षेत्रपारंपर्यमनादिकम् ।**
**अतस्तयोरनादित्वात् किं पूर्वमिति नोच्यते ॥८२॥**

**आत्मनः** આત્માને आत्माका, **आदि** આદિ आदि, **न अस्ति** નથી नहीं है, **क्षेत्र-** ક્ષેત્ર क्षेत्रकी, **पारंपर्यम्** પરંપરા પણ परंपरा भी, **अनादिकम्** અનાદિ છે अनादि है, **अतः** આથી इसलिए, **तयो** તેઓ બન્નેનું इन दोनोंके, **अनादित्वात्** અનાદિપણું હોવાથી अनादि होनेसे, **किम् पूर्वम्** કોણ પહેલું कौन पहला, **इति** એ यह, **न उच्यते** કહેવાતું નથી नही कहा जाता ॥ ८२ ॥

82. The self has no beginning and likewise the succession of bodies is without a beginning. Both being thus beginningless, neither can be the antecedent to the other.

आत्मनः साक्षिभूतत्वसाधनम्—

**ज्ञः साक्षीत्युच्यते नाज्ञः साक्षी त्वात्मा यतः स्मृतः ।**
**सर्वे भावा हि सर्वेषां भूतानामात्मसाक्षिकाः ॥८३॥**

**ज्ञः** જ્ઞાનવાન ज्ञानवान, **साक्षी** સાક્ષી છે साक्षी है, **इति** એમ ऐसा, **उच्यते** કહેવાય છે कहा जाता है, **अज्ञ** પણ અજ્ઞ किन्तु अज्ञ, **न साक्षी** કહેવાતો નથી

८१. नित्यानुबन्ध-नित्यानुबद्ध (प)

८२ आदिर्नास्त्यात्मनः क्षेत्रपारपर्यमनादिकम् – अनादिरात्मा क्षेत्रस्य पारम्पर्यमनादिकम् (भ)

,, अतस्तयोरनादित्वात्—अनादित्वात्तयोरस्मात् (ज)

साक्षी नहीं कहा जाता, यतः જેથી જિસસે, आत्मा तु આત્માને आत्माको, साक्षी સાક્ષી साक्षी, स्मृत. કહ્યો છે कहा है, सर्वेषाम् हि આથી સર્વ इससे सब, भूतानाम् ભૂતોના भूतोंके, सर्वे भावा બધા ભાવો सब भाव, आत्मसाक्षिकाः આત્માના સાક્ષીપણાવાળા છે आत्माके साक्षित्वसे युक्त है ॥ ८३ ॥

83. It is the knower and not the non-knower that is called the witness. Hence the self is said to be the witness. The vicissitudes of all creatures have the self for their witness

राशिपुरुषस्यैव वेदनाविशेष इति निरूपणम्—

**नैकः कदाचिद्भूतात्मा लक्षणैरुपलभ्यते ।**
**विशेषोऽनुपलभ्यस्य तस्य नैकस्य विद्यते ॥८४॥**

एकः એકલો अकेला, भूतात्मा ભૂતાત્મા भूतात्मा, लक्षणैः લક્ષણોથી लक्षणोंसे, कदाचित् કદાપિ कभी, न નથી नही, उपलभ्यते જાણી શકાતો जाना जाता, तस्य ते उस, एकस्य એકલા अकेले, अनुपलभ्यस्य અજ્ઞેયની अज्ञेयकी, विशेषः કોઈ વેદનાજન્ય ભિન્નતા कोई वेदनाजन्य भिन्नता, न विद्यते નથી नही है ॥८४॥

84. The self, when by itself, is not inferrable by any indication, for the imperceptible and pure self has no attribute whatsoever.

**संयोगपुरुषस्येष्टो विशेषो वेदनाकृतः ।**
**वेदना यत्र नियता विशेषस्तत्र तत्कृतः ॥८५॥**

वेदनाकृतः વેદનાજન્ય वेदनाजन्य, विशेष ભિન્નતા भिन्नता, संयोगपुरुषस्य સંયોગપુરુષમાં सयोगपुरुषमें, इष्टः ઇષ્ટ છે इष्ट है, यत्र જ્યાં जहा, वेदना વેદના वेदना, नियता નિયત છે नियत है तत्र ત્યાં वहा, तत्कृतः વેદનાજન્ય वेदनाजन्य, विशेषः ભિન્નતા હોય છે भिन्नता रहती है ॥ ८५ ॥

85. It is with reference to the embodied self that changes brought about by sensations are predicated, for only that which is affected by sensations is modified.

कथं भिषक् त्रिकाला वेदना चिकित्सति—

**चिकित्सति भिषक् सर्वास्त्रिकाला वेदना इति ।**
**यया युक्त्या वदन्त्येके सा युक्तिरुपधार्यताम् ॥८६॥**

भिषक् વૈદ્ય वैद्य, त्रिकालाः ત્રણે કાળની तीनों कालकी, सर्वाः બધી सब, वेदनाः વેદનાઓની वेदनाओंकी, चिकित्सति ચિકિત્સા કરે છે चिकित्सा करता है, इति એમ ऐसा, यया જે जिस, युक्त्या યુક્તિથી युक्तिसे, एके કેટલાક कई एक, वदन्ति કહે છે कहते है, सा તે वह, युक्ति યુક્તિ युक्ति, उपधार्यताम् સાંભળો सुनो ॥ ८६ ॥

86 Listen now to the argument advanced by those who assert that the physician treats all ailments, whether present, past or future.

**पुनस्तच्छिरसः शूलं ज्वरः स पुनरागतः ।**
**पुन स कासो बलवांश्छर्दिः सा पुनरागता ॥८७॥**
**एभिः प्रसिद्धवचनैरतीतागमनं मतम् ।**

पुन· ફરીને फिर, शिरस· માથાનો शिरका, तत् ते वही, शूलम् દુખાવો આવ્યો दर्द आया, पुनः ફરીને फिर, स· ते वह, ज्वर તાવ ज्वर, आगतः આવ્યો आया, पुन· ફરીને फिर, सः बलवान् ते બળવાન वह बलवान, कास ખાંસી આવી खासी आ गई, पुनः અને ફરીને और फिर, सा छर्दि ते ઉલટી वह वमन, आगता આવી आगया, एभिः એ इन, प्रसिद्धवचनैः પ્રસિદ્ધ વચનોથી प्रसिद्ध वचनोंसे, अतीत- અતીત વેદનાઓનુ अतीत वेदनाओंका, आगमनम् આવવુ आगमन, मतम् મનાય છે माना जाता है ॥ ८७½ ॥

87-87½ The headache has returned again, there is a relapse of fever, the violent cough has reappeared, there is recurrence of vomiting such common

८६. यया युक्त्या–यथा युक्त्या (क)
८७½ प्रसिद्धवचनै –प्रसन्नैर्वचनै· (ड)

remarks show the recurrence of past diseases.

कालश्चायमतीतानामर्तीनां पुनरागतः ॥८८॥
तमर्तिकालमुद्दिश्य भेषजं यत् प्रयुज्यते ।
अतीतानां प्रशमनं वेदनानां तदुच्यते ॥८९॥

अतीतानाम् च અને ભૂતકાળની और भूतकालीन, अर्तीनाम् વેદનાઓનો वेदनाओंका, अयम् काल આ કાળ यह समय, पुनः ફરીને फिर, आगत આવ્યો आ गया, तम् ते उस, अर्तिकालम् પીડાના કાળને वेदनाके कालको, उद्दिश्य લક્ષમાં રાખીને लक्ष्य करके, यत् જે जो, भेषजम् ઔષધ औषध, प्रयुज्यते યોજાય છે प्रयुक्त होती है, तत् તે वह, अतीतानाम् અતીત अतीत, वेदनानाम् વેદનાઓનું वेदनाओंकी, प्रशमनम् પ્રશમન કરનાર शमन करनेवाली, उच्यते કહેવાય છે कहाती है ॥ ८८-८९ ॥

88-89 The time of relapse of these subjugated diseases has approached. Therefore treatment which is given keeping in view the period of relapse of a disease is to be understood as the therapeutics of past ailment.

आपस्ताः पुनरागुर्मा याभिः शस्यं पुरा हतम् ।
यथा प्रक्रियते सेतुः प्रतिकर्म तथाऽऽश्रये ॥९०॥

याभि જે પાણીથી जिस जलसे, पुरा પૂર્વે पहिले, शस्यम् અનાજનો પાક शस्य, हतम् નાશ પામ્યો હતો नष्ट हुआ था, ताः તે वह, आपः પાણી जल, पुनः ફરીને फिर, मा आगुः ન આવે न आजाये, यथा એ માટે જેવી રીતે इसलिए जैसे, सेतुः પાળ बाध, प्रक्रियते બાંધવામાં આવે છે बाध किया जाता है, तथा તેવી રીતે वैसे ही, आश्रये શરીરમાં शरीरमें, प्रतिकर्म ચિકિત્સા કરવામાં આવે છે चिकित्सा की जाती है ॥९०॥

90. Just as a dam is raised so that the floods may not destroy the crops as they did during a previous season so is treatment in the body.

पूर्वरूपं विकाराणां दृष्ट्वा प्रादुर्भविष्यताम् ।
या क्रिया क्रियते सा च वेदनां हन्त्यनागताम्॥९१॥

प्रादुर्भविष्यताम् ઉત્પન્ન થનારા उत्पन्न होनेवाली, विकाराणाम् વ્યાધિઓનું व्याधियोंका, पूर्वरूपम् પૂર્વરૂપ पूर्वरूप, दृष्ट्वा જોઈને देख कर, या જે जो, क्रिया ચિકિત્સા चिकित्सा, क्रियते કરવામાં આવે છે की जाती है, सा च તે वह, अनागताम् ભાવી भविष्यत्, वेदनाम् વેદનાને व्याधिको, हन्ति હણે છે नष्ट करती है ॥ ९१ ॥

91. Having in mind the past symptoms, prophylactic measures taken, in view of future symptoms, will avert disease.

पारंपर्यानुबन्धस्तु दुःखानां विनिवर्तते ।
सुखहेतूपचारेण सुखं चापि प्रवर्तते ॥९२॥

सुख- સુખકર सुखके, हेतु- હેતુના कारणोंके, उपचारेण સેવનથી सेवनसे, दुःखानाम् દુઃખોનો दुःखोंका, पारंपर्य પ્રવાહરૂપે प्रवाहरूपसे, अनुबन्धः અનુબન્ધ अनुबन्ध, तु તો तो, विनिवर्तते અટકી જાય છે निवृत्त होता है, सुखम् च अपि અને સુખની और सुखकी, प्रवर्तते પ્રવૃત્તિ થાય છે प्रवृत्ति होती है ॥ ९२ ॥

92. The use of whatsoever promotes well-being, stops the causal chain of suffering, and induces happiness

न समा यान्ति वैषम्यं विषमाः समतां न च ।
हेतुभिः सदृशा नित्यं जायन्ते देहधातवः ॥९३॥

समाः સમ ધાતુઓ समान धातुएं, वैषम्यम् વિષમતાને विषमताको, न પામતા નથી प्राप्त नहीं होती, विषमा च અને વિષમ ધાતુઓ और विषम धातुएं, समताम् સમતાને समताको, न यान्ति પામતા નથી प्राप्त नहीं होती, देहधातवः દેહના ધાતુઓ देहकी धातुएं, नित्यम् હમેશાં सदा, हेतुभिः હેતુઓની

८९. तमर्तिकालमुद्दिश्य–तमार्तिकालमुद्दिश्य (ज)

कारणोंके, सदृशाः સમાન समान, जायन्ते ઉત્પન્ન થાય છે उत्पन्न होती हैं ॥ ९३ ॥

93. No discord can ensue from harmonious elements, nor any concord from discordant elements; from like causes, like effects are always produced in the body-element.

**युक्तिमेतां पुरस्कृत्य त्रिकालां वेदनां भिषक् ।**
**हन्तीत्युक्तं चिकित्सा तु नैष्ठिकी या विनोपधाम्॥९४॥**

एताम् આ इस, युक्तिम् યુક્તિને युक्तिको, पुरस्कृत्य અનુસરીને आगे करके, भिषक् વૈદ્ય वैद्य, त्रिकालाम् ત્રણે કાળની तीनों कालकी, वेदनाम् વેદનાને वेदनाको, हन्ति હણે છે नष्ट करता है, इति એમ ऐसा, उक्तम् કહ્યું છે कहा है, उपधाम् તૃષ્ણા तृष्णासे, विना વિનાની रहित, या चिकित्सा જે ચિકિત્સા થાય છે તે जो चिकित्सा होती है वह, तु તો तो, नैष्ठिकी મોક્ષ આપનારી છે मोक्ष देनेवाली है ॥ ९४ ॥

94 It is for such reasons as set forth above, that the physician is said to remove all disease, whether past, present or future. That is the supreme therapeusis which is devoid of passions.

**उपधा हि परो हेतुर्दुःखदुःखाश्रयप्रदः ।**
**त्यागः सर्वोपधानां च सर्वदुःखव्यपोहकः ॥९५॥**

हि કેમકે क्योंकि, उपधा તૃષ્ણા तृष्णा, दु.ख- દુ ખ दु.ख, दुःखाश्रयप्रदः અને દુઃખના આશ્રયરૂપ શરીર આપનાર और दुःखके आश्रयरूप शरीरको देनेवाला, परः પ્રધાન मूल, हेतुः કારણ છે कारण है, सर्व- અને સર્વ और सब, उपधानाम् च તૃષ્ણાઓનો तृष्णाओंका, त्यागः ત્યાગ त्याग, सर्वदुःख- બધાં દુ.ખનો सब दुःखोंका, व्यपोहकः નાશક છે नाशक है ॥ ९५ ॥

95. For, the passions are the cause of suffering and are the producers of pain and its resort, the body. The renunciation of all passions is the means of removing all miseries.

**कोषकारो यथा ह्यंशूनुपादत्ते वधप्रदान् ।**
**उपादत्ते तथाऽर्थेभ्यस्तृष्णामज्ञः सदाऽऽतुरः ॥९६॥**

यथा हि જેવી રીતે जैसे, कोषकारः રેશમનો કીડો रेशमका कीडा, वधप्रदान् પોતાને મૃત્યુપ્રદ अपने मृत्युकारक, अंशून् રેસાઓને रेशोंको, उपादत्ते ઉત્પન્ન કરે છે उत्पन्न करता है, तथा તેવી રીતે वैसे ही, अज्ञः અજ્ઞાની માણસ अज्ञानी मनुष्य, अर्थेभ्यः વિષયથી विषयोंसे, तृष्णाम् તૃષ્ણાને तृष्णाको, उपादत्ते ઉત્પન્ન કરી લે છે उत्पन्न कर लेता है, सदा અને તેથી સદાય और इससे सदा, आतुर. દુઃખી રહે છે दुःखी रहता है ॥ ९६ ॥

96. Just as the silk-worm builds its own tomb, the cocoon, similarly the ignorant wordling clings to the thirst for sense-objects and is ever miserable.

**यस्त्वग्निकल्पानर्थाञ् ज्ञो ज्ञात्वा तेभ्यो निवर्तते ।**
**अनारम्भादसंयोगात्तं दुःखं नोपतिष्ठते ॥९७॥**

य. જે जो, ज्ञः જ્ઞાની મનુષ્ય ज्ञानी मनुष्य, तु તો तो, अर्थान् વિષયોને विषयोंको, अग्निकल्पान् અગ્નિતુલ્ય अग्निसमान, ज्ञात्वा જાણીને जान कर, तेभ्यः તેઓથી उनसे, निवर्तते નિવૃત્ત થાય છે निवृत्त होता है, तम् તેને उसको, अनारम्भात् કર્મો નહિ કરવાથી कर्मोंके न करनेसे, असंयोगात् અને તેથી જ શરીરનો સંયોગ ન થવાને લીધે और इससे ही शरीरका संयोग न होनेके कारण, दुःखम् દુઃખ दुःख, न उपतिष्ठते પ્રાપ્ત થતું જ નથી प्राप्त नहीं होता ॥ ९७ ॥

97. The wise one, who, viewing sense-objects like fire, withdraws from them, is not touched by pain, by reason of abstention from action and attachment.

९४. उक्तं—उक्ता (ध.)
,, तु—सा (छ.)

९६. वधप्रदान्—वधावहान् (ध.)

दुःखहेतवः—

**धीधृतिस्मृतिविभ्रंशः संप्राप्तिः कालकर्मणाम् ।**
**असात्म्यार्थागमश्चेति ज्ञातव्या दुःखहेतवः ॥९८॥**

धी- બુદ્ધિ बुद्धि, धृति- ધૈર્ય धृति, स्मृति- અને સ્મૃતિનો और स्मृतिका, विभ्रश નાશ विभ्रंश, काल- કાલ- काल, कर्मणाम् અને કર્મની और कर्मोंकी, संप्राप्ति- સંપ્રાપ્તિ सम्प्राप्ति, असात्म्य- તથા અસાત્મ્ય और असात्म्य, अर्थ- ઇન્દ્રિયાર્થનો इन्द्रियार्थका, आगम- च સંયોગ संयोग, इति એઓને इनको, दुःखहेतव- દુ.ખના હેતુઓ दुःखके कारण, ज्ञातव्याः જાણવાં जानना चाहिए ॥९८॥

98 The derangement of the understanding, will and memory, the onset of adverse season and effect of past-action, and contact with unwholesome sense-objects—these should be known as the causes of suffering.

बुद्धिविभ्रशस्य वर्णनम्—

**विषमाभिनिवेशो यो नित्यानित्ये हिताहिते ।**
**ज्ञेयः स बुद्धिविभ्रंशः समं बुद्धिर्हि पश्यति ॥९९॥**

नित्यानित्ये નિત્ય અને અનિત્યમાં नित्य- अनित्यमें, हिताहिते હિત અને અહિતમાં और हित- अहितमें, यः જે जो, विषम- વિષમ विषम, अभिनिवेशः નિશ્ચય निश्चय, सः તેને उसे, बुद्धिविभ्रंश- બુદ્ધિનો વિભ્રંશ बुद्धिका विभ्रंश, ज्ञेय જાણવો जानना चाहिए, हि કારણકે क्योंकि, बुद्धि- બુદ્ધિ बुद्धि, समम् યથાર્થ यथार्थ, पश्यति જુએ છે देखती है ॥ ९९ ॥

99 That is called derangement of understanding whereby the eternal and the non-eternal, good and evil, are mistaken one for the other, for, true understanding always perceives rightly.

धृतिविभ्रशस्य वर्णनम्—

**विषयप्रवणं सत्त्वं धृतिभ्रंशान्न शक्यते ।**
**नियन्तुमहितादर्थाद्धृतिर्हि नियमात्मिका ॥१००॥**

धृतिभ्रंशात् ધૃતિના ભ્રંશને લઈને धृतिके भ्रंशसे, विषय- વિષયો તરફ विषयोंकी ओर, प्रवणम् ઢળતુ झुकाववाला, सत्त्वम् મન चित्त, अहितात् અહિત अहित, अर्थात् અર્થોમાંથી विषयोंसे, नियन्तुम् રોકી रोका, न शक्यते શકાતુ નથી नहीं जा सकता, हि કારણકે क्योंकि, धृतिः ધૃતિ धृति, नियमात्मिका નિયમન કરનારી છે नियन्त्रण करनेवाली है ॥ १०० ॥

100. In the event of the derangement of the will, the mind which is always reaching out for its objects, is incapable of being restrained from undesirable objects, for the will is the controller.

स्मृतिविभ्रंशस्य वर्णनम्—

**तत्त्वज्ञाने स्मृतिर्यस्य रजोमोहावृतात्मनः ।**
**भ्रश्यते स स्मृतिभ्रंशः स्मर्तव्यं हि स्मृतौ स्थितम् १०१**

रज.- मोह- રજોગુણ અને મોહથી रजोगुण और मोहसे, आवृतात्मन. આવૃત ચિત્તવાળા आवृत चित्तवाले, यस्य જે પુરુષની जिस पुरुषकी, स्मृति- સ્મૃતિ स्मृति, तत्त्वज्ञाने તત્ત્વજ્ઞાનથી तत्त्वज्ञानसे, भ्रश्यते ભ્રષ્ટ થાય છે भ्रष्ट होती है, स- તેનો તે उसका वह, स्मृतिभ्रंशः સ્મૃતિભ્રંશ કહેવાય છે स्मृतिभ्रंश कहाता है, हि કારણકે क्योंकि, स्मर्तव्यम् સ્મરણ કરવા યોગ્ય વસ્તુ स्मरण करने योग्य वस्तु, स्मृतौ સ્મૃતિમાં स्मृतिमें, स्थितम् રહેલ હોય છે आश्रित होती है ॥ १०१ ॥

101. When on account of the mind being clouded with passion and delusion, the retention of true knowledge is destroyed that is called the derangement of memory; for, indeed the memorable abides in the memory.

प्रज्ञापराधस्य वर्णनम्—

**धीधृतिस्मृतिविभ्रष्टः कर्म यत् कुरुतेऽशुभम् ।**

९९ समं बुद्धिर्हि पश्यति—स शत्रुर्हि विपश्चितः (प)
१००. प्रवण—प्रवल (द)
,, सत्त्वं—चित्त (क, ष, ङ)
१०१. तत्त्वज्ञाने—तत्त्वज्ञानात् (छ)
,, स्मृतौ स्थितम्—स्मृतौ हितम् (प.)

**प्रज्ञापराधं तं विद्यात् सर्वदोषप्रकोपणम् ॥१०२॥**

धी- બુદ્ધિ बुद्धि, धृति- ધૈર્ય धृति, स्मृति- અને સ્મૃતિથી और स्मृतिसे, विभ्रष्ट- ભ્રષ્ટ થયેલ માણસ भ्रष्ट हुआ पुरुष, यत् જે जो, अशुभम् અશુભ अशुभ, कर्म કર્મ कर्म, कुरुते કરે છે करता है, तम् તેને उसे, सर्वदोष- સર્વ દોષનો सव दोषका, प्रकोपणम् પ્રકોપ કરનાર प्रकोप करनेवाला, प्रज्ञापराधम् પ્રજ્ઞાપરાધ प्रज्ञापराध, विद्यात् જાણવો जानना चाहिए ॥१०२॥

102. Whatever act is done by one who is deranged of understanding, will or memory, is to be regarded as volitional transgression. It is the inducer of all pathological conditions.

**उदीरणं गतिमतामुदीर्णानां च निग्रहः ।**
**सेवनं साहसानां च नारीणां चातिसेवनम् ॥१०३॥**
**कर्मकालातिपातश्च मिथ्यारम्भश्च कर्मणाम् ।**
**विनयाचारलोपश्च पूज्यानां चाभिधर्षणम् ॥१०४॥**
**ज्ञातानां स्वयमर्थानामहितानां निषेवणम् ।**
**परमौन्मादिकानां च प्रत्ययानां निषेवणम् ॥१०५॥**
**अकालदेशसंचारौ मैत्री संक्लिष्टकर्मभि ।**
**इन्द्रियोपक्रमोक्तस्य सद्वृत्तस्य च वर्जनम् ॥१०६॥**
**ईर्ष्यामानभयक्रोधलोभमोहमदभ्रमाः ।**
**तज्जं वा कर्म यत् क्लिष्टं क्लिष्टं यद्देहकर्म च ॥१०७॥**
**यच्चान्यदीदृशं कर्म रजोमोहसमुत्थितम् ।**
**प्रज्ञापराधं तं शिष्टा ब्रुवते व्याधिकारणम् ॥१०८॥**

गतिमताम् ગતિમાન મલમૂત્રાદિ ભાવોને गतिमान मलमूत्रादि भावोंको, उदीरणम् બળથી પ્રવૃત્ત કરવા बलसे प्रवृत्त करना, उदीर्णानाम् ઉપસ્થિત વેગોને उपस्थित वेगोंको, निग्रहः च રોકવા रोकना, साहसानाम् સાહસોનું साहसोंका, सेवनम् च સેવન सेवन, नारीणाम् સ્ત્રીઓનો स्त्रियोंका, अतिसेवनम् च અત્યંત સંગ अति सेवन, कर्मकाल- કર્મના કાલને क्रियाकालका, अतिपातः च જતો કરવો अतिवर्तन, कर्मणाम् કર્મોનો कर्मोंका, मिथ्या- મિથ્યા मिथ्या रूपमें, आरम्भः च આરંભ आरंभ, विनय- વિનય विनय, आचार- અને શિષ્ટાચારનો और शिष्टाचारका, लोप- च લોપ लोप, पूज्यानाम् પૂજ્યોનું पूज्योंका, अभिधर्षणम् च અપમાન अपमान, स्वयम् પોતે स्वयं, ज्ञातानाम् જાણેલા जानते हुए भी, अहितानाम् અહિત अहित, अर्थानाम् વિષયોનું विषयोंका, निषेवणम् સેવન सेवन, औन्मादिकानाम् ઉન્માદકારક उन्माद-कारक, प्रत्ययानाम् કારણોનું हेतुओंका, परम् अति अत्यंत, निषेवणम् च સેવન सेवन, अकाल- निषिद्ध સમયમાં निषिद्ध समयमें, अदेश- અને निषिद्ध દેશમાં और निषिद्ध देशमें, संचारौ ફરવું घूमना, संक्लिष्टकर्मभि પાપીઓ સાથે निन्दित कर्म करनेवालोंके साथ, मैत्री મિત્રાચારી मैत्री, इन्द्रियोपक्रम- ઇન્દ્રિયો-પક્રમણીય અધ્યાયમાં इन्द्रियोपक्रमणीय अध्यायमें, उक्तस्य કહેલા कहे हुए, सद्- वृत्तस्य સદાચારનો सद्वृत्तोंका, वर्जनम् च ત્યાગ त्याग, ईर्ष्या ઈર્ષ્યા ईर्ष्या, मान- અભિમાન अभिमान, भय- ભય भय, क्रोध- ક્રોધ क्रोध, लोभ- લોભ लोभ, मोह- મોહ मोह, मद- મદ मद, भ्रमा ભ્રમ भ्रम, तज्जम् અથવા તેઓમાંથી ઉત્પન્ન થતુ अथवा इनसे उत्पन्न, यत् જે जो, क्लिष्टम् निन्दित निन्दित, कर्म वा કર્મ कर्म, यत् જે जो, क्लिष्टम् निन्दित निन्दित, देहकर्म च શારીરિક કર્મ शारीरिक कर्म, रज- અને રજોગુણ और रज, मोह- तथा મોહથી तथा मोहसे, समुत्थितम् ઉત્પન્ન થયેલું उत्पन्न, यत् अन्यत् જે બીજું अन्य जो, ईदृशम् આવી જાતનું ऐसा, कर्म च કર્મ હોય कर्म हो, तम् તેને उसे, शिष्टाः શિષ્ટ લોકો शिष्ट पुरुष, व्याधिकारणम् વ્યાધિના કારણ-રૂપ रोगोंका कारणरूप, प्रज्ञापराधम् પ્રજ્ઞાપરાધ प्रज्ञापराध, ब्रुवते કહે છે कहते हैं ॥ १०३-१०८ ॥

103-108 Premature expulsion of excreta or the suppression of natural urges, indulgence in rash acts, over-indulgence in women, procrastination of treatment, wrongful undertaking

१०५. परमौन्मादिकाना--पचौन्मादिकानां (थ)
१०७. भयक्रोध--मदक्रोध (ध.)
,, क्लिष्टं यद्देहकर्म च--यद्वा तद्देहकर्म च (ध.)
१०८ व्याधिकारणम्--व्याधिकारिणम् (ज. ध.)

of actions, disregard of modesty and custom, disrespect towards the venerable, indulgence in things which one knows to be harmful or highly intoxicating, moving at improper times and in improper places, friendship with evil doers, the abandoning of the good habits inculcated in the chapter on the regimentation of the senses, envy, pride, fear, anger, greed, folly, arrogance, delusion, or injurious acts emanating from these, or any act that is harmful to the body, or any similar act arising out of passion and delusion—all these are said by the sages to be volitional transgressions causative of disease

बुद्ध्या विषमविज्ञानं विषमं च प्रवर्तनम् ।
प्रज्ञापराधं जानीयान्मनसो गोचरं हि तत् ॥१०९॥

बुद्ध्या બુદ્ધિથી बुद्धिसे, विषम- અનુચિત विषम, विज्ञानम् વિજ્ઞાન विज्ञान, विषमम् च અને અનુચિત और अनुचित, प्रवर्तनम् પ્રવૃત્તિને प्रवृत्तिको, प्रज्ञापराधम् પ્રજ્ઞાપરાધ प्रज्ञापराध, जानीयात् જાણવો जाने, हि કારણકે क्योंकि, तत् તે વિષમજ્ઞાન અને વિષમ પ્રવૃત્તિ वे विषमज्ञान और विषम प्रवृत्ति, मनस મનના मनके गोचरम् વિષય છે विषय है ॥ १०९ ॥

109 Misconception by the intellect, and misconduct are to be understood as volitional transgression because they come under the ken of the mind.

व्याधिहेतोः कालस्य वर्णनम्—

निर्दिष्टा कालसंप्राप्तिर्व्याधीनां व्याधिसंग्रहे ।
चयप्रकोपप्रशमाः पित्तादीनां यथा पुरा ॥११०॥

यथा જેવી રીતે जैसे, पुरा પૂર્વે पहिले, व्याधिसंग्रहे કિયન્તઃશિરસીય અધ્યાયમાં कियन्तःशिरसीय अध्यायमें, पित्तादीनाम् પિત્તાદિકના पित्तादि दोषोंके, चय- સંચય सञ्चय, प्रकोप- પ્રકોપ प्रकोप, प्रशमा તથા પ્રશમ કહેલા છે और प्रशम कहे है, व्याधीनाम् તેવી રીતે રોગોની उसी प्रकार रोगोंकी, कालसंप्राप्ति કાલસંપ્રાપ્તિ कालसप्राप्ति, निर्दिष्टा કહેલી છે कह दी है ॥ ११० ॥

110. In the chapter on the Compendium of diseases, we have already laid down the periodicity and incidence of disease and also the accumulation, irritation and subsidence of pitta and other humors, in due order.

मिथ्यातिहीनलिङ्गाश्च वर्षान्ता रोगहेतवः ।
जीर्णभुक्तप्रजीर्णान्नकालाकालस्थितिश्च या ॥१११॥
पूर्वमध्यापराह्णाश्च रात्र्या यामास्त्रयश्च ये ।
एषु कालेषु नियता ये रोगास्ते च कालजाः ॥११२॥

रोगहेतव રોગના હેતુરૂપ रोगके हेतुरूप, मिथ्या- મિથ્યા मिथ्या, अति- અતિ अति, हीन- અને હીન और हीन, लिङ्गाः લક્ષણવાળી लक्षणयुक्त, वर्षान्ता च શરદથી વર્ષા સુધીની જે છ ઋતુઓ शरदसे वर्षापर्यन्त जो छ ऋतु, जीर्ण- જીર્ણ जीर्ण, भुक्त- ભુક્ત भुक्त, प्रजीर्ण- અને પ્રજીર્ણ और पच्यमान, अन्न- અન્નના अन्नके, काल- કાલ काल, अकाल- અને અકાળનો और अकालका, या स्थितिः च જે નિયમ जो नियम, पूर्वमध्यापराह्णा च પૂર્વાહ્ણ, મધ્યાહ્ન અને અપરાહ્ણ એ દિવસના જે ત્રણ ભાગો पूर्वाह्ण, मध्याह्न और अपराह्ण ये दिनके जो तीन भागों रात्र्याः તથા પૂર્વરાત્ર, મધ્યરાત્ર અને અપરરાત્ર એ રાત્રિના तथा पूर्वरात्र मध्यरात्र और अपररात्र ये रात्रिके, ये જે जो, त्रयः ત્રણ तीन, यामा च ભાગ भाग, एषु એ इन, कालेषु કાલોમાં कालोंमें, ये જે जो, रोगा રોગો रोग, नियताः નિયત છે नियत हैं, ते च તેઓ वे, कालजा. કાલજન્ય છે कालजन्य है ॥ १११-११२ ॥

'११० व्याधिसंग्रहे-हेतुसंग्रहे (ष.)

१११ जीर्णभुक्तप्रजीर्णान्नकाला-भुक्तजीर्णप्रजीर्णप्रकाला (ष.)

111-112. Also the causes of diseases coming under the categories of unusual, extreme and subnormal seasonal variations; the right and wrong time for food to be taken, digested or assimilated; the forenoon, midday, and afternoon and the three periods of the night; and the diseases which occur at these stated times—all these are periodical diseases.

अन्येद्युष्को द्व्यहग्राही तृतीयकचतुर्थकौ ।
स्वे स्वे काले प्रवर्तन्ते काले ह्येषां बलागमः ॥११३॥

अन्येद्युष्क અન્યેદ્યુષ્ક अन्येद्युष्क, द्व्यहग्राही દ્વ્યહગ્રાહી द्व्यहग्राही, तृतीयक- चतुर्थकौ तृतीयક અને ચતુર્થક तृतीयक और चतुर्थक, स्वे स्वे પોતપોતાના अपने अपने, काले કાળે कालमें, प्रवर्तन्ते પ્રવર્તે છે प्रवृत्त होते है, काले हि પોતપોતાને કાળેજ अपने अपने कालमेंही, एषाम् એઓને इनको, बलागम બળની પ્રાપ્તિ થાય છે बलकी प्राप्ति होती है ॥ ११३ ॥

113 The fevers that recur on alternate days or the third and fourth days, are all periodical, for at stated intervals they become active.

एते चान्ये च ये केचित् कालजा विविधा गदाः ।
अनागते चिकित्स्यास्ते बलकालौ विजानता ॥११४॥

एते च આ ये, अन्ये च અને બીજા और अन्य, ये केचित् જે કેટલાક जो कोई कालजाः કાલજન્ય कालजन्य, विविधाः વિવિધ विविध, गदाः રોગો છે रोग हैं, ते ते वे, बलकालौ બલ તથા કાલ बल तथा कालको, विजानता જાણનાર વૈદ્યથી जाननेवाले वैद्यको, अनागते ઉપસ્થિત થયા પહેલાં आगमनसे पूर्व, चिकित्स्या. ચિકિત્સા કરવા યોગ્ય છે चिकित्सा करने योग्य हैं ॥ ११४ ॥

114. These and other maladies of various kinds, which are periodic in their occurrence, are to be treated by the physician who is conversant with their intensity and periodicity, before they actually manifest themselves.

कालस्य परिणामेन जरामृत्युनिमित्तजाः ।
रोगाः स्वाभाविका दृष्टाः स्वभावो निष्प्रतिक्रियः ११५

कालस्य કાળના कालके, परिणामेन પરિણામથી परिणामसे, जरा- વૃદ્ધાવસ્થા जरा, मृत्यु- અને મૃત્યુના और मृत्युके, निमित्तजा નિમિત્તથી ઉત્પન્ન થયેલા कारणसे उत्पन्न, रोगा રોગો रोग, स्वाभाविकाः સ્વાભાવિક स्वाभाविक, दृष्टा માન્યા છે देखे है स्वभाव સ્વભાવની और स्वभावका, निष्प्रतिक्रिय પ્રતિક્રિયા થઈ શકતી નથી प्रतिकार नहीं हो सकता ॥ ११५ ॥

115. Those infirmities which come about in the natural course of time, as the result of senility and completion of the life-span, are to be regarded as natural or terminal conditions and are irremediable.

निर्दिष्टं दैवशब्देन कर्म यत् पौर्वदेहिकम् ।
हेतुस्तदपि कालेन रोगाणामुपलभ्यते ॥११६॥

पौर्वदेहिकम् પૂર્વદેહનું पूर्वदेहमें किया हुआ, कर्म કર્મ कर्म, यत् જે जो, दैवशब्देन દૈવ શબ્દથી दैव शब्दसे निर्दिष्टम् કહેવાય છે कहा जाता है, तत् તે वह, अपि પણ भी, कालेन કાળે કરીને कालसे, रोगाणाम् રોગોનો रोगोंका, हेतुः હેતુ हेतु, उपलभ्यते જણાય છે देखा जाता है ॥ ११६ ॥

116. The influence of actions done in the past birth, known as destiny, is also seen in the fulness of time to be a causative factor of disease

व्याधिहेतोः कर्मणो वर्णनम्—

न हि कर्म महत् किञ्चित् फलं यस्य न भुज्यते ।
क्रियाघ्नाः कर्मजा रोगाः प्रशमं यान्ति तत्क्षयात् ११७

किंचित् એવુ કોઈ ऐसा कोई, महत् મોટુ महान्, कर्म કર્મ कर्म, न हि નથી नहीं, यस्य જેનુ जिसका, फलम् ફળ फल, न ન नहीं, भुज्यते ભોગવાય भोगा जाता हो, कर्मजा કર્મજન્ય कर्मज, रोगाः રોગો रोग, क्रियाघ्ना ચિકિત્સાને હણનારા છે क्रियाके नाशक है, तत्क्षयात् અને તે કર્મના ક્ષયથી और उस कर्मके क्षयसे, प्रशमम् यान्ति શાંત થાય છે शांत होते हैं ॥ ११७ ॥

117. There is no action, worth the name, which does not produce a result, the diseases brought on by past actions, counteract the treatment and end only when the force of those actions is spent out

असात्म्येन्द्रियार्थसंयोगस्य वर्णनम्—

**अत्युग्रशब्दश्रवणाच्छ्रवणात् सर्वशो न च ।**
**शब्दानां चातिहीनानां भवन्ति श्रवणाज्जडाः ॥११८॥**

अत्युग्र- અતિશય ઉગ્ર अति उग्र, शब्द- શબ્દ शब्दका, श्रवणात् સાંભળવાથી सुननेसे, सर्वशः સર્વથા सर्वथा, न ન न, श्रवणात् च સાંભળવાથી सुननेसे, अतिहीनानाम् અને અતિ ધીમા और अति धीमे, शब्दानाम् શબ્દોને शब्दोंको, श्रवणात् च સાંભળવાથી सुननेसे, जडाः લોકો બહેરા मनुष्य बहेरे, भवन्ति થાય છે हो जाते है ॥ ११८ ॥

118 By the hearing of very loud sounds or by the total avoidance of all sounds or by straining the ear to catch very low sounds, the sense of audition becomes impaired

**परुषोद्भीषणाशस्ताप्रियव्यसनसूचकैः ।**
**शब्दैः श्रवणसंयोगो मिथ्यासंयोग उच्यते ॥११९॥**

परुष- કઠોર कठोर, उद्भीषण- ભયકર भयकर, अशस्त- અશુભ अशुभ, अप्रिय- અપ્રિય अप्रिय, व्यसन- અને વિપત્તિને और विपत्तिके, सूचकैः સૂચવનારા सूचक, शब्दैः शब्दो साथे शब्दोंके साथ, श्रवणसंयोग. કાનનો સયોગ कानका सयोग, मिथ्यासयोग. મિથ્યાયોગ मिथ्यायोग, उच्यते કહેવાય છે कहा जाता है ॥ ११९ ॥

119. To lend the ear to sounds which are harsh, alarming, vile, unpleasing or mournful is said to be the abuse of the auditory sense

**असंस्पर्शोऽतिसंस्पर्शो हीनसंस्पर्श एव च ।**
**स्पृश्यानां संग्रहेणोक्तः स्पर्शनेन्द्रियबाधकः ॥१२०॥**

स्पृश्यानाम् સ્પૃશ્ય ભાવોનો स्पृश्योंका, असंस्पर्शः સર્વથા સ્પર્શ ન કરવો सर्वथा अस्पर्श, अतिसंस्पर्श. અતિશય સ્પર્શ કરવો अतिस्पर्श, हीनसंस्पर्श च एव અને અલ્પ સ્પર્શ કરવો એ और अल्प स्पर्श, स्पर्शनेन्द्रिय- સ્પર્શનેન્દ્રિયનો स्पर्शनेन्द्रियका, बाधक બાધ કરનાર છે बाधक है, संग्रहेण એમ સક્ષેપમાં ऐसा सक्षेपमें, उक्त. કહ્યું છે कहा है ॥ १२० ॥

120 Absence, excess and insufficiency of contact with those objects that are to be contacted are, in short, said to be the abuse of the sense of touch.

**यो भूतविषवातानामकालेनागतश्च यः ।**
**स्नेहशीतोष्णसंस्पर्शो मिथ्यायोग. स उच्यते ॥१२१॥**

भूत- ભૂત भूत, विषवातानाम् તથા વિષવાતનો तथा विषवायुका, य જે સ્પર્શ जो स्पर्श, अकालेन અને અકાળે और अकालमें, आगत થયેલો प्राप्त, य. च જે जो, स्नेह- સ્નેહ स्नेह, शीत- શીત शीत, उष्ण- તથા ઉષ્ણનો एवं उष्णका, संस्पर्शः સ્પર્શ स्पर्श, स. તે वह, मिथ्यायोगः મિથ્યાયોગ मिथ्यायोग, उच्यते કહેવાય છે कहा जाता है ॥ १२१ ॥

121. Contact with evil spirits and poisonous winds or untimely damp, heat and cold, is said to be the abuse of touch.

११९ मिथ्यासयोग-मिथ्यायोग स (ज.)

रूपाणां भास्वतां दृष्टिर्विनश्यत्यतिदर्शनात् ।
दर्शनाच्चातिसूक्ष्माणां सर्वशश्चाप्यदर्शनात् ॥१२२॥
द्विष्टभैरवबीभत्सदूरातिश्लिष्टदर्शनात् ।
तामसानां च रूपाणां मिथ्यासंयोग उच्यते ॥१२३॥

भास्वताम् તેજસ્વી चमकीले, रूपाणाम् રૂપોને रूपोंके, अतिदर्शनात् અતિશય જોવાથી अतिशय दर्शनसे अतिसूक्ष्माणाम् અતિ સૂક્ષ્મ રૂપોને अति सूक्ष्म रूपोंके, दर्शनात् च જોવાથી दर्शनसे, सर्वशः સર્વથા सर्वथा, अदर्शनात् च अपि તેજસ્વી અને અતિ સૂક્ષ્મ રૂપ ન જોવાથી चमकीला और अति सूक्ष्म रूप न देखनेसे, दृष्टिः દૃષ્ટિ दृष्टि, विनश्यति નાશ પામે છે नष्ट होती है, द्विष्ट- અપ્રિય अप्रिय, भैरव- ભયકર डरावने, बीभत्स- ઘૃણાજનક घृणाजनक, दूर- દૂરનાં अति दूरके, अतिश्लिष्ट- અને અતિ સમીપનાં और अति समीपके, दर्शनात् રૂપોના દર્શનથી रूपोंको देखनेसे, तामसानाम् તેમજ તામસ एवं तामस, रूपाणाम् च રૂપોના દર્શનથી દૃષ્ટિ નાશ પામે છે रूपोंको देखनेसे दृष्टि नष्ट होती है, मिथ्यासंयोग દ્વિષ્ટ વગેરે રૂપોનું તથા અતિ સૂક્ષ્મ રૂપનું દર્શન મિથ્યાયોગ द्विष्ट आदि रूपोंको तथा अति सूक्ष्म रूपको देखना मिथ्यायोग, उच्यते કહેવાય છે कहा जाता है ॥१२२-१२३॥

122-123 By the excessive gazing at glaring objects, or by looking for very minute objects, or by never seeing them at all, the sense of vision is destroyed. The seeing of hateful, terrifying, disgusting, distant or too close or obscure objects is said to be abuse of the visual organ.

अत्यादानमनादानमोकसात्म्यादिभिश्च यत् ।
रसानां विषमादानमल्पादानं च दूषणम् ॥१२४॥

रसानाम् રસોનું रसोंका, अत्यादानम् અતિ ગ્રહણ કરવું अति अधिक लेना, अनादानम् સર્વથા ન ગ્રહણ કરવું सर्वथा न लेना, ओकसात्म्यादिभि च અને ઓકસાત્મ્યાદિથી और ओकसात्म्यादिसे, यत् જે जो, विषमादानम् વિરુદ્ધ રસોનું ગ્રહણ કરવું विरुद्ध रसोंका ग्रहण करना, अल्पादानम् च તથા અત્યત થોડા પ્રમાણમાં ગ્રહણ કરવું तथा अति अल्प ग्रहण करना, दूषणम् એ દૂષક છે यह दूषक है ॥ १२४॥

124 Epicurean indulgence, ascetic abstention and indulgence in tastes that are disagreeable to one's system although they are made homologatory by constant use etc., or very sparing indulgence in taste, are said to be abuse of the organ of taste.

अतिमृद्वतितीक्ष्णानां गन्धानामुपसेवनम् ।
असेवनं सर्वशश्च घ्राणेन्द्रियविनाशनम् ॥१२५॥
पूतिभूतविषद्विष्टा गन्धा ये चाप्यनार्तवाः ।
तैर्गन्धैर्घ्राणसंयोगो मिथ्यायोगः स उच्यते ॥१२६॥
इत्यसात्म्यार्थसंयोगस्त्रिविधो दोषकोपनः ।

अतिमृदु- અતિમૃદુ अतिमृदु, अतितीक्ष्णानाम् અને અતિતીક્ષ્ણ और अतितीक्ष्ण, गन्धानाम् ગંધોનું गन्धोंका, उपसेवनम् સેવન सेवन करना, सर्वशः તથા સર્વથા तथा सर्वथा, असेवनम् च અસેવન सेवन न करना, घ्राणेन्द्रिय- ઘ્રાણેન્દ્રિયને घ्राणेन्द्रियका, विनाशनम् નાશ કરે છે नाशक है, पूति- ખરાબ खराब, भूत- भूत સબધી भूत सम्बन्धी, विष- વિષ સબધી विषसम्बन्धी, द्विष्टाः અને અપ્રિય और अप्रिय, गन्धाः ગંધ गन्ध, ये च अपि तथा જે एवं जो, अनार्तवाः અકાલીન ગંધો अकालीन गन्ध, तैः તે उन, गन्धैः ગંધો સાથે गंधोंसे, घ्राणसंयोगः જે ઘ્રાણેન્દ્રિયનો સંયોગ जो नासिकाका संयोग, सः તે वह, मिथ्यायोग. મિથ્યાયોગ मिथ्यायोग, उच्यते કહેવાય છે कहा जाता है. इति આ यह, त्रिविधः ત્રણ પ્રકારના तीन प्रकारका, असात्म्य- अर्थ-संयोग અસાત્મ્ય વિષયનો સયોગ असात्म्य विषयका संयोग, दोषकोपन દોષોનો પ્રકોપ કરનાર છે दोषोंको प्रकुपित करनेवाला है ॥ १२५ १२६½॥

125-126½. The smelling of odors that are either too pungent or too

१२३. अतिश्लिष्टदर्शनात्-अतिक्लिष्टदर्शनात् (च.)

delicate, or the total avoidance of all smell, is said to be harmful to the organ of smell. The inhaling of smells that are putrid, polluted by evil spirits, poisons, gases or are unseasonal, is said to be abuse of the olfactory sense. Thus the non-homologous contact of the sense and the sense-object is to be regarded as threefold and provocative of all morbid conditions.

असात्म्यमिति तद्विद्याद्यन्न याति सहात्मताम् ॥१२७॥

यत् જે जो, सह- શરીરની સાથે शरीरके साथ, आत्मताम् એક રૂપ एक रूप, न याति નથી થતું नहीं होता, तत् તે वह, असात्म्यम् અસાત્મ્ય છે असात्म्य है, इति એમ ऐसा, विद्यात् જાણવું जानना चाहिए ॥ १२७ ॥

127. That is improper co-ordination which does not agree with one's system

मिथ्यातिहीनयोगेभ्यो यो व्याधिरुपजायते ।
शब्दादीनां स विज्ञेयो व्याधिरैन्द्रियको बुधैः ॥१२८॥

शब्दादीनाम् શબ્દાદિકના शब्दादिक विषयोंके, मिथ्या- મિથ્યા मिथ्या, अति- અતિ अति, हीन- અને હીન और हीन, योगेभ्यः યોગથી योगोंसे, यः જે जो व्याधि રોગ व्याधि, उपजायते ઉત્પન્ન થાય છે उत्पन्न होती है, सः તે वह, व्याधि- રોગ व्याधि, बुधैः ડાહ્યા માણસોએ विद्वानोंको, ऐन्द्रियक ઇન્દ્રિયસંબંધી इन्द्रियसम्बन्धी, विज्ञेयः જાણવો जाननी चाहिए ॥१२८॥

128. Whatever disease of the ear etc, arises as the result of excessive, inadequate or non-contact of the sense and its objects is said to be the disease of the sense-organ.

वेदनानामशान्तानामित्येते हेतवः स्मृताः ।
सुखहेतुः समस्त्वेकः समयोगः सुदुर्लभः ॥१२९॥

इति આમ इस तरह, अशान्तानाम् દુઃખરૂપ दुःखरूप, वेदनानाम् વેદનાઓના वेदनाओंके, एते આ ये, हेतवः હેતુઓ हेतु, स्मृताः કહેલા છે कहे हैं, एकः એક एक, समः કાલ, બુદ્ધિ તથા વિષયનો સમયોગ काल, बुद्धि और विषयका समयोग, सुख-हेतुः આરોગ્યનો હેતુ છે आरोग्यका हेतु है, समयोगः સમયોગ समयोग, सुदुर्लभः અતિ દુર્લભ છે अति दुर्लभ है ॥ १२९ ॥

129 These are described to be the causative factors of painful sensations; the causative factor of pleasurable sensation is proper sense contact Such proper contact of the sense and its object is indeed difficult to achieve.

चतुर्विधयोगस्यैव सुखदुःखहेतुत्वम्—

नेन्द्रियाणि न चैवार्थाः सुखदुःखस्य हेतवः ।
हेतुस्तु सुखदुःखस्य योगो दृष्टश्चतुर्विधः ॥१३०॥

सुखदुःखस्य સુખદુઃખનાં सुखदुःखके, हेतवः કારણ कारण, इन्द्रियाणि ઇન્દ્રિયો इन्द्रियाँ, न નથી नहीं है, अर्थाः च અને વિષયો પણ और विषय भी, न एव નથી नहीं है, सुखदुःखस्य સુખદુઃખનું सुख-दुःखका, हेतुः કારણ कारण, तु તો तो, चतुर्विधः ચાર પ્રકારનો चार प्रकारका, योगः યોગ योग, दृष्टः મનાયો છે देखा गया है ॥ १३० ॥

130. It is neither the senses nor their objects that are the causes of pleasure and pain. The real cause of pleasure and pain is seen to be the four kinds of contact

सन्तीन्द्रियाणि सन्त्यर्था योगो न च न चास्ति रुक् ।

१२९. वेदनानामशान्ताना–वेदनानामसात्म्याना (क ग.च.ज.ट न थ ध प)

१३१. न च–नास्ति (च)

**न सुखं, कारणं तस्माद्योग एव चतुर्विधः ॥१३१॥**

इन्द्रियाणि ઇન્દ્રિયો इन्द्रियाँ, सन्ति છે हैं अर्थाः અને વિષયો પણ और विषय भी, सन्ति છે हैं, योगः પણ જો તેઓનો યોગ परन्तु यदि उनका योग, न च न હોય नहीं हो, रुक् च તો દુખ तो दुःख, न अस्ति નથી नहीं है, सुखम् न અને સુખ પણ નથી सुख भी नहीं है, तस्मात् માટે इसलिए, चतुर्विध ચતુર્વિધ चार प्रकारका, योगः યોગ योग, एव જ ही, कारणम् સુખદુઃખનુ કારણ છે सुखदुःखका कारण है ॥ १३१ ॥

131 Granting that there are the senses and the sense objects, if there is no co-ordination, there is neither pain nor pleasure, therefore the cause is the fourfold contact alone.

सुखदुःखहेतव —

**नात्मेन्द्रियं मनो बुद्धिं गोचरं कर्म वा विना ।**
**सुखदुःखं, यथा यच्च बोद्धव्यं तत्तथोच्यते ॥१३२॥**

आत्मा આત્મા आत्मा, इन्द्रियम् ઇન્દ્રિય इन्द्रिय, मन મન मन, बुद्धिम् બુદ્ધિ बुद्धि, गोचरम् ઇન્દ્રિયાર્થ विषय, कर्म वा કે કર્મ या कर्मके, विना વિના बिना, सुखदुःखम् સુખ તથા દુઃખ सुख तथा दुःख, न थतां નથી नहीं होते, यत् च જે जो, यथा જે પ્રકારે जिस प्रकारसे, बोद्धव्यम् જાણવામાં આવે છે जाना जाता है, तत् તે उसे, तथा તે પ્રકારે उसी प्रकार उच्यते કહેવામાં આવે છે कहा जाता है ॥ १३२ ॥

132 Without the self, the senses, the mind, the intellect, the object and the action, there can be no pleasure or pain. Each of these is defined in the manner in which it has to be understood

**स्पर्शनेन्द्रियसंस्पर्शः स्पर्शो मानस एव च ।**
**द्विविधः सुखदुःखानां वेदनानां प्रवर्तकः ॥१३३॥**

सुखदुःखानाम् સુખદુઃખરૂપ सुखदुःखरूप, वेदनानाम् વેદનાના वेदनाओंका, प्रवर्तक પ્રવર્તક प्रवर्तक, द्विविध. બે જાતના दो प्रकारका, स्पर्शः સ્પર્શ છે स्पर्श है, स्पर्शनेन्द्रिय- એક સ્પર્શનેન્દ્રિયનો एक स्पर्शनेन्द्रियका, संस्पर्श સ્પર્શ स्पर्श, मानसः एव च અને બીજો માનસ और दूसरा मानस, स्पर्शः સ્પર્શ स्पर्श ॥ १३३ ॥

133. The sense of touch in the skin and also the corresponding faculty in the mind are the dual cause which yields pleasurable and painful sensations

**इच्छाद्वेषात्मिका तृष्णा सुखदुःखात् प्रवर्तते ।**
**तृष्णा च सुखदुःखानां कारणं पुनरुच्यते ॥१३४॥**

सुखदुःखात् સુખ અને દુઃખથી सुख और दुःखसे, इच्छा-द्वेषात्मिका ઇચ્છા અને દ્વેષરૂપ इच्छा तथा द्वेषरूप, तृष्णा તૃષ્ણા तृष्णा, प्रवर्तते પ્રવૃત્ત થાય છે प्रवृत्त होती है, तृष्णा च पुन અને તૃષ્ણા और तृष्णा, सुखदुःखानाम् સુખદુઃખનું सुखदुःखका, कारणम् કારણ कारण, उच्यते કહેવાય છે कही जाती है ॥ १३४ ॥

134. Passion which is of the nature both of desire and hate, proceeds from pleasure and pain; again, passion is said to be the originator of pleasure and pain.

**उपादत्ते हि सा भावान् वेदनाश्रयसञ्ज्ञकान् ।**
**स्पृश्यते नानुपादाने नास्पृष्टो वेत्ति वेदनाः ॥१३५॥**

हि કારણકે क्योंकि, सा તે તૃષ્ણા यह तृष्णा, वेदनाश्रयसञ्ज्ञकान् વેદનાના આશ્રયરૂપ वेदनाओंके आश्रयरूप, भावान् ભાવોને भावोंको, उपादत्ते ગ્રહણ કરે છે ग्रहण करती है अनुपादाने ગ્રહણ વગર ग्रहणके बिना, न स्पृश्यते સ્પર્શ થતો નથી स्पर्श नहीं होता, अस्पृष्टः અને સ્પર્શ ન થવાથી और स्पर्श न होनेसे, वेदनाः મનુષ્ય વેદનાને मनुष्य वेदनाको, न નથી नही, वेत्ति જાણતો जानता ॥ १३५ ॥

---

१३२. नात्मेन्द्रियं मनो बुद्धिं गोचर—नात्मेन्द्रियमनोबुद्धिगोचर (ध.)

135. Desire it is, that acquires the apparatus of sensation; if there is no apparatus, there is no contact; and if unaffected by contact, one does not experience sensations.

वेदनानामधिष्ठानम्—

वेदनानामधिष्ठान मनो देहश्च सेन्द्रियः ।
केशलोमनखाग्रान्नमलद्रवगुणैर्विना ॥ १३६ ॥

केश- કેશ केश लोम- લોમ लोम, नखाग्र- નખાગ્ર नखाग्र, अन्न- અન્ન अन्न, मल- મળ मल, द्रव- દ્રવ द्रव, गुणं અને ગુણો और गुणोंको, विना વિના छोड़ कर, मन મન मन, सेन्द्रिय અને ઇન્દ્રિયયુક્ત और इन्द्रिय सहित, देह च શરીર शरीर, वेदनानाम् વેદનાઓનુ वेदनाओंका, अधिष्ठानम् આશ્રયસ્થાન છે आश्रय-स्थान है ॥ १३६ ॥

136 The apparatus of sensation is the mind and the body together with the sense-organs, with the exclusion of hair of the head and the body, the tips of the nails, the inges ted food, feces, excretory fluids and the sense-objects.

वेदनाना सर्वथा निवृत्तेरुपाय —

योगे मोक्षे च सर्वासां वेदनानामवर्तनम् ।
मोक्षे निवृत्तिर्निःशेषा योगो मोक्षप्रवर्तकः ॥१३७॥

योगे યોગમાં योगमें, मोक्षे च અને મોક્ષમાં और मोक्षमें, सर्वासाम् સર્વ सब, वेदनानाम् વેદનાઓની वेदनाएँ, अवर्तनम् નિવૃત્તિ થાય છે निवृत्त हो जाती है, मोक्षे મોક્ષમાં मोक्षमें नि शेषा નિ શેષ नि शेष, निवृत्ति નિવૃત્તિ થાય છે निवृत्त होती है, योग અને યોગ और योग, मोक्ष- મોક્ષનો मोक्षका, प्रवर्तक પ્રવર્તક છે प्रवर्तक है ॥ १३७ ॥

१३७ मोक्षे निवृत्तिर्नि शेषा योगो मोक्षप्रवर्तक —मक्षे निवृत्त- र्नि.शेषा योगमोक्षौ निवर्तकौ (प.)

137 Both in yoga (a state of meditation) and final liberation there is no existence of sensation; in final liberation there is absolute cessation, while yoga leads to that liberation

योगस्य लक्षणम्—

आत्मेन्द्रियमनोर्थानां सन्निकर्षात् प्रवर्तते ।
सुखदु खमनारम्भादात्मस्थे मनसि स्थिरे ॥१३८॥
निवर्तते तदुभयं वशित्वं चोपजायते ।
सशरीरस्य योगज्ञास्त योगमृषयो विदुः ॥ १३९ ॥

आत्मा- આત્મા आत्मा, इन्द्रिय- ઇન્દ્રિય इन्द्रिय, मन.- મન मन अर्थानाम् અને વિષયના और विषयोंके, सन्निकर्षात् સયોગથી सन्निकर्षमे सुखदु खम् સુખદુ.ખ सुखदु ख प्रवर्तते પ્રવર્તે છે प्रवृत्त होते हैं, मनसि મન मन, स्थिरे સ્થિર થઈ स्थिर हो कर, आत्मस्थे આત્મામાં સ્થિતિ કરે તો आत्मामें स्थिति करे तो, अनारम्भात् કોઈ કાર્યનો આરભ ન થવથી किसी कार्यका आरम्भ न होनेसे, तत ते वे, उभयम् બન્ને दोनों, निवर्तते નિવૃત્ત થાય છે निवृत्त होते हैं, सशरीरस्य च અને શરીરની સાથેજ और शरी के साथ ही, वशित्वम् મનુષ્યને વશિત્વ पुरुषको वशित्व, उपजायते પ્રાપ્ત થાય છે प्राप्त होता है योगज्ञा યોગ જાણનારા योग जाननेवाले, ऋषय. ઋષિઓ ऋषिलोग तम् તેને उसे, योगम् યોગ योग, विदु જાણે છે जानते है ॥ १३८-१३९ ॥

138-139. From the contact of the self, the senses the mind and the sense-objects arise pleasure and pain, these two cease to be, as the result of inaction of the mind which is firmly fixed in the self. Then while embodied, it acquires the psychic powers, and such a state, the Rishis who are conversant with yoga, know to be as yoga.

१३८ स्थिरे–स्थिते (थ

१३९ सशरीरस्य योगज्ञा - मन स्थिरत्व योगज्ञा (प.)

योगिनामष्टविधमैश्वर्यम्—

आवेशश्चेतसो ज्ञानमर्थानां छन्दतः क्रिया ।
दृष्टिः श्रोत्रं स्मृतिः कान्तिरिष्टतश्चाप्यदर्शनम् ॥१४०॥

इत्यष्टविधमाख्यातं योगिनां बलमैश्वरम् ।
शुद्धसत्त्वसमाधानात्तत् सर्वमुपजायते ॥ १४१ ॥

आवेशः પરકાયાપ્રવેશ परकायाप्रवेश, चेतस. બીજાના ચિત્તનું दूसरेके चित्तका ज्ञानम् જ્ઞાન ज्ञान, छन्दतः ઇચ્છા પ્રમાણે इच्छानुसार, अर्थानाम् કામોનુ कर्मोंका, क्रिया કરવુ करना, दृष्टि દિવ્ય દૃષ્ટિ दिव्य दृष्टि, श्रोत्रम् દિવ્ય શ્રોત્ર दिव्य श्रोत्र, स्मृतिः દિવ્ય સ્મૃતિ दिव्य स्मृति, कान्तिः દિવ્ય કાન્તિ दिव्य कान्ति, इष्टत. અને ઇચ્છાનુસાર और चाहने पर, अदर्शनम् अपि च અદશ્ય થવાની પણ શક્તિ अदृश्य होना, इति આ यह, अष्टविधम् આઠ પ્રકારનું आठ प्रकारका, योगिनाम् યોગીઓનુ योगियोंका, ऐश्वरम् ઐશ્વર્યકૃત ऐश्वर्यकृत, बलम् બળ बल, आख्यातम् કહ્યુ છે कहा है, शुद्ध- શુદ્ધ शुद्ध, सत्त्व મનની मनकी, समाधानात् આત્મામાં એકાગ્રતા કરવાથી आत्मामें एकाग्रता करनेसे, तत् તે वह, सर्वम् બધુ सब, उपजायते ઉત્પન્ન થાય છે उत्पन्न होता है ॥ १४०-१४१ ॥

140-141. The entering into other bodies, telepathy, the doing of things according to one's own will, clairvoyance, clairaudience, omniscience, effulgence, vanishing from sight at will — these eight are said to be the sovereign powers of the yogis. All this accrues from the concentration of the pure mind.

मोक्षस्य लक्षणम्—

मोक्षो रजस्तमोऽभावात् बलवत्कर्मसंक्षयात् ।
वियोगः सर्वसंयोगैरपुनर्भव उच्यते ॥ १४२ ॥

रजस्तमोऽभावात् રજોગુણ અને તમોગુણના અભાવથી रज और तमकी निवृत्ति होने पर, बलवत्कर्मसंक्षयात् બલવાન કર્મોના ક્ષયથી बलवान कर्मोंके क्षयसे, सर्वसंयोगैः સર્વ બંધનોથી सर्व संयोगोंसे, वियोग જે વિયોગ થાય છે जो वियोग होता है, मोक्षः તે મોક્ષ इसको मोक्ष अपुनर्भव. કે અપુનર્ભવ અથવા अपुनर्भव, उच्यते કહેવાય છે कहते हैं ॥ १४२ ॥

142. The final liberation without a return is said to be the dissolution of all ties resulting from the cessation of passion and delusion, and the wearing away of the influence of powerful past actions.

मोक्षस्य उपायाः —

सतामुपासनं सम्यगसतां परिवर्जनम् ।
व्रतचर्योपवासौ च नियमाश्च पृथग्विधाः ॥१४३॥

धारणं धर्मशास्त्राणां विज्ञानं विजने रतिः ।
विषयेष्वरतिर्मोक्षे व्यवसायः परा धृतिः ॥१४४॥

कर्मणामसमारम्भः कृतानां च परिक्षयः ।
नैष्कर्म्यमनहङ्कारः संयोगे भयदर्शनम् ॥ १४५ ॥

मनोबुद्धिसमाधानमर्थतत्त्वपरीक्षणम् ।
तत्त्वस्मृतेरुपस्थानात् सर्वमेतत् प्रवर्तते ॥१४६॥

सताम् સત્પુરુષોની सत्पुरुषोंका, सम्यक् સારી રીતે सम्यक्, उपासनम् ઉપાસના सेवन, असताम् દુર્જનોનો दुष्टोंका परिवर्जनम् ત્યાગ परित्याग व्रतचर्या- વ્રતચર્યા व्रतोंका पालन, उपवासौ च અને ઉપવાસ और उपवास, पृथग्विधा વિવિધ પ્રકારના नाना प्रकारके, नियमा च નિયમો नियम, धर्मशास्त्राणाम् ધર્મશાસ્ત્રોનો धर्मशास्त्रोंका, धारणम् અભ્યાસ अभ्यास, विज्ञानम् આત્મજ્ઞાન आत्मज्ञान, विजने એકાન્તમાં एकान्तवासमें, रति પ્રીતિ प्रीति, विषयेषु વિષયોમાં विषयोंमें, अरति

१४०. छन्दत. — कर्मत. (ध.)
१४२ वियोगः सर्वसंयोगै — वियोग. कर्मसंयोगै. (ग. च. ड.)

१४३ व्रतचर्योपवासौ च—व्रतचर्योपवासश्च (क ध ज)
" " —ब्रह्मचर्योपवासौ च (च)
" " —ब्रह्मचर्योपवासाश्च (द)
१४५. नैष्कर्म्यम्—नैष्कर्म्यम (च. त. थ)

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, शारीरस्थाने શારીરસ્થાનમાં शारीरस्थानमें, अतुल्यगोत्रीयम् शारीरम् 'અતુલ્યગોત્રીય શારીર' 'अतुल्यगोत्रीय शारीर' नाम નામનો नामका, द्वितीय બીજો दूसरा, अध्याय અધ્યાય સંપૂર્ણ થયો અધ્યાય समाप्त हुआ ॥ २ ॥

2 Thus in the section on the embodiment of man, in the treatise compiled by Agnivesa and revised by Caraka, the second chapter entitled "The exogamous union" is completed.

---

## तृतीयोऽध्यायः।

### ત્રીજો અધ્યાય अध्याय तीसरा

### Chapter III

खुड्डिकागर्भावक्रान्तिशारीरोपक्रमः —

**अथातः खुड्डिकां गर्भावक्रान्ति शारीरं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

अथ હવે અહીંથી अब आगे, खुड्डिकाम् गर्भावक्रान्तिम् शारीरम् 'ખુડ્ડિકાગર્ભાવક્રાંતિશારીર' નામના અધ્યાયનું 'खुड्डिकागर्भावक्रान्तिशारीर' नामके अध्यायका, व्याख्यास्याम વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, आत्रेय આત્રેયે आत्रेयने इति ह આ વિષયમાં નીચે પ્રમાણે જ उस विषयमें निम्न प्रकारसे ही, स्माह स કહેલું છે कहा है ॥ २ ॥

1 We shall now expound the minor chapter on the formation of the foetus in the section on the Human Embodiment.

2. Thus declared the worshipful Atreya.

गर्भस्याभिनिर्वृत्ते', अभिवृद्धेः, सुखप्रसवस्य च कारणम्, गर्भो हि मातृज पितृज, आत्मजो रसज सात्म्यजश्च, परलोकादेत्य सत्त्वं गर्भमवक्रामतीति आत्रेयकृता प्रतिज्ञा—

**पुरुषस्यानुपहतरेतसः स्त्रियाश्चाप्रदुष्टयोनिशोणितगर्भाशयाया यदा भवति संसर्गः ऋतुकाले, यदा चानयोस्तथायुक्ते संसर्गे शुक्रशोणितसंसर्गमन्तर्गर्भाशयगतं जीवोऽवक्रामति सत्त्वसंप्रयोगात्तदा गर्भोऽभिनिर्वर्तते,**

अनुपहत- દૂષણરહિત दोषरहित, रेतसः શુક્રવાળા शुक्रवाले, पुरुषस्य પુરુષનો पुरुषका, अप्रदुष्ट- દોષરહિત दोषरहित, योनि- शोणित યોનિ- આર્તવ योनि- आर्तव, गर्भाशयाया स्त्रिया च અને ગર્ભાશયવાળી સ્ત્રીનો और गर्भाशयवाली स्त्रीका, ऋतुकाले ઋતુકાળે ऋतुकालमें, यदा જ્યારે जब, संसर्गः સંયોગ सयोग, भवति થાય છે होता है, यदा च અને જ્યારે और जब, अनयोः એઓનો इन दोनों स्त्री पुरुषके, तथा युक्ते તેવા પ્રકારનો उसी प्रकारका, संसर्गे સંસર્ગ થતાં ससर्ग होनेपर, सत्त्व संप्रयोगात् મનની ગતિથી मनके योगसे, जीव. આત્મા जीवात्मा, अन्तः- गर्भाशयगतम् ગર્ભાશયની અંદર થયેલા गर्भाशयके अन्दर हुए, शुक्रशोणित- संसर्गम् શુક્ર અને શોણિતના સંસર્ગમાં शुक्र शोणितके सयोगमें, अवक्रामति અવક્રમણ કરે છે प्रवेश करता है, तदा ત્યારે तब, गर्भ· ગર્ભ गर्भ, अभिनिर्वर्तते નિષ્પન્ન થાય છે उत्पन्न होता है,

3-(1) When between a man of unvitiated semen and a woman of unvitiated vagina, ovum and uterus, mating takes place during the night time, and when, moreover, the spirit descends, by the agency of the mind, into that union of the ovum fertilized by spermoplasm formed inside the womb,

१ चानयोस्तथायुक्ते—तयो स्तथैवयुक्ते ससर्गे (प)
, चानयोस्तथायुक्ते—चानयोस्तथादिभ्योस्तैवयुक्ते संसर्गे(प ग)

as the result of the above-mentioned coming together of these two (man and woman), then the embryo is formed.

**स सात्म्यरसोपयोगादरोगोऽभिवर्धते सम्य गुपचारैश्चोपचर्यमाणः, ततः प्राप्तकालः सर्वेन्द्रियोपपन्नः परिपूर्णशरीरो बलवर्णसत्त्वसंहननसंपदुपेत सुखेन जायते समुदयादेषां भावानां—मातृजश्चायं गर्भः पितृजश्चात्मजश्च सात्म्यजश्च रसजश्च, अस्ति च खलु सत्त्वमौपपादुकमिति होवाच भगवानात्रेयः ॥ ३ ॥**

सात्म्य- સાત્મ્ય अनुकूल, रस- રસના रसोंके, उपयोगात् ઉપયોગથી उपयोगसे, सम्यक्-उपचारैः च અને સારા ઉપચારોથી और अच्छे उपचारोंसे, उपचर्यमाण ચિકિત્સા પામતો चिकित्साको पाता हुआ, स તે वह, अरोगः નીરોગ રહીને नीरोग हो कर, अभिवर्धते વૃદ્ધિ પામે છે वृद्धि पाता है, तत પછી फिर, प्राप्तकाल· પૂરે દિવસે प्रसवकालको पाकर, सर्वेन्द्रिय- સર્વ ઇન્દ્રિય सब इन्द्रियोंसे, उपपन्न· યુક્ત युक्त परिपूर्णशरीरः સ પૂર્ણ શરીરવાળો सपूर्ण शरीरवाला, बल वर्ण-सत्त्व- બળ-વર્ણ-મન बल-वर्ण-मन, सहनन-सपत् અને બાંધાની સપત્તિથી और संगठनकी संपत्तिसे, उपेतः યુક્ત બનીને युक्त हो कर, एषाम् એ શુક્ર શોણિત વગેરે પૂર્વોક્ત उन शुक्र शोणित आदि पूर्वोक्त, भावानाम् ભાવોના भावोंके, समुदयात् સમુદાયથી मेलसे, सुखेन સુખપૂર્વક सुखपूर्वक, जायते જન્મે છે उत्पन्न होता है, अयम् આ यह, गर्भः ગર્ભ गर्भ, मातृज च માતૃજ मातृज, पितृज च પિતૃજ पितृज, आत्मजः च આત્મજ आत्मज, सात्म्यज સાત્મ્યજ सात्म्यज, रसज च અને રસજ છે और रसज है, सत्त्वम् खलु મન मन, औपपादुकम् બીજા શરીરની સાથે આત્માના સબધનુ ઉપપાદન કરનાર दूसरे शरीरके साथ आत्माके सम्बन्धका उपपादन करनेवाला, अस्ति च છે है, इति ह એમ इस प्रकार, भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, उवाच કહ્યુ कहा ॥ ३ ॥

3· That embryo grows without disease by being well tended with care. Then, when the right time has come, it is born with ease, as the result of the sum of all these factors, possessed of all the body organs fully developed and endowed with strength, complexion, intelligence and compactness Therefore the infant is said to be born of the mother, born of the father, born of the spirit, born of concordance and born of nourishment There is also, to be sure, the connecting agent, the mind. So spoke Atreya.

भरद्वाजकृतं तत्र दूषणम्—

**नेति भरद्वाजः, किं कारणं—न हि माता न पिता नात्मा न सात्म्यं न पानाशनभक्ष्यलेह्योपयोगा गर्भं जनयन्ति, न च परलोकादेत्य गर्भं सत्त्वमवक्रामति ॥ (१) ॥**

भरद्वाज· ભરદ્વાજે કહ્યુ भरजद्वाजने कहा, न इति 'એમ નથી' 'ऐसा नहीं,' किम् कारणम् તેનું કારણ શુ ? इसका कारण क्या ?, हि તેનુ આ કારણ છે કે इसका यह कारण है कि, गर्भम् ગર્ભને गर्भको, माता न માતા ઉત્પન્ન કરતી નથી माता उत्पन्न नही करती, पिता न પિતા ઉત્પન્ન કરતો નથી पिता उत्पन्न नही करता, आत्मा न આત્મા ઉત્પન્ન કરતો નથી आत्मा उत्पन्न नही करता, सात्म्यम् न સાત્મ્ય ઉત્પન્ન કરતુ નથી सात्म्य उत्पन्न नहीं करता, पान- अशन- भक्ष्य- लेह्य- उपयोगाः અને પાન, અશન, ભક્ષ્ય તથા લેહ્યના ઉપયોગો पान-अशन- भक्ष्य एवं लेह्यके उपयोग, न जनयन्ति ઉત્પન્ન કરતા નથી उत्पन्न नहीं करते, परलोकात् અને પરલોકથી और परलोकसे, एत्य આવીને आ कर, सत्त्वम् મન मन, गर्भम् ગર્ભમાં गर्भमें, न च નથી नहीं, अवक्रामति ઉતરતુ उतरता ॥ (१) ॥

---

३. अभिवर्धते–अभिसंवर्धते (ध च)

,, खलु सत्त्वमौपपादुकमिति–सत्वसंज्ञमुपपादुकम् (च)

4-(1) "No!" said Bharadwaja to this. For what reason did he say so? Because neither mother, nor father, neither the spirit, nor concordance, nor yet the use of drinks, or foods that are eaten, masticated or licked up, in fact, bring about the conception. Nor does a mind, coming from another world, enter into the embryo

यदि हि मातापितरौ गर्भं जनयेतां, भूयस्यः स्त्रियः पुमांसश्च भूयांसः पुत्रकामाः, ते सर्वे पुत्रजन्माभिसन्धाय मैथुनधर्ममापद्यमानाः पुत्रानेव जनयेयुर्दुहितॄर्वा दुहितृकामाः, न तु काश्चित् स्त्रियः केचिद्वा पुरुषा निरपत्याः स्युरपत्यकामा वा परिदेवेरन् ॥ (२) ॥

यदि हि જો यदि, मातापितरौ માતાપિતા माता-पिता, गर्भम् ગર્ભને गर्भको, जनयेताम् ઉત્પન્ન કરતાં હોય તો उत्पन्न करते हों तो, भूयस्य ઘણીયે बहुतसी, स्त्रिय સ્ત્રીઓ स्त्रिया, भूयांस અને ઘણાયે और बहु-तसे, पुमासः च પુરુષો पुरुष, पुत्रकामा પુત્રની કામના-વાળા હોય છે पुत्रकी कामनावाले होते है, ते सर्वे તે સર્વ वे सब, पुत्रजन्म- પુત્રપ્રાપ્તિને पुत्रोत्पत्तिको, अभि-सधाय લક્ષમાં રાખીને लक्ष्य कर, मैथुनधर्मम् ગ્રામ્ય-ધર્મનું मैथुनक्रियाको, आपद्यमाना સેવન કરતા सेवन करते हुए, पुत्रान् एव પુત્રોનેજ पुत्रोंको ही, दुहितृकामा. वा અથવા દીકરીની ઈચ્છાવાળા और कन्याको चाहने-वाले, दुहितॄ દીકરીઓને पुत्रियोंको जनयेयुः ઉત્પન્ન કરે उत्पन्न करें, कश्चित् વળી કોઈપણ और कोई भी, स्त्रिय સ્ત્રીઓ स्त्री केचित् वा કે કોઈપણ अथवा कोई भी पुरुषा પુરુષો पुरुष, निरपत्याः નિસંતાન निस्संतान, न तु स्यु न રહે न रहे, अपत्यकामा અથવા સંતાનની કામનાવાળાઓ अथवा संतानकी कामनावाले, (न) परिदेवेरन् વિલાપ ન કરે न रोवें ॥ (२) ॥

4-(2). If the mother and father could bring about the conception, then seeing that most men and women desire sons, all of them, with a view to begetting sons, would, by resorting to cohabitation, procreate sons alone. Or those desirous of daughters would procreate daughters alone Neither would there be any childless men or women, nor would persons desiring progeny go about disconsolate.

न चात्माऽऽत्मानं जनयति। यदि ह्यात्माऽऽत्मानं जनयेज्जातो वा जनयेदात्मानमजातो वा, तच्चोभयथाऽप्ययुक्तम्। न हि जातो जनयति सत्त्वात्, न चाजातो जनयत्यसत्त्वात्, तस्मादुभयथाऽप्यनुपपत्तिः।

आत्मा च આત્મા आत्मा, आत्मानम् આત્માને आत्माको (अपनेको), न जनयति ઉત્પન્ન કરતો નથી उत्पन्न नहीं करता, यदि हि જો यदि, आत्मा આત્મા आत्मा, आत्मानम् આત્માને आत्माको, जनयेत् ઉત્પન્ન કરે છે તો उत्पन्न करता है तो, जातः वा ઉત્પન્ન થયેલો આત્મા उत्पन्न हुआ आत्मा, आत्मानम् આત્માને आत्माको (अपनेको), जनयेत् ઉત્પન્ન કરે છે उत्पन्न करता है, अजातः वा અથવા ન ઉત્પન્ન થયેલો આત્મા આત્માને ઉત્પન્ન કરે છે? अथवा न उत्पन्न हुआ आत्मा आत्माको उत्पन्न करता है?, तत् च તે वह, उभयथा બન્ને રીતે दोनों तरहसे, अपि પણ भी, अयुक्तम् યુક્તિ-સંગત નથી ठीक नहीं है, हि કારણકે क्योंकि, सत्त्वात् વિદ્યમાન હોવાથી विद्यमान होनेसे, जात ઉત્પન્ન થયેલો આત્મા उत्पन्न हुआ आत्मा, न जनयति પોતાને ઉત્પન્ન કરતો નથી अपनेको नहीं उत्पन्न करता, असत्त्वात् च અને અવિદ્યમાન હોવાથી और विद्यमान न होनेसे, अजात નહિ ઉત્પન્ન થયેલો આત્મા नहीं उत्पन्न हुआ आत्मा, न जनयति પોતાને ઉત્પન્ન કરતો નથી अपनेको नहीं उत्पन्न करता, तस्मात् તેથી इस लिए, उभयथा अपि બન્ને રીતે પણ दोनों तरहसे भी, अनुपपत्ति ઘટતુ નથી युक्ति नहीं बैठती.

४-(२). स्युरपत्यकामा वा परिदेवेरन्—स्यु न चापत्यकामाः परिदेवेरन् (ध.)

४ (३) ’प्ययुक्तम ’प्यनुपपन्नम् क

,, तस्मादुभयथा—तस्मादेवोभयथा (द.)

4-(3), Nor again does the spirit beget itself. If, indeed, the spirit engenders itself, it must do so, being already born, or in the alternative being yet unborn. Both alternatives are untenable Nothing that is already created can be said to engender itself for the reason that it already exists nor, again, can an unborn thing be said to engender itself, for the reason that it does not exist. Either way the position is untenable.

**तिष्ठतु तावदेतत्। यद्ययमात्माऽऽत्मानं शक्तो जनयितुं स्यात्, न त्वेनमिष्टास्वेव कथं योनिषु जनयेद्वशिनमप्रतिहतगतिं कामरूपिणं तेजोबलजववर्णसत्त्वसंहननसमुदितमजरमरुजममरम्; एवंविधं ह्यात्माऽऽत्मानमिच्छत्यतो वा भूयः ॥(३)॥**

**एतत्** એ દલીલ इसे भी, **तावत् तिष्ठतु** રહેવા દઈએ रहने दो, **यदि** જો यदि, **अयम् आत्मा** આ આત્મા यह आत्मा, **आत्मानम्** આત્માને ( પોતાને ) आत्माको (अपनेको), **जनयितुम्** ઉત્પન્ન કરવા उत्पन्न करनेके लिए, **शक्तः स्यात्** સમર્થ હોય તો शक्तिमान हो तो, **एनम्** એને इसे, **इष्टासु** ઇષ્ટ इष्ट, **योनिषु एव** યોનિઓમાંજ योनियोंमें ही, **वशिनम्** વશી वशी, **अप्रतिहतगतिम्** અનિયન્ત્રિત ગતિવાળો अरुद्ध गतिवाला, **कामरूपिणम्** યથેચ્છ રૂપવાળો यथेच्छ रूपवाला, **तेज** તેજ तेज, **बल**- બળ बल, **जव**- વેગ वेग, **वर्ण**- વર્ણ वर्ण, **सत्त्व**- મન मन, **संहनन**- અને બાંધાથી और गठनसे **समुदितम्** યુક્ત युक्त, **अजरम्** અજર अजर, **अरुजम्** નીરોગ नीरोग, **अमरम्** તેમજ અમર एवं मृत्युरहित, **कथम्** કેમ क्यों **न** ન न, **जनयेत्** ઉત્પન્ન કરે? पैदा करे?, **हि** કારણકે क्योंकि, **आत्मा** આત્મા आत्मा, **आत्मानम्** પોતાને अपनेको, **एवंविधम** એવો इस तरहका, **वा** અથવા अथवा, **अतः भूयः** એથી પણ અધિક ગુણોથી યુક્ત इससे भी अधिक गुणोंसे युक्त, **इच्छति** ચાહે છે चाहता है ॥ (३) ॥

४-(३) न त्वेनम्—न त्वेवम् (च.)

4-(4) Let us leave it at that. But even if the spirit is capable of engendering itself, why does it not reproduce itself exclusively in desirable wombs, possessed of lordship, unrestrained movement, protean power, and compounded of splendour, strength, speed, complexion, intelligence and compactness of limbs and exemption from decay, disease and death? For thus the spirit would wish itself or indeed better than thus.

**असात्म्यजश्चायं गर्भः। यदि हि सात्म्यजः स्यात्, तर्हि सात्म्यसेविनामेवैकान्तेन प्रजा स्यात्, असात्म्यसेविनश्च निखिलेनानपत्याः स्युः, तच्चोभयमुभयत्रैव दृश्यते ॥ (४) ॥**

**अयम् च** આ यह, **गर्भः** ગર્ભ गर्भ, **असात्म्यजः** સાત્મ્યથી પણ ઉત્પન્ન થતો નથી सात्म्यज भी नहीं, **हि** કારણકે क्योंकि, **यदि** જો यदि, **सात्म्यजः स्यात्** એ સાત્મ્યથી ઉત્પન્ન થતો હોય वह सात्म्यसे उत्पन्न होता हो, **तर्हि** તો तो, **सात्म्यसेविनाम्** સાત્મ્ય સેવનારાઓને सात्म्य सेवन करने वालोंको, **एव** ફકત ही, **एकान्तेन** અવશ્ય अवश्य, **प्रजा** પ્રજા संतान, **स्यात्** થાય होवे, **असात्म्यसेविन च** અને અસાત્મ્ય સેવનારા और असात्म्य सेवन करनेवाले, **निखिलेन** સર્વથા सर्वथा, **अनपत्याः** સંતાનરહિત निसंतान, **स्युः** હોય हों, **तत् च** પરંતુ તે પ્રજાસહિતપણું તથા પ્રજારહિતપણું परन्तु वे सप्रज होना तथा अप्रज होना, **उभयम्** બંને दोनों, **उभयत्र एव** બંનેય સાત્મ્ય સેવીમાં તથા અસાત્મ્ય સેવીમાં दोनों ही सात्म्यसेवीमें तथा असात्म्यसेवीमें, **दृश्यते** જોવામાં આવે છે देखे जाते हैं ॥ (४) ॥

4-(5) Nor is the conception born of concordance If indeed it be born of concordance, then to those exclusively who observe this concordance of diet and behaviour, there should be

offspring and those whose lives are not so regulated should all be without issue As a matter of fact both these conditions i e fertility and sterility are seen alike in both classes

अरसजश्चायं गर्भः। यदि हि रसजः स्यात्, न केचित् स्त्रीपुरुषेष्वनपत्याः स्युः, न हि कश्चिदस्त्येषां यो रसान्नोपयुङ्क्ते, श्रेष्ठरसोपयोगिनां चेद्गर्भा जायन्त इत्यभिप्रेतमिति, एवं सत्याजौरभ्रमार्गमायूरगोक्षीरदधिघृतमधुतैलसैन्धवेक्षुरस-मुद्गशालिभृतानामेवैकान्तेन प्रजा स्यात्, श्यामाकवरकोद्दालककोरदूषककन्दमूलभक्षाश्च निखिलेनानपत्याः स्युः, तच्चोभयमुभयत्र दृश्यते ॥ (५)॥

अयम् च આ यह, गर्भः ગર્ભ गर्भ, अरसज રસજન્ય પણ નથી रसज भी नहीं, हि કારણકે क्योंकि, यदि જો यदि, रसजः स्यात् તે રસજન્ય હોય તો रसज हो तो, स्त्रीपुरुषेषु સ્ત્રીપુરુષમાં स्त्रीपुरुषोंमें, केचित् કોઈ कोई, अनपत्या નિસન્તાન सन्तानरहित, न स्यु ન હોય न हो, हि કારણકે क्योंकि, एषाम् એઓમાં इनमेंसे, कश्चित् કોઈ कोई भी, न अस्ति એવો નથી ऐसा नहीं है, य જે जो, रसान् રસોનો रसोका, न उपयुङ्क्ते ઉપયોગ ન કરતો હોય उपयोग न करता हो, श्रेष्ठरस-उपयोगिनाम् શ્રેષ્ઠરસનો ઉપયોગ કરનારનેજ श्रेष्ठरसोंका उपयोग करनेवालोंके, गर्भाः ગર્ભ गर्भ, जायन्ते ઉત્પન્ન થાય છે उत्पन्न होते है, इति એવો ऐसा, अभिप्रेतम् અભિપ્રાય अभिप्राय, इति चेत् હોય તો हो तो, एवम् सति એ સ્થિતિમાં ऐसी स्थितिमें, आज- બકરા बकरे, औरभ्र- મેઢા मेड, मार्ग-मायूर- મૃગ અને મોરના માંસનો રસ मृग और मयूरके मासका रस, गो- ગાયનાં गौके, क्षीर-दधि-घृत- દૂધ દહીં અને ઘી दूध दही तथा घी, मधु-तैल-सैन्धव- મધ-તેલ-સૈન્ધવ शहद-तैल-सेन्धव, इक्षुरस- શેરડીનો રસ इक्षुरस, मुद्ग-शालि भृतानाम् મગ અને શાળના ચોખા એઓથી પોષણ પામેલા મનુષ્યોને मूंग और शालि चावल इनसे पोषणको प्राप्त हुए मनुष्योंके, एव જ ही, एकान्तेन અવશ્ય अवश्य, प्रजा પ્રજા संतान, स्यात् થાય हो, श्यामाक- તેમજ સામો एव श्यामाक, वरक- વરક वरक, उद्दालक- ઉદ્દાલક उद्दालक, कोरदूषक કોદરા कोद्रव, कन्द मूल કન્દ અને મૂળ कन्द और मूल, भक्षा च ખાનારા મનુષ્યો खानेवाले मनुष्य, निखिलेन સર્વથા संपूर्णतया, अनपत्याः નિઃસન્તાન निःसन्तान, स्युः રહે रहें, तत् च પરંતુ તે પ્રજાસહિતપણુ તથા પ્રજારહિતપણુ परन्तु वे सप्रज होना तथा अप्रज होना, उभयत्र બન્ને શ્રેષ્ઠરસસેવીમાં તથા અશ્રેષ્ઠરસસેવીમાં दोनों श्रेष्ठरससेवीमें तथा अश्रेष्ठ-रससेवीमें, दृश्यते જોવામાં આવે છે देखे जाते है ॥(५)॥

4-(5) Nor is the conception born of nourishment If it is indeed born of nourishment, then none among men and women should be childless, for there is no such among them who does not imbibe some kind of nourishment If you say that what is meant is that to those alone who avail themselves of the best kind of nourishment children are born, even so, only those who are nourished on the meat of goats, sheep, deer, peafowl and on cow's milk, curds, ghee, honey, til oil, rock-salt juice of the sugar-cane, green gram and sali rice, should have children, while those who eat millet, varaka, wild millet, common millet, bulbs and roots, should all of them be childless. Both conditions, again, are seen in both classes

न खल्वपि परलोकादेत्य सत्त्वं गर्भमवक्रामति;

४-५) अरसजश्चाय–न रसजश्चाय (द.)

,, श्यामाकवरकोद्दालक–श्यामाककोद्रवकोद्दालक (ख)

,, मायूर°–मायूररस° (ग च छ)

,, कन्दमूल°–कन्दमूलफल° (च)

,, कन्दमूलभक्षा.–कन्दमूलफलभक्ष्याः (छ.)

**यदि ह्येनमवक्रामेत्, नास्य किञ्चिन् पौर्वदेहिकं स्यादविदितमश्रुतमदृष्टं वा, स च तच्च न किञ्चिदपि स्मरति ॥ (६)॥**

सत्त्वम् મન मन, परलोकात् પરલોકમાંથી परलोकसे, एत्य આવીને आ कर, गर्भम् ગર્ભમાં गर्भमें, न खलु अपि अवक्रामति ઉતરતુ નથી नहीं उतरता, यदि हि જો यदि, एनम् તે એ ગર્ભમાં वह इस गर्भमें, अवक्रामेत् ઉતરે તો उतरता हो तो, अस्य એને इस गर्भको, पौर्वदेहिकम् પૂર્વ દેહનું पूर्व देहका, किञ्चित् કોઈપણ कुछ भी अविदितम् અજ્ઞાત अज्ञात, अश्रुतम् અશ્રુત अश्रुत, वा કે अथवा, अदृष्टम् અદૃષ્ટ अदृष्ट, न स्यात् ન હોય न हो, सः च પણ તેને किन्तु उसको, तत् च તે वह, किंचित् अपि કોઈ પણ कुछ भी, न स्मरति યાદ આવતુ નથી स्मरणमें नहीं आता ॥ (६)॥

4-(6). Nor, in fact, does a mind, coming from another world, enter into the embryo. For, if the mind thus enters into the embryo, there should be nothing unknown, unheard or unseen pertaining to its previous incarnation As a matter of fact one does not recollect anything of that kind

**तस्मादेतद् ब्रूमहे-अमातृजश्चायं गर्भोऽपितृजश्चानात्मजश्चासात्म्यजश्चारसजश्च, न चास्ति सत्त्वमौपपादुकमिति (होवाच भरद्वाजः) ॥ (४)॥**

तस्मात् તેથી इस लिए, एतद् ब्रूमहे અમે આ વસ્તુ કહીએ છીએ કે हम इस बातको कहते है कि, अयम् આ यह, गर्भः ગર્ભ गर्भ, अमातृजः च માતૃજ નથી मातृज नही, अपितृजः च પિતૃજ નથી पितृज नहीं, अनात्मजः च આત્મજ નથી आत्मज नही, असात्म्यजः च સાત્મ્યજ નથી सात्म्यज नही, अरसजः च અને રસજ પણ નથી और रसज भी नहीं, सत्त्वम् च વળી મન और मन, औपपादुकम् इति બીજા શરીરથી સંબંધ કરનારુ દૂસરે શરીરસે सम्बन्ध करनेवाला, न अस्ति નથી नहीं, (भरद्वाज ભરદ્વાજે भरद्वाजने, उवाच એમ કહ્યુ ऐसा कहा ॥ ४ ॥

4. Therefore do we assert this; The embryo is not born of the mother, nor of the father, nor of the spirit, nor of the concordance nor of the nourishment. Nor is there a mind which is the connecting agent Thus declared Bharadwaja

आत्रेयेण कृतं तत्समाधानम्—

**नेति भगवानात्रेयः, सर्वेभ्य एभ्यो भावेभ्यः समुदितेभ्यो गर्भोऽभिनिर्वर्तते ॥ ५॥**

भगवान् ભગવાન भगवान, आत्रेय આત્રેયે કહ્યુ आत्रेयने कहा, न इति એમ નથી ऐसा नहीं, एभ्य આ इन, सर्वेभ्यः સર્વ सब, समुदितेभ्यः એકઠા થયેલા मिलित, भावेभ्य. ભાવોથી भावोंमे, गर्भः ગર્ભ गर्भ, अभिनिर्वर्तते ઉત્પન્ન થાય છે वनता है ॥ ५ ॥

5 The sage Atreya replied; "No. for the embryo arises from all these factors acting together."

गर्भस्य मातृजत्वप्रतिपादन, मातृजा भावाश्च—

**मातृजश्चायं गर्भः । न हि मातुर्विना गर्भोत्पत्तिः स्यात्, न च जन्म जरायुजानाम् । यानि खल्वस्य गर्भस्य मातृजानि, यानि चास्य मातृतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः;**

अयम् આ यह, गर्भ च ગર્ભ गर्भ, मातृज. માતૃજ છે मातृज है, हि કારણકે क्योंकि, मातुः विना માતા વિના माताके विना, गर्भोत्पत्ति ગર્ભની ઉત્પત્તિ गर्भकी उत्पत्ति, न स्यात् ન થાય न हो सके, जरायुजानाम् च તથા જરાયુજ પ્રાણીઓને और जरायुज प्राणियोंका, जन्म न જન્મ પણ ન થાય जन्म भी न हो सके, अस्य આ इस, गर्भस्य खलु ગર્ભના गर्भके, यानि જે માતૃજ ભાવો છે जो मातृज भाव हैं; संभवत.

४ (१) ह्येनमवक्रामेत्,—ह्येवमवक्रामेत् (क.)
,, किञ्चित्-किञ्चिदेव (छ.)
४ तस्मादेतद् ब्रूमहे-तस्मादेतद्वो ब्रूम (फ.)

अर्थात् ઉત્પન્ન થતા अर्थात् उत्पन्न होते हुए, अस्य આ ગર્ભના इस गर्भके, यानि જે ભાવો जो भावो, मातृतः च માતાના બીજથી माताके बीजसे, संभवन्ति ઉત્પન્ન થાય છે उत्पन्न होते है, तानि તેઓનુ उनका, अनुव्याख्यास्यामः વ્યાખ્યાન કરશુ व्याख्यान करेगे,

6-(1). In one sense, the embryo is born of the mother For, surely, there is no conception in the absence of the mother nor without her is the birth possible of the viviparous class of creatures. We shall now enumerate the mother-engendered parts of the embryo, that is, those which pass to the embryo during its formation from the mother.

**तद्यथा—त्वक् च लोहितं च मांसं च मेदश्च नाभिश्च हृदयं च क्लोम च यकृच्च प्लीहा च वृक्कौ च वस्तिश्च पुरीषाधानं चामाशयश्च पक्काशयश्चो-त्तरगुदं चाधरगुदं च क्षुद्रान्त्रं च स्थूलान्त्रं च वपा च वपावहनं चेति (मातृजानि) ॥ ६ ॥**

तत् यथा જેમકે जैसे कि, त्वक् च ત્વચા त्वचा, लोहितम् च રક્ત रक्त, मांसम् च માંસ मास, मेदः च મેદ मेद, नाभिः च નાભિ नाभि, हृदयम् च હૃદય हृदय, क्लोम च ક્લોમ क्लोम, यकृत् च યકૃત્ यकृत्, प्लीहा च પ્લીહા प्लीहा, वृक्कौ च બે વૃક્કો दोनो वृक्क, बस्तिः च બસ્તિ बस्ति (मूत्राशय), पुरीषाधानम् च પુરીષાધાન पुरीषाधान, आमाशयः च આમાશય आमाशय, पक्काशयः च પક્વાશય पक्काशय, उत्तरगुदम् ઉત્તરગુદા उत्तरगुद, अधरगुदम् च અધરગુદા अधरगुद, क्षुद्रान्त्रम् च નાનાં આંતરડાં क्षुद्रान्त्र, स्थूलान्त्रम् च મોટાં આંતરડાં स्थूलान्त्र, वपा च વપા वपा, वपावहनम् च इति અને વપાવહન और वपावहन, 'मातृजानि માતૃજ છે मातृज है ) ॥ ६ ॥

१. उत्तरगुदं–उत्तरगुदश्च (थ.)
,, अधरगुद–अधरगुदश्च (थ.)

6. These are—the blood, flesh, and fat, the umbilicus, the heart, the kloman, the liver, the spleen, kidneys, bladder, pelvic colon and stomach, the colon, the rectum and the anus, the small intestine, the large intestine, the omentum and mesentery.

गर्भस्य पितृजत्वप्रतिपादन, पितृजा भावाश्च—

**पितृजश्चायं गर्भः। नहि पितुर्ऋते गर्भोत्पत्तिः स्यात्, न च जन्म जरायुजानाम्। यानि खल्वस्य गर्भस्य पितृजानि, यानि चास्य पितृतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः;**

अयम् આ यह, गर्भ ગર્ભ गर्भ, पितृज च પિતૃજ પણ છે पितृज भी है, हि કારણકે क्योंकि, पितु ऋते પિતા વિના पिताके बिना, गर्भोत्पत्तिः ગર્ભની ઉત્પત્તિ गर्भोत्पत्ति, न स्यात् ન થાય न हो सके, जरायुजानाम् च અને જરાયુજોના और जरायुजोंका, जन्म न જન્મ પણ ન થાય जन्म भी न हो सके, अस्य આ इस, गर्भस्य खलु ગર્ભના गर्भके, यानि જે जो, पितृजानि પિતૃજ ભાવો છે पितृज भाव है, संभवतः અર્થાત્ ઉત્પન્ન થતા अर्थात् उत्पन्न होते हुए, अस्य આ ગર્ભના इस गर्भके, यानि જે ભાવો जो भावों, पितृतः च પિતાના શુક્રથી पिताके शुक्रसे, संभवन्ति ઉત્પન્ન થાય છે उत्पन्न होते हैं, तानि તેઓનું उनका, अनुव्याख्यास्याम વ્યાખ્યાન કરશુ व्याख्यान करेंगे,

7-(1) In one sense the embryo is born of the father, also For in the absence of the father. there is no conception too, nor without him is the birth possible of the viviparous class of creatures We shall now enumerate the father-engendered parts of the embryo, that is, those that pass to the embryo during its formation, from the father.

तद्यथा—केशश्मश्रुनखलोमदन्तास्थिसिरास्नायुधमन्यः शुक्रं चेति (पितृजानि) ॥ ७ ॥

तत् यथा જેમકે जैसे कि, केश- કેશ केश, श्मश्रु દાઢી-મૂછ दाढी मूछ, नख- નખ नख, लोम- રૂંવાડાં लोम, दन्त- દાંત दान्त, अस्थि- હાડકાં हड्डिया, सिरा- સિરા सिराए, स्नायु- સ્નાયુ स्नायु, धमन्यः ધમની धमनिया, शुक्रम् च इति અને શુક્ર और वीर्य, ( पितृजानि પિતૃજ છે पितृज है ) ॥ ७ ॥

7-(2). These are the hair of the head and beard, nails, hair of the body, teeth, bones, veins, sinews, arteries and semen.

गर्भस्यात्मजत्वप्रतिपादनम्, आत्मजा भावाश्च—

आत्मजश्चायं गर्भः । गर्भात्मा ह्यन्तरात्मा यः, तं 'जीव' इत्याचक्षते शाश्वतमरुजमजरममरमक्षयमभेद्यमच्छेद्यमलोड्यं विश्वरूपं विश्वकर्माणमव्यक्तमनादिमनिधनमक्षरमपि ।

अयम् આ यह, गर्भ ગર્ભ गर्भ, आत्मज આત્મજ आत्मज, च પણ છે भी है, हि કારણકે क्योंकि, यः જે जो, अन्तरात्मा અન્તરાત્મા કહેવાય છે अतरात्मा कहाता है, गर्भात्मा તે ગર્ભાત્મા છે वह गर्भात्मा है, शाश्वतम् નિત્ય नित्य, अरुजम् વેદનારહિત नीरोग, अजरम् અજર अजर, अमरम् અમર अमर, अक्षयम् અક્ષય अक्षय, अभेद्यम् અભેદ્ય अभेद्य, अच्छेद्यम् અચ્છેદ્ય अच्छेद्य, अलोड्यम् અક્ષોભ્ય अक्षोभ्य, विश्वरूपम् વિશ્વરૂપ विश्वरूप, विश्वकर्माणम् વિશ્વકર્મા विश्वकर्मा, अव्यक्तम् અવ્યક્ત अव्यक्त, अनादिम् અનાદિ अनादि, अनिधनम् મૃત્યુરહિત मृत्युरहित, अक्षरम् अपि અને અક્ષર और अक्षर, तम् તે ગર્ભાત્માને उस गर्भात्माको, 'जीव' 'જીવ' 'जीव', इति એમ ऐसा, आचक्षते કહે છે कहते हैं;

8-(1). In one sense, the embryo is born of the spirit also. The embryonic spirit is the same as the in-dwelling spirit. It is called the embodied soul, eternal, diseaseless, ageless, deathless, undecaying, indivisible, unsunderable, immovable, omniform, omnifunctional, invisible, beginningless, endless and immutable

स गर्भाशयमनुप्रविश्य शुक्रशोणिताभ्यां संयोगमेत्य गर्भत्वेन जनयत्यात्मनाऽऽत्मानम्, आत्मसंज्ञा हि गर्भे । तस्य पुनरात्मनो जन्मानादित्वान्नोपपद्यते, तस्मान्न जात एवायमजातं गर्भं जनयति, अजातो ह्ययमजातं गर्भं जनयति; स चव गर्भः कालान्तरेण बालयुवस्थविरभावान् प्राप्नोति, स यस्यां यस्यामवस्थायां वर्तते तस्यां तस्यां जातो भवति, या त्वस्य पुरस्कृता तस्यां जनिष्यमाणश्च, तस्मात् स एव जातश्चाजातश्च युगपद्भवति; यस्मिंश्चैतदुभयं संभवति जातत्वं जनिष्यमाणत्वं च स जातो जन्यते, स चैवानागतेष्ववस्थान्तरेष्वजातो जनयत्यात्मनाऽऽत्मानम् ।

सः તે જીવ वह जीव, गर्भाशयम् ગર્ભાશયમાં गर्भाशयमें, अनुप्रविश्य પ્રવેશ કરીને प्रविष्ट हो कर, शुक्रशोणिताभ्याम् શુક્ર અને શોણિત સાથે शुक्रशोणितसे, संयोगम् एत्य સંયોગ પામીને मिल कर, आत्मानम् પોતાને अपनेको, आत्मना પોતાથી अपनेसे, गर्भत्वेन ગર્ભરૂપમાં गर्भरूपमें, जनयति ઉત્પન્ન કરે છે पैदा करता है, हि કારણકે क्योंकि, गर्भे આથીજ ગર્ભમાં इस लिए गर्भमे, आत्मसंज्ञा 'આત્મા' એ નામ છે

१. अच्छेद्यमलोड्य–अच्छेद्यमलोठ्य (ख.)

८. जन्मानादित्वात्–जन्मादिसत्त्वात् (द त)
,, तस्मान्नजात एवायमजात गर्भं जनयति, अजातो ह्ययमजात गर्भं जनयति,–तस्मादजात एवायमजात गर्भं जनयति, जातोऽप्यजातं च गर्भं जनयति; (थ.)
,, न जात–अजात (च.)
,, अजातो ह्ययमजात–जातोऽप्यजात (द.)
,, प्राप्नोति–आप्नोति (त)
,, ,, –अवाप्नोति (थ)
,, यस्मिन्–तस्मिन् (छ.)
,, उभयं–उभयं युगपत् (च.)

'आत्मा' यह संज्ञा है, तस्य ते इस, आत्मन पुन आत्मानो आत्माका, अनादित्वात् અનાદિપણાને લીધે अनादि होनेसे, जन्म જન્મ जन्म, न उपपद्यते હોઈ શકે નહિ नहीं हो सकता, तस्मात् તેથી इस लिए, जात एव જન્મેલો उत्पन्न हुआ, अयम् આ આત્મા यह आत्मा, अजातम् ન જન્મેલા अजात, गर्भम् ગર્ભને गर्भको, न जनयति ઉત્પન્ન નથી કરતો उत्पन्न नहीं करता, अजातः हि પણ ન જન્મેલો परंतु अजात, अयम् આ આત્મા यह आत्मा, अजातम् ન જન્મેલા अजात, गर्भम् ગર્ભને गर्भको, जनयति ઉત્પન્ન કરે છે उत्पन्न करता है, स च एव અને તે જ और वही, गर्भः ગર્ભ गर्भ, कालान्तरेण કાલાન્તરે कालान्तरसे, बाल- બાલ बाल, युव- યુવાન युवा, स्थविर- અને વૃદ્ધ और वृद्ध, भावान् અવસ્થાઓને अवस्थाओंको, प्राप्नोति પ્રાપ્ત કરે છે प्राप्त करता है, स તે वह, यस्याम् यस्याम् જે જે जिस जिस, अवस्थायाम् અવસ્થામાં अवस्थामें, वर्तते હોય છે रहता है, तस्याम् तस्याम् તે તે અવસ્થામાં उस उस अवस्थामें, जात ઉત્પન્ન उत्पन्न, भवति થાય છે એમ કહેવાય છે हुआ है ऐसा कहा जाता है, अस्य તેની इसकी, या तु पुरस्कृता જે ભવિષ્યની અવસ્થા છે जो भावी अवस्था है, तस्याम् તેમાં उसमें, जनिष्यमाणः च જન્મવાનો છે એમ કહેવાય છે उत्पन्न होनेवाला है ऐसा कहा जाता है, तस्मात् તેથી इस लिए, स. एव તે वही, जातः च જન્મેલો उत्पन्न, अजातः च અને ન જન્મેલો और अनुत्पन्न, युगपत् બેઠી સાથે एकसाथ, भवति બને છે होता है, यस्मिन् च અને જેમાં और जिसमे, जातत्वम् જન્મ્યો હોવાનુ जातत्व, जनिष्यमाणत्वम् च અને જન્મવાનુ और जनिष्यमाणत्व, एतत् उभयम् એ બન્ને ભાવો ये दोनों, संभवति સભવે છે सभवित है, स તે वह, जात· જન્મેલો उत्पन्न हुआ, जन्यते ઉત્પન્ન થાય છે उत्पन्न होता है, स च एव અને તે જ और वही, अनागतेषु ભવિષ્યની अनागत, अवस्थान्तरेषु જુદી જુદી અવસ્થાઓમાં अवस्थान्तरोंमे, अजात· અજાત આત્મા अनुत्पन्न आत्मा, आत्मना પોતાથી अपनेसे, आत्मानम् પોતાને अपनेको जनयति ઉત્પન્ન કરે છે उत्पन्न करता है;

8-(2). The spirit, entering the womb and linking itself to the ovum fertilized by the sperm manifests itself as the embryo, for the appellation of the spirit in the embryo To that spirit however, being beginningless, there cannot be any birth in the true sense. Therefore, it is not true to say that, being itself first born, it engenders the unborn embryo, but verily being itself unborn, it engenders the unborn embryo The selfsame embryo, by the passage of time, reaches in turn, the condition of childhood, youth and old age, and in whichever condition it happens at the time to be, with reference to that condition it is said to-be-born, but with reference to that condition which is yet ahead, it is said to be-born. Therefore the selfsame spirit is said to be born and unborn at the same time. In which thing both these predications are possible, namely having been and having yet to be born, that thing, when born, is said to be engendered, and that very thing, again, with regard to its future vicissitudes, being "unborn", engenders itself

**सतो ह्यवस्थान्तरगमनमात्रमेव हि जन्म चोच्यते तत्र तत्र वयसि तस्यां तस्यामवस्थायां; यथा—सतामेव शुक्रशोणितजीवानां प्राक् संयोगाद्गर्भत्वं न भवति, तच्च संयोगाद्भवति, यथा—सतस्तस्यैव पुरुषस्य प्रागपत्यात् पितृत्वं न भवति, तच्चापत्याद्भवति, तथा सतस्तस्यैव गर्भस्य तस्यां तस्यामवस्थायां जातत्वमजातत्वं चोच्यते ॥८॥**

हि કેમકે क्योकि, तत्र तत्र તે તે उस उस, वयसि વયમા उम्रमे, तस्याम् तस्याम् તે તે उस उस, अवस्थायाम्

અવસ્થામાં अवस्थामें, सत विद्यमान विद्यमानकी, अवस्थान्तरगमनमात्रम् અવસ્થાન્તર-પ્રાપ્તિ अवस्थान्तरमें भी गमनमात्र, एव हि જ ही, जन्म જન્મ जन्म, उच्यते च કહેવાય છે कहलाता है, यथा જેમકે जैसे, जीवानाम् જીવ जीवके, सताद् एव વિદ્યમાન હોવા છતાં विद्यमान ही, शुक्र-शोणित- શુક્ર-શોણિત शुक्र शोणित, संयोगात् સંયોગથી संयोगसे, प्राक् પહેલાં पहले, गर्भत्वम् ગર્ભત્વ गर्भत्व, न भवति નથી नहीं, तत् च અને તે वह, सयोगात् સંયોગથી संयोगसे, भवति થાય છે होता है, तथा જેમકે जैसे, तस्य एव તે જ उसी, पुरुषस्य પુરુષ पुरुषके, सत विद्यमान હોવા છતાં विद्यमान होने पर भी, अपत्यात् प्राक् સંતાન થયા પહેલાં अपत्य होनेसे पहले, पितृत्वम् તેને પિતૃત્વ उसको पितृत्व, न भवति પ્રાપ્ત થતુ નથી नही प्राप्त होता, तत् च અને તે પિતૃત્વ ओर वह पितृत्व, अपत्यात् સંતાન થવાથી अपत्य होनेसे, भवति પ્રાપ્ત થાય છે प्राप्त होता है, तथा તે પ્રમાણે इस प्रकार, तस्य एव તે જ उसी, सत. વિદ્યમાન विद्यमान, गर्भस्य ગર્ભનું गर्भका, तस्याम् तस्याम् તે તે उस उस, अवस्थायाम् અવસ્થામાં अवस्थामें, जातत्वम् જન્મેલા-પણું जातत्व, अजातत्वम् च અને ન જન્મેલાપણું और अजातत्व, उच्यते કહેવામાં આવે છે कहा जाता है॥८॥

8-(3). The mere transition of an existent thing into another state is styled "birth" with reference to that new state or that new condition Thus for instance, prior to their union, spermatazoa, ovum and the spirit, though existing all the time, do not attain the status of the embryo, but acquire it only after their union. Thus also, prior to the birth of a child, a man though existing all the time, has no claim to paternity, but it comes to him after the birth of the child In the same manner, it is of the embryo, existing all the time, that the conditions of "having been born" and "having yet to be born' are predicated, with reference to a given situation

**न खलु गर्भस्य मातुर्न पितुर्न चात्मनः सर्वभावेषु यथेष्टकारित्वमस्ति, ते किंचित् स्ववशात् कुर्वन्ति, किंचित् कर्मवशात्, क्वचिच्चैषां करणशक्तिर्भवति, क्वचिन्न भवति ।**

गर्भस्य खलु ગર્ભના गर्भके, सर्वभावेषु સર્વ ભાવોમાં सव भावोंमें, न मातु નથી માતાને नहीं माताको, न पितु નથી પિતાને नहीं पिताको, न च आत्मन નથી આત્માને और नही आत्माको, यथेष्टकारित्वम् સ્વેચ્છાચારિત્વ यथेष्टकारिता, अस्ति હોતું होती है, ते તેઓ वे, किंचित् થોડું कुछ, स्ववशात् પોતાની ઇચ્છાથી अपनी इच्छासे, किंचित् અને થોડું और कुछ, कर्मवशात् કર્માધીન થઈને कर्मवश हो कर, कुर्वन्ति કરે છે करते है, क्वचित् च અને ક્યારેક और कहीं, एषाम् એઓને इनको, करणशक्तिः મન, બુદ્ધિ, ઇંદ્રિયાદિ કરણોની શક્તિ मन, बुद्धि, इन्द्रियादिक करणोंकी शक्ति, भवति હોય છે होती है, क्वचित् અને ક્યારેક और कही, न भवति નથી હોતી नही होती,

9-(1) However, neither the mother, nor the father, nor yet the spirit is in the total sense, an autonomous agent in the formation of the embryo. They (the mother etc) act to some extent by themselves and to some extent under the compulsion of actions done in a former life, again sometimes they are equipped with the means and sometimes they are not

**यत्र सत्त्वादिकरणसंपत्तत्र यथाबलमेव यथेष्टकारित्वम्, अतोऽन्यथा विपर्ययः। न च करण-**

१. न खलु—न तु खलु (ध.)
,, स्ववशात्—स्ववशा (ध.)

**दोषादकारणमात्मा संभवति गर्भजनने, इष्टं चेष्टा योनिरैश्वर्यं मोक्षश्चात्मविद्भिरात्मायत्तम् ।**

यत्र જ્યાં जहा, सत्त्वादिकरण- સત્ત્વાદિકરણની सत्त्वादिकरणोंकी, संपत् સંપત્તિ હોય છે सम्पन्नता होती है, तत्र ત્યાં वहा, यथाबलम् एव કરણના બળ પ્રમાણે જ करणबलके अनुसार ही, यथेष्टकारित्वम् યથેષ્ટકારિત્વ હોય છે यथेष्टकारिता होती है, अतः એથી इससे, अन्यथा ઉલટી સ્થિતિમાં अन्यथा, विपर्यय વિપરીતતા હોય છે विपरीतता होती है, करणदोषात् અને કરણના દોષને લીધે करणदोषसे, गर्भजनने ગર્ભોત્પત્તિમાં गर्भोत्पत्तिमें, आत्मा આત્મા आत्मा, अकारणम् અકારણ अकारण, न संभवति च નથી नहीं होता, आत्मविद्भिः આત્મજ્ઞાનીઓએ आत्मज्ञानियोंने, इष्टा योनि ઇષ્ટ યોનિ इष्ट योनि, ऐश्वर्यम च ઐશ્વર્ય ऐश्वर्य, मोक्ष च અને મોક્ષને और मोक्षको, आत्मायत्तम् આત્માધીન अपने अधीन, इष्टम् માન્યા છે देखा है;

9-(2). Where there is the conjunction of means such as the mind etc., there the autonomy of the agent is limited only by the scope of the instruments; where no such scope is afforded, there is no autonomy But on this score it cannot be contended that the spirit is incapable of engendering the embryo, because it happens that the instruments are defective Moreover, the entering into the desired womb, tha sovereign powers and the final liberation are regarded, by the theologians, to be applicable only to the spirit.

**नह्यन्यः सुखदुःखयोः कर्ता। न चान्यतो गर्भो जायते जायमानः. नाङ्कुरोत्पत्तिरबीजात् ॥ ९ ॥**

हि કારણકે क्योंकि, सुखदुःखयो સુખ દુઃખનો सुख दुःखका, कर्ता કર્તા कर्ता, अन्यः न બીજો કોઈ નથી अन्य कोई नहीं है, जायमान. ઉત્પન્ન થતો और उत्पद्यमान, गर्भ च ગર્ભ गर्भ, अन्यत. આત્મા સિવાય બીજાથી आत्माके सिवाय अन्यसे, न जायते ઉત્પન્ન થતો નથી उत्पन्न नहीं होता, अबीजात् બીજ વિના बीजके बिना, अङ्कुरोत्पत्ति. न અંકુરની ઉત્પત્તિ થતી નથી अकुरकी उत्पत्ति नही होती ॥ ९ ॥

9 (3) For there is none else who is the subject of pleasure and pain. Nor from any source other than the self, does the springing embryo take its rise, there is no rise of the seedling without the seed.

**यानि तु खल्वस्य गर्भस्यात्मजानि, यानि चास्यात्मतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः;**

अस्य गर्भस्य तु खलु આ ગર્ભના इस गर्भके, यानि જે जो आत्मजानि આત્મજ ભાવો છે आत्मज भाव है, संभवत અર્થાત્ ઉત્પન્ન થતા अर्थात् उत्पन्न होते हुए, अस्य આ ગર્ભના इस गर्भके, यानि જે ભાવો जो भाव, आत्मत च આત્માથી आत्मासे, संभवन्ति ઉત્પન્ન થાય છે उत्पन्न होते हैं, तानि તેઓનુ उनका, अनुव्याख्यास्याम વ્યાખ્યાન કરશું व्याख्यान करेंगे,

10-(1) We shall now enumerate the spirit-engendered parts of the embryo, that is, those that pass from the spirit to the embryo during its formation

**तद्यथा—तासु तासु योनिषूत्पत्तिरायुरात्मज्ञानं मन इन्द्रियाणि प्राणापानौ प्रेरणं धारणमाकृतिस्वरवर्णविशेषाः सुखदुःखे इच्छाद्वेषौ चेतना धृतिर्बुद्धिः स्मृतिरहङ्कारः प्रयत्नश्चेति (आत्मजानि) ॥ १० ॥**

तत् यथा જેમકે जैसे, तासु तासु તે તે उन उन, योनिषु યોનિઓમાં योनियोंमें, उत्पत्तिः ઉત્પત્તિ जन्म, आयु. આયુષ્ય आयुष्य, आत्मज्ञानम् આત્મજ્ઞાન आत्मज्ञान, मनः મન मन, इन्द्रियाणि ઇન્દ્રિયો इन्द्रिय, प्राणा-

१. आत्मा सभवति गर्भजनने—आत्मा जनने सभवति (थ.)

पानौ પ્રાણ- અપાન प्राण- अपान, प्रेरणम् પ્રેરણ પ્રેરણા, धारणम् દેહનું ધારણ देहका धारण, आकृति-स्वर-वर्ण-विशेषा. આકૃતિ, સ્વર અને વર્ણના ભેદો आकृति, स्वर और वर्णके भेद, सुखदुःखे સુખદુઃખ सुखदु ख, इच्छाद्वेषौ ઇચ્છા-દ્વેષ इच्छा-द्वेष, चेतना ચેતના चेतना, धृति- ધૃતિ धृति, बुद्धि- બુદ્ધિ बुद्धि, स्मृतिः સ્મૃતિ स्मृति, अहङ्कार અહંકાર अहङ्कार, प्रयत्नः च इति અને પ્રયત્ન और प्रयत्न, (आत्मजानि એ આત્મજ છે ये आत्मज है) ॥ १० ॥

10. These are—the birth in such and such womb; the life span; self-awareness; the mind; the senses; respiration, excretory urge, the directing and sustaining powers of the various parts, distinctive shape, voice and color; pleasure and pain, desire and aversion, consciousness, resolution; understanding, recollection, egoism and effort. (These are born of the spirit.)

गर्भस्य सात्म्यजत्वप्रतिपादनम्, आत्मजा भावाश्च—

**सात्म्यजश्चायं गर्भः। नह्यसात्म्यसेवित्वमन्तरेण स्त्रीपुरुषयोर्वन्ध्यत्वमस्ति, गर्भेषु वाऽप्यनिष्टो भावः। यावत् खल्वसात्म्यसेविनां स्त्रीपुरुषाणां त्रयो दोषाः प्रकुपिताः शरीरमुपसर्पन्तो न शुक्रशोणितगर्भाशयोपघातायोपपद्यन्ते, तावत् समर्था गर्भजननाय भवन्ति।**

अयम् આ यह, गर्भ. ગર્ભ गर्भ, सात्म्यज' च સાત્મ્યજ પણ છે सात्म्यज भी है. हि કારણકે क्योंकि, असात्म्यसेवित्वम् અસાત્મ્યસેવન असात्म्यसेवनके, अन्तरेण વિના बिना, स्त्रीपुरुषयोः સ્ત્રીપુરુષને स्त्री-पुरुषको, वन्ध्यत्वम् વાંઝિયાપણું वन्ध्यत्व, गर्भेषु અથવા ગર્ભમાં પણ अथवा गर्भमें भी, अनिष्टः भाव' वा અનિષ્ટ ભાવ अनिष्ट भाव, न अस्ति થતો નથી नहीं होता, असात्म्यसेविनाम् અસાત્મ્ય સેવન કરનાર असात्म्य-सेवी, स्त्रीपुरुषाणाम् સ્ત્રીપુરુષોનાં स्त्रीपुरुषोंके, शरीरम् શરીરમાં शरीरमें, उपसर्पन्तः પ્રસરતા फैलते हुए, त्रयः दोषा. ત્રણે દોષો तीनों दोष, प्रकुपिताः પ્રકુપિત થઈને प्रकुपित हो कर, यावत् खलु જ્યાં સુધી जब तक, शुक्र-शोणित- શુક્ર- શોણિત शुक्र- आर्तव, गर्भाशय- અને ગર્ભાશયની और गर्भाशयकी, उपघाताय હાનિ માટે हानिके लिए, न उपपद्यन्ते થતા નથી नहीं होते, तावत् ત્યાં સુધી तव तक, गर्भजननाय તેઓ ગર્ભ ઉત્પન્ન કરવામાં वे गर्भ जननके लिए, समर्थाः સમર્થ समर्थ, भवन्ति થાય છે होते हैं;

11-(1) In one sense the embryo is born of concordance, too. For, without his or her being given to discordant diet or behaviour, there is no true sterility either in man or woman or any defective condition in the embryo. However as long as the three humors being irritated, overrun the bodies of those of ill-regulated habits but do not penetrate deep enough to impair the semen in men, and the ovum and womb in women, so long these men and women are capable of procreation.

**सात्म्यसेविनां पुनः स्त्रीपुरुषाणामनुपहतशुक्रशोणितगर्भाशयानामृतुकाले सन्निपतितानां जीवस्यानवक्रमणाद्गर्भा न प्रादुर्भवन्ति। नहि केवलं सात्म्यज एवायं गर्भः, समुदयोऽत्र कारणमुच्यते।**

अनुपहत- દોષરહિત दोषरहित, शुक्र-शोणित-गर्भाशयानाम् શુક્ર- શોણિત તથા ગર્ભાશયવાળા शुक्र-शोणित तथा गर्भाशयवाले, सात्म्यसेविनाम् સાત્મ્યસેવી सात्म्यसेवी, स्त्रीपुरुषाणाम् पुन સ્ત્રીપુરુષો स्त्रीपुरुषोंको, ऋतुकाले ઋતુકાળે ऋतुकालमें, सन्निपतितानाम् સંયુક્ત થયા છતાં मैथुन करनेसे भी, जीवस्य જીવનો जीवके, अनवक्रमणात् પ્રવેશ ન થવાથી अप्रवेशसे, गर्भाः ગર્ભ गर्भ, न प्रादुर्भवन्ति ઉત્પન્ન થતા નથી उत्पन्न नहीं होते, अयम् गर्भ આ ગર્ભ यह गर्भ, केवलम् કેવળ केवल, सात्म्यजः एव સાત્મ્યજ सात्म्यज ही, न हि

११ समुदयोऽत्र—समुदायोऽत्र (ध)

नथी જ नहीं, अत्र પરંતુ અહીં इसमें, समुदय શુક્ર આર્તવ જીવ વગેરેનો સમુદાય शुक्र आर्तव जीव आदिका समुदाय, कारणम् કારણ कारण उच्यते કહેવાય છે कहा जाता है,

11-(2) On the other hand, even of those who are of well-regulated habits and possessed of defectless semen, ovum and uterus, and who mate during the prescribed season, there is no resulting conception, because of the non-descent of the spirit. The reason is that conception does not result from the factor of concordance alone, but the agency here is the complex of factors.

**यानि खल्वस्य गर्भस्य सात्म्यजानि, यानि चास्य सात्म्यतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः;**

अस्य गर्भस्य खलु આ ગર્ભના इस गर्भके, यानि જે जो, सात्म्यजानि સાત્મ્યજ ભાવો છે सात्म्यज भाव है, संभवतः અર્થાત્ ઉત્પન્ન થતા अर्थात् उत्पन्न होते हुए, अस्य આ ગર્ભના इस गर्भके, यानि જે ભાવો जो भाव, सात्म्यत. च સાત્મ્યસેવનથી सात्म्यसेवनसे, संभवन्ति ઉત્પન્ન થાય છે उत्पन्न होते है, तानि તેઓનું उनका, अनुव्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेगे,

11-(3). We shall enumerate the concordance-engendered parts of the embryo i. e., those that pass from the factors of concordance to the embryo at formation.

**तद्यथा—आरोग्यमनालस्यमलोलुपत्वमिन्द्रियप्रसादः स्वरवर्णबीजसंपत् प्रहर्षभूयस्त्वं चेति (सात्म्यजानि) ॥ ११ ॥**

तत् यथा જેમકે जसे, आरोग्यम् આરોગ્ય आरोग्य, अनालस्यम् આળસનો અભાવ स्फूर्ति, अलोलुपत्वम् લોલુપતાનો અભાવ अलोलुपता, इन्द्रियप्रसादः ઇન્દ્રિયોની પ્રસન્નતા इन्द्रियोंकी प्रसन्नता, स्वर वर्ण बीज-सपत् સ્વર, વર્ણ તથા બીજની સંપત્તિ स्वर, वर्ण तथा बीजकी सम्पन्नता, प्रहर्ष-भूयस्त्वम् च इति અને હર્ષની અધિકતા और हर्षकी अधिकता, (सात्म्यजानि એ સાત્મ્યજ છે ये सात्म्यज है) ॥ ११ ॥

11. These are health, freedom from sluggishness, absence of excessive or depraved appetites, clearness of the senses, excellence of voice, complexion, virility and sex-vigor.

गर्भस्य रसजत्वप्रतिपादन, रसजा भावाश्च—

**रसजश्चायं गर्भः। न हि रसादृते मातुः प्राणयात्राऽपि स्यात्, किं पुनर्गर्भजन्म। न चैवासम्यगुपयुज्यमाना रसा गर्भमभिनिर्वर्तयन्ति, न च केवलं सम्यगुपयोगादेव रसानां गर्भाभिनिर्वृत्तिर्भवति, समुदायोऽप्यत्र कारणमुच्यते।**

अयम् આ यह, गर्भ ગર્ભ गर्भ, रसज च રસજ પણ છે रसज भी है, हि કારણકે क्योंकि, रसात् ऋते રસ વિના रसके बिना, मातु. માતાની माताकी, प्राणयात्रा अपि પ્રાણસ્થિતિ પણ प्राणयात्रा भी, न स्यात् સંભવતી નથી नही हो सकती, किम् पुन તો પછી तो फिर, गर्भजन्म ગર્ભનો જન્મ ક્યાંથી થાય? गर्भजन्म कहासे हो सके?, असम्यक् યથાવિધિ નહિ अविधिपूर्वक, उपयुज्यमाना. યોજાયેલા सेवन किये, रसा રસો रस, गर्भम् ગર્ભને गर्भको, न च एव अभिनिर्वर्तयन्ति નથી જ ઉત્પન્ન કરતા नही उत्पन्न करते है, रसानाम् અને રસોના और रसोके, केवलम् કેવળ केवल, सम्यक् સમ્યક્ सम्यक्, उपयोगात् ઉપયોગથી उपयोगसे, एव જ ही, गर्भाभिनिर्वृत्ति ગર્ભની ઉત્પત્તિ गर्भकी उत्पत्ति, न च નથી नहीं, भवति થતી होती, अत्र અહીં यहा, समुदाय. શુક્ર, શોણિત આદિ ભાવોનો સમુદાય शुक्रशोणित

१२ न चैवासम्यगुपयुज्यमाना—न चैवास्या असम्यगुपयुज्यमाना (च. प)

,, समुदायोऽप्यत्र—समुदायोऽत्र (ग.)

,, ,, —समुदयोऽप्यत्र (ढ.)

आदि भावोंका समुदाय, अपि પણ भी, कारणम् કારણ कारण, उच्यते કહેવાય છે कहा जाता है;

12-(1). In one sense, the embryo is born of nourishment, too. For without nourishment the mother cannot even live, let alone bring forth her young. Nevertheless nourishment, improperly imbibed, does not conduce to conception; nor, to be sure, does conception result solely from the proper use of nourishment; here, too, it is the complex of factors that is said to be the cause.

**यानि तु खल्वस्य गर्भस्य रसजानि, यानि चास्य रसतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः;**

अस्य गर्भस्य खलु આ ગર્ભના इस गर्भके, यानि तु જે જો, रसजानि રસજ ભાવો છે रसज भाव है, सभवत अर्थात् ઉત્પન્ન થતા अर्थात् उत्पन्न होते हुए, अस्य આ ગર્ભના इस गर्भके, यानि જે ભાવો जो भाव, रसतः રસસેવનથી रससेवनसे, सभवन्ति સંભવે છે उत्पन्न होते हैं, तानि તેઓનું उनका, अनुव्याख्यास्याम વ્યાખ્યાન કરશું व्याख्यान करेंगे,"

12-(2). We shall enumerate the nourishment-born parts of the embryo i. e. those that pass from nourishment to the embryo during formation.

**तद्यथा—शरीरस्याभिनिर्वृत्तिरभिवृद्धिः प्राणानुबन्धस्तृप्तिः पुष्टिरुत्साहश्चेति (रसजानि) ॥१२॥**

तत् यथा જેમકે जैसे, शरीरस्य શરીરની शरीरकी अभिनिर्वृत्ति ઉત્પત્તિ उत्पत्ति, अभिवृद्धिः વધવું वढ़ना, प्राणानुबन्ध પ્રાણાનુબંધ प्राणका बना रहना, तृप्ति. તૃપ્તિ तृप्ति., पुष्टिः પુષ્ટતા पुष्टि, उत्साहः च इति અને ઉત્સાહ और उत्साह, (रसजानि એ રસજ છે ये रसजन्य है) ॥१२॥

12. These are—the differentiation of limbs and their proper development, invigoration, satisfaction, plumpness and enthusiasm

सत्त्वस्य (मनस.) औपपादुकत्वप्रतिपादनं, सत्त्वजा भावाश्च—

**अस्ति खलु सत्त्वमौपपादुकं; यज्जीवं स्पृक्शरीरेणाभिसंबध्नाति, यस्मिन्नपगमनपुरस्कृते शीलमस्य व्यावर्तते, भक्तिर्विपर्यस्यते, सर्वेन्द्रियाण्युपतप्यन्ते, बलं हीयते, व्याधय आप्याय्यन्ते, यस्माद्धीनः प्राणाञ्जहाति, यदिन्द्रियाणामभिग्राहकं च 'मन' इत्यभिधीयते; तत् त्रिविधमाख्यायते—शुद्धं, राजसं, तामसमिति ।**

सत्त्वम् खलु મન मन, औपपादुकम् બીજા શરીર સાથે આત્માનો સબંધ કરનાર दूसरे शरीरके साथ आत्माका सबन्ध करनेवाला, अस्ति છે है, यत् જે जो, जीवम् જીવાત્માને जीवको, स्पृक्शरीरेण સ્પર્શવાળા શરીર સાથે स्पर्शयुक्त शरीरसे, अभिसवध्नाति જોડે છે जोड़ता है, यस्मिन् જે जिसके अपगमन- દેહાન્તરમાં જવા देहान्तरमें जानेको, पुरस्कृते તૈયાર થાય છે ત્યારે तत्पर होने पर, अस्य એનો इसका, शीलम् સ્વભાવ स्वभाव, व्यावर्तते બદલાઈ જાય છે बदल जाता है, भक्तिः રુચિ रुचि, विपर्यस्यते વિપરીત થઈ જાય છે विपरीत हो जाती है, सर्वेन्द्रियाणि સર્વે ઇન્દ્રિયો सब इन्द्रिया, उपतप्यन्ते સંતાપ પામે છે संतप्त होती है, बलम् બળ बल, हीयते ઘટે છે घटता है, व्याधयः વ્યાધિઓ रोग, आप्याय्यन्ते વૃદ્ધિ પામે છે बढते हैं, यस्मात् જેથી जिससे, हीनः રહિત બની रहित हो कर, प्राणान् पुरुष પ્રાણોને पुरुष प्राणोंको, जहाति તજે છે छोड़ देता है, इन्द्रियाणाम् અને ઇન્દ્રિયોનું और इन्द्रियोंका, अभिग्राहकम् નિયામક अभिग्राहक (विषयोंमें प्रेरक), यत् च જે जो, मनः મન मन, इति એ નામથી इस संज्ञासे, अभिधीयते કહેવાય છે कहा जाता है, तत् તે वह, शुद्धम् સાત્વિક सात्त्विक, राजसम् રાજસ राजस,

१२. शरीरस्याभिनिर्वृत्ति.—शरीराभिप्रवृत्ति (ध)

१३ अस्ति खलु सत्त्वमौपपादुकम्—अस्ति खल्वपि सत्त्वमुपपादुकम् (क. ख. छ थ.)

„ जीव स्पृक्शरीरेण—जीवस्पृक्शरीरेण (ध.)

तामसम् च અને તામસ और तामस, इति એ इन, त्रिविधम् ત્રણ પ્રકારનું तीन प्रकारका, आख्यायते કહેવાય છે कहाता है;

13-(1). There is also the connecting agent which is the mind. That which yokes the spirit with the sentient organism, that on the imminence of whose departure virtue leaves the body, the inclinations change, all the sense-organs are distraught, strength wanes, diseases get aggravated, and finally on whose departure the organism is bereft of life and which holds the senses together—this is called the mind. It is said to be of three types—pure, passionate and inert.

**येनास्य खलु मनो भूयिष्ठं, तेन द्वितीयायामाजातौ संप्रयोगो भवति; यदा तु तेनैव शुद्धेन संयुज्यते, तदा जातेरतिक्रान्ताया अपि स्मरति। स्मार्तं हि ज्ञानमात्मनस्तस्यैव मनसोऽनुबन्धादनुवर्तते, यस्यानुवृत्तिं पुरस्कृत्य पुरुषो 'जातिस्मर' इत्युच्यते ।**

येन જે ગુણથી जिस गुणसे, अस्य આનું इसका, मनः મન मन, भूयिष्ठम् અધિક યુક્ત હોય છે अधिक युक्त होता है, तेन તે ગુણથી उस गुणसे, द्वितीयायाम् બીજા दूसरे, आजातौ જન્મમાં जन्ममें, संप्रयोग. યોગ योग, भवति થાય છે होता है, यदा तु જ્યારે जब, तेन एव તે જ उसी, शुद्धेन શુદ્ધ મનથી शुद्ध सत्त्वके साथ, संयुज्यते સંયુક્ત થાય છે संयुक्त होता है, तदा ત્યારે तब, अतिक्रान्ताया વ્યતીત पूर्वके, जाते જન્મનું जन्मका, अपि પણ भी, स्मरति સ્મરણ કરે છે स्मरण करता है, हि કારણકે क्योंकि, आत्मन. આત્માનું आत्माका, स्मार्तम् સ્મૃતિરૂપ स्मृतिरूप, ज्ञानम् ज्ञान ज्ञान, तस्य एव તે જ उसी, मनस મનના मनके, अनुबन्धात् અનુબંધથી अनुबन्धसे, अनुवर्तते અનુવર્તન કરે છે रहता है, यस्य જેના जिसकी, अनुवृत्तिम् અનુવર્તનને अनुवृत्तिको, पुरस्कृत्य લઈને लेकर, पुरुष પુરુષ पुरुष, जातिस्मर. જાતિસ્મર जातिस्मर, इति એમ ऐसा, उच्यते કહેવાય છે कहा जाता है।

13-(2) Now, of whatever dominant type a man's mind is in this life, he gets linked to that very type in the next birth. Thus, for instance, when he is linked to that very pure type of mind that he possessed in the previous existence, then he can recall the past incarnation as well. Hence memory follows the spirit because it remains linked to the same mind; it is in consequence of this that a particular person is said to be a "Jatismara" (one who remembers his past birth).

**यानि खल्वस्य गर्भस्य सत्त्वजानि, यान्यस्य सत्त्वतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः;**

अस्य આ इस, गर्भस्य खलु ગર્ભના गर्भके, यानि જે जो, सत्त्वजानि સત્ત્વજ ભાવ છે सत्त्वज भाव हैं, संभवतः અર્થાત્ ઉત્પન્ન થતા अर्थात् उत्पन्न होते, अस्य આ ગર્ભના इस गर्भके, यानि જે ભાવો जो भाव, सत्त्वतः મનથી मनसे, संभवन्ति ઉત્પન્ન થાય છે उत्पन्न होते है, तानि તેઓનું उनका, अनुव्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे;

13-(3) We shall now enumerate the mind-born parts of the embryo, i. e. those that pass to the embryo during formation, from the mind.

**तद्यथा—भक्तिः शीलं शौचं द्वेषः स्मृतिर्मोहस्त्यागो मात्सर्यं शौर्यं भयं क्रोधस्तन्द्रोत्साह-**

---

१३ द्वितीयायामाजातौ–द्वितीयाया जातौ (क च ध)

,, ,, द्वितीयामाजाति (फ)

,, जातेरतिक्रान्ताया अपि–जातिमतिक्रान्तामपि (फ.)

**स्तैक्ष्ण्यं मार्दवं गाम्भीर्यमनवस्थितसत्त्वमित्येवमादयश्चान्ये, ते सत्त्वविकारा यानुत्तरकालं सत्त्वभेदमधिकृत्योपदेक्ष्यामः। नानाविधानि खलु सत्त्वानि, तानि सर्वाण्येकपुरुषे भवन्ति, न च भवन्त्येककालम्, एकं तु प्रायोवृत्त्याऽऽह ॥ १३ ॥**

तद् यथा જેમકે जैसे, भक्ति ભક્તિ भक्ति, शीलम् શીલ शील, शौचम् પવિત્રતા पवित्रता, द्वेषः દ્વેષ द्वेष, स्मृतिः સ્મૃતિ स्मृति, मोह. મોહ मोह, त्यागः ત્યાગ त्याग, मात्सर्यम् માત્સર્ય मात्सर्य, शौर्यम् શૌર્ય शौर्य, भयम् ભય भय, क्रोधः ક્રોધ क्रोध, तन्द्रा તન્દ્રા तन्द्रा, उत्साह ઉત્સાહ उत्साह, तैक्ष्ण्यम् તીક્ષ્ણતા तीक्ष्णता, मार्दवम् માર્દવ मृदुता, गाम्भीर्यम् ગંભીરતા गमीरता, अनवस्थितत्वम् ચંચળતા चंचलता, इति એ ये, एवमादयः च અને એવા और ऐसे, अन्ये च બીજા दूसरे, ते તે वे, सत्त्वविकाराः સત્ત્વના વિકારો છે सत्त्वके विकार हैं, यान् જેનો जिनको, सत्त्वभेदम् સત્ત્વભેદને सत्त्वभेदके, अधिकृत्य ઉદ્દેશીને अनुसार, उत्तरकालम् પછી आगे, उपदेक्ष्यामः ઉપદેશ કરશુ कहेंगे, सत्त्वानि खलु સત્ત્વ सत्त्व, नानाविधानि વિવિધ પ્રકારનાં છે नानाप्रकारके है, तानि તે वे, सर्वाणि સર્વ सब, एकपुरुषे એક પુરુષમાં एक पुरुषमें, भवन्ति હોય છે होते हैं, एककालम् च પરંતુ એકજ સમયે परन्तु एक कालमे, न भवन्ति હોતાં નથી नहीं होते, एकम् तु મનુષ્ય એક ગુણવાળો તો मनुष्यको एक गुणवाला तो, प्रायोवृत्त्या ગુણની અધિક વૃત્તિથી गुणकी अधिक वृत्तिसे, आह કહેવાય છે कहते हैं ॥ १३ ॥

13. These are—inclination, character, purity, hate, recollection, infatuation, liberality, envy, valour, fear, anger, torpor, enthusiasm, keenness, softness, profundity, fickleness, and such others, as also the conditions of the mind, which we shall later describe in connection with the analysis of mind. The mind is indeed of diverse dispositions, all these, obtain in the same man but not at the same time. When a man is said to be of a particular disposition, he is said to be so by reason of its preponderance.

गर्भस्य समुदायप्रभवत्वसाधनोपसंहार —

**एवमयं नानाविधानामेषां गर्भकराणां भावानां समुदायादभिनिर्वर्तते गर्भः; यथा—कूटागारं नानाद्रव्यसमुदायात्, यथा वा—रथो नानारथाङ्गसमुदायात्; तस्मादेतदवोचाम—मातृजश्चायं गर्भः, पितृजश्च, आत्मजश्च, सात्म्यजश्च, रसजश्च, अस्ति च सत्त्वमौपपादुकमिति (होवाच भगवानात्रेयः) ॥ १४ ॥**

यथा જેમ जिस प्रकार, कूटागारम् તંબુ तम्बू, नानाद्रव्यसमुदायात् વિવિધ દ્રવ્યના સમૂહથી બને છે नाना द्रव्योंके मेलसे होता है, यथा वा અથવા જેમ अथवा जैसे, रथ. રથ रथ, नाना-रथाङ्ग- રથના વિવિધ અંગોના नाना अगोंके, समुदायात् સમુદાયથી બને છે समुदायसे बनता है, एवम् એમ इस प्रकार, एषाम् આ इन, नानाविधानाम् વિવિધ પ્રકારના नाना प्रकारके, गर्भकराणाम् ગર્ભકર गर्भोत्पादक, भावानाम् ભાવોના भावोंके, समुदायात् સમુદાયથી समुदायसे, अयम् આ यह, गर्भ. ગર્ભ गर्भ, अभिनिर्वर्तते ઉત્પન્ન થાય છે उत्पन्न होता है, तस्मात् તેથી इस लिए, एतत् આ यह, अवोचाम અમે કહ્યુ છે કે हमने कहा है कि, अयम् આ यह, गर्भ ગર્ભ गर्भ, मातृजः च માતૃજ मातृज, पितृजः च પિતૃજ पितृज, आत्मजः च આત્મજ आत्मज, सात्म्यज. च સાત્મ્યજ सात्म्यज, रसजः च અને રસજ છે और रसज है, सत्त्वम् च તથા મન तथा मन, औपपादुकम् આત્માનુ બીજા શરીર સાથે ઘટક आत्माका अन्य शरीरके साथ घटक, अस्ति इति છે है, (भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, उवाच ह એમ કહ્યું ऐसा कहा) ॥ १४ ॥

---

१३ 'विकारा.—'विषया (प)

" सत्त्वविकाराः—सत्त्वजा विकाराः (च.छ)

" तानि सर्वाण्येकपुरुषे भवन्ति—तान्येकपुरुषे भवन्ति (ख)

" प्रायोवृत्त्याऽऽह—प्रायोऽनुवृत्त्याऽऽह (थ.घ.)

१४ 'औपपादुकम्—उपपादुकम् (ख.च)

14 In this manner, this embryo comes into existence from the coming together of these various procreative factors just as a tent from the assemblage of various materials, or as a chariot from the combination of various parts of the chariot. Therefore did we assert this that the embryo is mother-born, father-born, spirit-born, concordance-born and nourishment-born. There is over and above the connecting agent, the mind" (Thus declared the sage Atreya)

आत्रेयकृते सिद्धान्ते भरद्वाजस्य दोषारोप.—

**भरद्वाज उवाच—यद्ययमेषां नानाविधानां गर्भकराणां भावानां समुदायादभिनिर्वर्तते गर्भः कथमयं सन्धीयते, यदि चापि सन्धीयते कस्मात् समुदायप्रभवः सन् गर्भो मनुष्यविग्रहेण जायते, मनुष्यश्च मनुष्यप्रभव उच्यते; तत्र चेदिष्टमेतद्यस्मान्मनुष्यो मनुष्यप्रभवस्तस्मादेव मनुष्यविग्रहेण जायते, यथा—गौर्गोप्रभवः, यथा—चाश्वोऽश्वप्रभव इति; एवं सति यदुक्तमग्रे समुदयात्मक इति तदयुक्तम्। यदि च मनुष्यो मनुष्यप्रभवः, कस्माज्जडान्धकुब्जमूकवामनमिन्मिनव्यङ्गोन्मत्तकुष्ठिकिलासिभ्यो जाताः पितृसदृशरूपा न भवन्ति। अथात्रापि बुद्धिरेवं स्यात्—स्वेनैवायमात्मा चक्षुषा रूपाणि वेत्ति, श्रोत्रेण शब्दान्, घ्राणेन गन्धान्, रसनेन रसान्, स्पर्शनेन स्पर्शान्, बुद्ध्या बोद्धव्यमित्यनेन हेतुना न जडादिभ्यो जाताः पितृसदृशा भवन्ति। अत्रापि प्रतिज्ञाहानिदोषः स्यात्, एवमुक्ते ह्यात्मा सत्स्विन्द्रियेषु ज्ञः स्यादसत्स्वज्ञः; यत्र चैतदुभयं संभवति ज्ञत्वमज्ञत्वं च, सविकारश्चात्मा। यदि च दर्शनादिभिरात्मा विषयान् वेत्ति, निरिन्द्रियो दर्शनादिविरहादज्ञः स्यात्, अज्ञत्वादकारणम्, अकारणत्वाच्च नात्मेति वाग्वस्तुमात्रमेतद्वचनमनर्थं स्यादिति (होवाच भरद्वाजः) ॥१५॥**

१५. पितृसदृशरूपा—पितृसदृशा (ध)
,, अत्रापि प्रतिज्ञाहानिदोष स्यात्—अत्रापि प्रतिज्ञादोष. स्यात् (ख)
,, सविकारश्चात्मा—सविकारप्रकृतिकश्चात्मा (ख ध.)

भरद्वाज. ભરદ્વાજ भरद्वाजने, उवाच બોલ્યા कहा, यदि જો यदि, एषाम् આ इन, नानाविधानाम् વિવિધ પ્રકારના नाना प्रकारके, गर्भकराणाम् ગર્ભકર गर्भकर, भावानाम् ભાવોના भावोंके, समुदायात् સમુદાયથી समुदायसे, अयम् આ यह, गर्भः ગર્ભ गर्भ, अभिनिर्वर्तते ઉત્પન્ન થાય છે उत्पन्न होता है, अयम् તો પછી એ तो फिर यह, कथम् કેવી રીતે कैसे, संधीयते જોડાય છે जुड़ जाता है, यदि च અને જો और यदि, सन्धीयते अपि જોડાય પણ છે जुड जाता है, गर्भ. તો ગર્ભ तो गर्भ, समुदाय- प्रभव. સમુદાયથી ઉત્પન્ન થતો समुदायसे उत्पन्न, सन् હોવા છતાં हो कर, कस्मात् શાથી किस कारणसे, मनुष्य- विग्रहेण મનુષ્યશરીરે मनुष्यशरीरसे, जायते જન્મે છે उत्पन्न होता है, मनुष्यः च અને મનુષ્ય और मनुष्य, मनुष्यप्रभव. મનુષ્યથી જન્મેલો मनुष्यसे उत्पन्न, उच्यते કહેવાય છે कहा जाता है, तत्र ત્યાં यहा, यस्मात् જેથી जिस कारणसे, मनुष्यः માણસ मनुष्य, मनुष्यप्रभव. માણસથી ઉત્પન્ન થાય છે मनुष्यसे उत्पन्न होता है, तस्मात् તેથી उस कारणसे, एव જ ही, मनुष्य-विग्रहेण તે મનુષ્યસ્વરૂપે वह मनुष्यशरीरसे, जायते જન્મે છે उत्पन्न होता है, यथा જેમકે जैसे, गौः બળદ बैल, गोप्रभवः બળદથી જન્મે છે बैलसे उत्पन्न होता है, यथा અને જેમકે और जैसे, अश्व च ઘોડો घोड़ा, अश्वप्रभव. इति ઘોડાથી જન્મે છે घोडेसे उत्पन्न होता है, एतत् એ यह, इष्टम् चेत् આપને ઇષ્ટ હોય તો आपको इष्ट हो तो, एवम् सति એવો સ્વીકાર કરતાં ऐसा स्वीकार करने पर, समुदयात्मक ગર્ભ સમુદાયાત્મક છે गर्भ समुदायात्मक है, इति એમ ऐसा, यत् अग्रे જે અગાઉ जो आगे, उक्तम् કહ્યું છે कहा है, तत् તે वह, अयुक्तम् અસંગત થશે अयुक्त ठहरेगा, यदि च અને જો और यदि, मनुष्यः માણસ मनुष्य, मनुष्यप्रभव માણસથી ઉત્પન્ન થાય છે તો मनुष्यसे उत्पन्न होता है तो, जड- જડ मूर्ख, अन्ध- અન્ધ अन्ध, कुब्ज- કૂબડો कुबडे, मूक મૂંગો मूगे, वामन ઠીંગણો ठिंगने, मिन्मिन- ગૂંગણો गूंगे, व्यङ्ग- વ્યંગ व्यंग, उन्मत्त- ઉન્મત્ત उन्मत्त (पागल), कुष्ठि- કુષ્ઠરોગી कुष्ठी,

किलासिभ्यः અને કિલાસરોગીથી और किलासरोगीसे, जाताः ઉત્પન્ન થયેલા उत्पन्न हुए, पितृसदृश- પિતા જેવાં पिताके सदृश, रूपाः રૂપવાળા रूपवाले, न भवन्ति નથી થતા नहीं होते, अथ अत्र अपि અહીં પણ यहा भी, एवं बुद्धिः આપની એવી માન્યતા आपकी ऐसी समझ, स्यात् થશે કે होगी कि, अयम् आत्मा આ આત્મા यह आत्मा, स्वेन एव પોતાનાં જ अपने ही, चक्षुषा रूपाणि ચક્ષુથી રૂપોને चक्षुसे रूपोंको, श्रोत्रेण शब्दान् કાનથી શબ્દોને श्रोत्रसे शब्दोंको, घ्राणेन गन्धान् ઘ્રાણથી ગંધને घ्राणसे गन्धको, रसनेन रसान् રસનેન્દ્રિયથી રસને रसनासे रसोंको, स्पर्शनेन સ્પર્શેન્દ્રિયથી स्पर्शइन्द्रियसे, स्पर्शान् સ્પર્શને स्पर्शोंको, बुद्ध्या અને બુદ્ધિથી और बुद्धिसे, बोद्धव्यम् જ્ઞાતવ્ય વસ્તુને ज्ञातव्यको, वेत्ति જાણે છે जानता है, इति अनेन આ इस, हेतुना હેતુથી हेतुसे, जडादिभ्य. જડાદિથી जड आदिसे, जाता. ઉત્પન્ન થયેલાં સંતાનો उत्पन्न हुई सन्तान, पितृसदृशाः પિતા જેવાં पिताके सदृश, न भवन्ति હોતાં નથી नहीं होती, अत्र अपि અહીં પણ इसमें भी, प्रतिज्ञाहानि- પ્રતિજ્ઞાહાનિરૂપ प्रतिज्ञाहानिरूप, दोषः દોષ दोष, स्यात् થાય છે होता है, हि કારણકે क्योंकि, एवम् उक्ते એમ કહેતાં ऐसा कहने पर, आत्मा આત્મા आत्मा, इन्द्रियेषु ઇન્દ્રિયો इन्द्रियोंके, सत्सु હોતાં होने पर, ज्ञः જ્ઞાનવાન ज्ञानी, स्यात् થશે होगा, असत्सु અને નહિ હોતાં और न होने पर, अज्ञ· અજ્ઞાની થશે अज्ञानी होगा, यत्र च વળી જ્યાં फिर जिसमें, ज्ञत्वम् જ્ઞત્વ ज्ञानका होना, अज्ञत्वम च અને અજ્ઞત્વ और अज्ञानका होना, एतत् उभयम् એ બન્ને इन दोनोंका, संभवति સંભવે તો सम्भव हो तो, आत्मा તે આત્મા वह आत्मा, सविकारः च વિકારવાન થશે विकारवान होगा, यदि च અને જો और यदि, दर्शनादिभि· ચક્ષુ આદિ દ્વારા चक्षु आदि इन्द्रियोंसे, आत्मा આત્મા आत्मा, विषयान् વિષયોને विषयोंको, वेत्ति જાણે છે जानता है, निरिन्द्रिय. તો નિરિન્દ્રિય આત્મા तो इन्द्रियरहित आत्मा, दर्शनादि- ચક્ષુરાદિના चक्षु आदिके, विरहात् અભાવથી अभावसे, अज्ञ· स्यात् અજ્ઞ થશે अज्ञ होगा, अज्ञत्वात् અને અજ્ઞ હોવાથી और अज्ञ होनेसे, अकारणम् તે કારણ બની શકતો નથી वह कारण नहीं बन सकता, अकारणत्वात् च અને કારણરૂપ ન હોવાથી और अकारण होनेसे, आत्मा न તે આત્મા નથી वह आत्मा नहीं है, इति એવું ऐसा, वाग्वस्तुमात्रम् કેવળ વાણીમાત્ર વસ્તુરૂપ बकवादमात्र, एतत् આ यह, वचनम् વચન वचन, अनर्थम् નિરર્થક निरर्थक, स्यात् इति છે है, (भरद्वाजः ભરદ્વાજ भरद्वाजने, उवाच ह એમ બોલ્યા ऐसा कहा) ॥ १५ ॥

15. At this stage, Bharadwaja said, ' If the the embryo thus arises from the assemblage of various procreative factors, how is it integrated? And granted that the integration is effected somehow why does the embryo springing as it does, from a complex, emerge in the shape of man? Now man is said to be the offspring of man If, then, it is said that in as much as man is sprung of man, he emerges with a man's form, as for instance an ox is the offspring of an ox, or as a horse is the offspring of a horse, if this is the position then what has been said before—that man is of the nature of a conglomeration, becomes untenable. If, moreover, man is man's offspring, then why are those, sprung of the idiotic, blind, hunch-backed, mute, dwarfish, lisping, deformed, insane, those suffering from dermatosis or leprous lesions, unlike the parents? If, in order to explain away this difficulty the assumption is that the spirit perceives forms by its own vision, sounds by its own audition, odors by its own sense of smell, tastes by its own sense of tastes, the tangible objects by its own sense of

feeling, and ideas by its own understanding; and on account of this, the offspring of the idiotic etc., are not like their parents. Even so, you are open to the charge of going back on your thesis, for from what you now say it follows that the spirit is aware when the senses are present, and when they are absent, it is not aware and when both conditions obtain then the spirit is aware in respect of those senses that are present and unaware in respect of those senses that are absent. It follows also that the spirit is mutable. If, then, by means of vision etc., the spirit percevies objects, then in the absence of sense-organs deprived of vision etc., it is reduced to inertness. Since it is intert, it is no agent, and since it is not an agent, by the same token it is not the spirit Thus the whole argument is meaningless, with only words as its content." (Thus said Bharadwaja).

आत्रेयकृत तत्खण्डनम्—

**आत्रेय उवाच—पुरस्तादेतत् प्रतिज्ञातं—सत्त्वं जीवं स्पृक्शरीरेणाभिसंबध्नातीति। यस्मात्तु समुदायप्रभवः सन् स गर्भो मनुष्यविग्रहेण जायते, मनुष्यो मनुष्यप्रभव इत्युच्यते, तद्वक्ष्यामः—भूतानां चतुर्विधा योनिर्भवति—जराय्वण्डस्वेदोद्भिदः।**

आत्रेय આત્રેયે आत्रेयने, उवाच કહ્યું कहा, पुरस्तात् પહેલાં पहले, एतत् એ यह, प्रतिज्ञातम् પ્રતિજ્ઞા કરી છે કે प्रतिज्ञा की है कि, सत्त्वम् મન मन, जीवम् જીવને जीवको, स्पृक्- शरीरेण સ્પર્શવાળા શરીર સાથે स्पर्शवाले शरीरके साथ, अभिसंबध्नाति इति જોડે છે जोड़ता है, यस्मात् तु વળી જે કારણથી और जिस कारणसे, समुदाय- સમુદાયથી समुदायसे, प्रभवः सन् ઉત્પન્ન થતો उत्पन्न हो कर, सः गर्भः તે ગર્ભ वह गर्भ, मनुष्य- મનુષ્યના मनुष्यके, विग्रहेण શરીરે शरीरसे, जायते ઉત્પન્ન થાય છે उत्पन्न होता है, मनुष्य અને मनुष्य और मनुष्य, मनुष्यप्रभवः મનુષ્યથી ઉત્પન્ન થાય છે मनुष्यसे उत्पन्न होता है, इति એમ ऐसा, उच्यते કહેવાય છે कहा जाता है, तत् તે उसे, वक्ष्यामः કહેશું कहेंगे, भूतानाम् પ્રાણીઓની प्राणियोंकी, चतुर्विधा ચાર પ્રકારની चार प्रकारकी, योनि યોનિ योनि, भवति છે है, जरायु- જરાયુ जरायु, अण्ड- અંડ अण्ड, स्वेद- સ્વેદ स्वेद, उद्भिद. અને ઉદ્ભિદ્ और उद्भिद् ।

16 (1) Atreya replied, " From the outset this has been our contention, viz, that the mind links the spirit with the sentient organism. We shall now explain why, although springing from a complex, the human embryo emerges in the shape of man and also why man is spoken of as the offspring of man. There are four methods of propagation for living beings; from the womb, from the egg, from the sweat, and from the seed.

**तासां खलु चतसृणामपि योनीनामेकैका योनिरपरिसंख्येयभेदा भवति, भूतानामाकृतिविशेषापरिसंख्येयत्वात् ।**

भूतानाम् પ્રાણીઓની प्राणियोंकी, आकृति- આકૃતિના आकृतिके, विशेष- ભેદો भेद, अपरिसंख्येयत्वात् અસંખ્ય હોવાને લીધે असंख्य होनेसे, तासाम् चतसृणाम् તે ચાર उन चार, योनीनाम् अपि યોનિઓમાં પણ योनियोंमें भी, एकैका પ્રત્યેક प्रत्येक, योनिः યોનિ योनि, अपरिसंख्येयभेदा અગણિત ભેદોવાળી असंख्य भेदोंवाली, भवति થાય છે होती है।

१६. जीव—जीव° (प. प.)

16-(2). Among these four kinds of breeds, each single breed is of countless varieties by reason of the diversities of the shapes of creatures being countless.

**तत्र जरायुजानामण्डजानां च प्राणिनामेते गर्भकरा भावा यां यां योनिमापद्यन्ते, तस्यां तस्यां योनौ तथातथारूपा भवन्ति; यथा—कनकरजतताम्रत्रपुसीसकान्यासिच्यमानानि तेषु तेषु मधूच्छिष्टविग्रहेषु, तानि यदा मनुष्यबिम्बमापद्यन्ते तदा मनुष्यविग्रहेण जायन्ते, तस्मात् समुदायप्रभवः सन् गर्भो मनुष्यविग्रहेण जायते; मनुष्यश्च मनुष्यप्रभव उच्यते, तद्योनित्वात् ॥ १६ ॥**

तत्र તેઓમાં उनमें, जरायुजानाम् જરાયુજ जरायुज, अण्डजानाम् च તથા અંડજ और अण्डज, प्राणिनाम् પ્રાણીઓના प्राणियोंके, एते એ ये, गर्भकराः ગર્ભોત્પાદક गर्भोत्पादक, भावाः ભાવો भाव, याम् याम् જે જે जिस जिस, योनिम् યોનિને योनिको, आपद्यन्ते પ્રાપ્ત થાય છે प्राप्त होते हैं, तस्याम् तस्याम् તે તે उस उस, योनौ યોનિમાં योनिमें, तथातथा- તેવા તેવા वैसे वैसे, रूपा રૂપોવાળા रूपवाले, भवन्ति થાય છે होते है, यथा જેવી રીતે जैसे, कनक- સોના सुवर्ण, रजत- ચાંદી चांदी, ताम्र- તાંબા ताम्र त्रपु- કલઈ कलई, सीसकानि અને સીસાને और सीसेको, तेषु तेषु તે તે उन उन, मधूच्छिष्ट- મીણથી બનાવેલા मोमसे बनाये हुए, विग्रहेषु માટીના બીબાંમાં मिट्टीके साचोंमें, आसिच्यमानानि પીગાળી રેડવામાં આવતાં તેઓ पिघला कर डालनेसे वे, ( तथा- तथा- તેવાં તેવાં वैसे वैसे, रूपाणि રૂપવાળાં रूपवाले, भवन्ति થાય છે हो जाते है ), तानि यदा તેઓ જ્યારે वे जब, मनुष्यबिम्बम् મનુષ્યના બીબાંને मनुष्यके साचेमें, आपद्यन्ते પ્રાપ્ત થાય છે पहुँचते है, तदा ત્યારે तब, मनुष्यविग्रहेण મનુષ્યશરીરે मनुष्यशरीरसे, जायन्ते ઉત્પન્ન થાય છે उत्पन्न होते है, तस्मात् તેથી इस लिए, समुदाय- સમુદાયથી समुदायसे, प्रभवः सन् ઉત્પન્ન હોવા છતાં उत्पन्न होने पर भी, गर्भः ગર્ભ गर्भ, मनुष्यविग्रहेण મનુષ્યશરીરે मनुष्यशरीरसे, जायते જન્મે છે उत्पन्न होता है, तद् योनित्वात् च અને મનુષ્ય મનુષ્યનો વિશેષે કરી કારણ હોવાથી और मनुष्य मनुष्यका विशेष कर कारण होनेसे, मनुष्यः મનુષ્ય मनुष्य, मनुष्य- મનુષ્યથી मनुष्यसे, प्रभव. ઉત્પન્ન થયેલો उत्पन्न हुआ, उच्यते કહેવાય છે कहा जाता है ॥ १६ ॥

16. Among these four main classes the embryo-forming elements, the viviparous and the oviparous creatures assume the shape of such wombs as those they get into, like gold, silver, copper, tin, or lead that is poured into different moulds fashioned of bee's-wax. When they (the embryo forming elements) find themselves in the human mould, so to speak, they emerge in the human form Thus the embryo, though springing from a complex of causative factors, emerges in the shape of man. This is why also man is said to be the offspring of man, since such is his source

**यच्चोक्तं—यदि च मनुष्यो मनुष्यप्रभवः, कस्मान्न जडादिभ्यो जाताः पितृसदृशरूपा भवन्तीति; तत्रोच्यते—यस्य यस्य ह्यङ्गावयवस्य बीजे बीजभाग उपतप्तो भवति, तस्य तस्याङ्गावयवस्य विकृतिरुपजायते, नोपजायते चानुपतापात्; तस्मादुभयोपपत्तिरप्यत्र ।**

यत् च વળી જે और जो, उक्तम् કહ્યું છે કે कहा है कि, यदि च જો यदि, मनुष्यः મનુષ્ય मनुष्य,

१६ यथा—तद्यथा (ग)

,, °सीसकानि—°सीसानि (च)

,, मधूच्छिष्टविग्रहेषु—मधूच्छिष्टबिम्बेषु (क)

१७. ह्यङ्गावयवस्य—अङ्गावयवस्य (ख)

,, तस्याङ्गावयवस्य—तस्यावयवस्य (ख)

मनुष्य- મનુષ્યથી मनुष्यसे, प्रभव ઉત્પન્ન થાય તો उत्पन्न हो तो, जडादिभ्य જડ આદિથી जड आदिसे, जाता ઉત્પન્ન થયેલા મનુષ્યો उत्पन्न हुए मनुष्य, कस्मात् કેમ क्यों, पितृसदृश- પિતાના જેવા पिताके समान, रूपा રૂપવાળા रूपवाले, न भवन्ति इति નથી થતા ? नहीं होते?, तत्र તે બાબતમાં उस विषयमें, उच्यते કહેવામાં આવે છે कहा जाता है, बीजे બીજમાં बीजमें, यस्य यस्य हि જે જે जिस जिस, अङ्गावयवस्य શરીરના અવયવનો शरीरके अवयवका, बीजभाग બીજભાગ बीजभाग, उपतप्तः દુષ્ટ दुष्ट, भवति થાય છે होता है, तस्य तस्य તે તે उस उस, अङ्गावयवस्य શરીરાવયવની शरीरावयवकी, विकृतिः વિકૃતિ विकृति, उपजायते ઉત્પન્ન થાય છે उत्पन्न होती है, अनुपतापात् અને દુષ્ટ ન હોવાથી और दूषित न होनेसे, न उपजायते વિકૃતિ થતી નથી विकृति नहीं होती, तस्मात् તેથી इस लिए, अत्र અહીં यहां, उभयोपपत्ति अपि બન્નેય બાબત સંગત છે दोनों बातें संगत होती है,

17-(1). Now as regards the objection, why if man is man's offspring, those sprung of the idiotic etc, are not like the parents, we reply Only that limb or organ of the body becomes defective, whose original representative part in the spermo-plasm has been rendered defective, if there is no potential defect there is no manifest deformity either. Therefore the position admits of both possibilities

**सर्वस्य चात्मजानीन्द्रियाणि, तेषां भावाभावहेतुर्दैवं; तस्मान्नैकान्ततो जडादिभ्यो जाताः पितृसदृशरूपा भवन्ति ॥ १७ ॥**

सर्वस्य બધાની सबकी, इन्द्रियाणि ઇન્દ્રિયો इन्द्रियाँ, आत्मजानि આત્મજ છે आत्मज है, तेषाम् તેઓના इनके, भावाभाव- ભાવ અને અભાવનુ भाव और अभावका, हेतुः કારણ कारण, दैवम् દૈવ છે दैव है, तस्मात् તેથી इस लिए, जडादिभ्य· જડાદિથી जडादिसे, जाताः ઉત્પન્ન થયેલા उत्पन्न हुए, एकान्ततः અવશ્ય पितृसदृशरूपा. માતાપિતા જેવા मातापिताके समान रूपवाले, न भवन्ति થતા નથી नहीं होते ॥ १७ ॥

17. In every case the sense-faculties are derived from the spirit; the presence or absence of these faculties is determined, however, by destiny. Thus it is that the offsprings of the idiotic etc., are not of necessity like their parents

**न चात्मा सत्स्विन्द्रियेषु ज्ञः, असत्सु वा भवत्यज्ञः; न ह्यसत्त्वः कदाचिदात्मा, सत्त्वविशेषाच्चोपलभ्यते ज्ञानविशेष इति ॥ १८ ॥**

इन्द्रियेषु सत्सु ઇન્દ્રિયો હોય તો इन्द्रियोंके होने पर, आत्मा આત્મા आत्मा, ज्ञ જ્ઞાની થાય છે ज्ञानी होता है, असत्सु वा અથવા ન હોય તો अथवा न होने पर, अज्ञ અજ્ઞાની अज्ञानी, भवति થાય છે होता है, न च એમ પણ નથી ऐसा भी नहीं है, हि કારણકે क्योंकि, आत्मा આત્મા आत्मा, कदाचित् કદી પણ कभी भी, असत्त्व न મનરહિત હોતો નથી मनरहित नहीं होता, सत्त्वविशेषात् च અને સત્ત્વવિશેષથી और सत्त्वविशेषसे, ज्ञानविशेष જ્ઞાનવિશેષ ज्ञानविशेष, उपलभ्यते इति પ્રાપ્ત થાય છે प्राप्त होता है ॥ १८ ॥

18. It is not that the self is aware when the senses are present, and unware in their absence The truth is that the self is never without the mind, and because it is possessed of the mind it is also seen to be possessed of knowledge.

**भवन्ति चात्र—**

**न कर्तुरिन्द्रियाभावात् कार्यज्ञानं प्रवर्तते ।**
**या क्रिया वर्तते भावैः सा विना तैर्न वर्तते ॥१९॥**
**जानन्नपि मृदोऽभावात् कुम्भकृन्न प्रवर्तते ।**

१९. या क्रिया वर्तते—वै. क्रिया वर्तते (क-त द.)
,, या क्रिया वर्तते भावैः—वै, क्रिया वर्तते या तु (व.च ख प.)

अत्र च આ વિષયમાં इस विषयमें, भवन्ति શ્લોકો છે કે श्लोक है कि, कर्तुः કર્તાને कर्ताको, इन्द्रियाभावात् ઇન્દ્રિયોના અભાવથી इन्द्रियोंके अभावसे, कार्यज्ञानम् કાર્યનું જ્ઞાન कार्यका ज्ञान, न प्रवर्तते થતું નથી नहीं होता, या क्रिया જે ક્રિયા जो क्रिया, यै भावैः જે ભાવોવડે जिन भावोंसे, वर्तते થાય છે होती है, सा તે वह, तैः विना તેઓ સિવાય उनके विना, न वर्तते થતી નથી नहीं होती, कुम्भकृत् કુંભાર कुम्हार, जानन् अपि ઘડાને બનાવવાનું જાણતાં છતાં પણ घड़ेको बनाना जानते हुए भी, मृदः માટીના मिट्टीके, अभावात् અભાવને લીધે अभावके कारण, न प्रवर्तते પ્રવૃત્ત થતો નથી प्रवृत्त नहीं होता ॥ १९½ ॥

Here are verses again—

19-19½. In the absence of the senses, the agent cannot manifest any activity. Whatever operation proceeds from certain factors, in the absence of those factors, it cannot take place In the absence of clay, the potter, though skilful, cannot function.

**श्रूयतां चेदमध्यात्ममात्मज्ञानबलं महत् ॥२०॥**
**इन्द्रियाणि च संक्षिप्य मनः संक्षिप्य चञ्चलम् ।**
**प्रविश्याध्यात्ममात्मज्ञः स्वे ज्ञाने पर्यवस्थितः ॥२१॥**
**सर्वत्रावहितज्ञानः सर्वभावान् परीक्षते ।**

इदम् આ यह, अध्यात्मम् च અધ્યાત્મજ્ઞાન अध्यात्मज्ञान, श्रूयताम् સાંભળો सुनो, आत्मज्ञानबलम् આત્મજ્ઞાનનું બળ आत्मज्ञानका बल, महत् મોટું છે महान् है, इन्द्रियाणि ઇન્દ્રિયોને इन्द्रियोंको, संक्षिप्य વિષયોમાંથી પાછી વાળી विषयोंसे रोक कर, चञ्चलम् અને ચંચળ और चचल, मनः च મનને પણ मनको भी, संक्षिप्य આત્મા સિવાયના વિષયથી પાછું વાળી आत्मासे अतिरिक्त विषयसे रोक कर, अध्यात्मम् આત્મતત્ત્વમાં आत्मतत्त्वमें, प्रविश्य પ્રવેશ કરી प्रवेश करके, स्वे ज्ञाने આત્મજ્ઞાનમાં आत्मज्ञानमें, पर्यवस्थितः સંપૂર્ણપણે સ્થિત થયેલો संपूर्णतया स्थित हुआ, आत्मज्ञ આત્મજ્ઞાની आत्मज्ञानी, सर्वत्र સઘળામાં सर्वत्र, अवहितज्ञान. સમાહિત જ્ઞાનવાળો થઈ समाहित ज्ञानी हो कर, सर्वभावान् સઘળા ભાવોને सब भावोंको, परीक्षते જાણી લે છે जान लेता है ॥ २०-२१½ ॥

20-21½. Now listen to the sovereign power of the knowledge of the self—the spiritual knowledge. The knower of the self, having stilled the senses and the fickle mind, and having come into his own and being established in his own awareness,—his vision extending everywhere, contemplates all existences.

**गृह्णीष्व चे(वे)दमपरं भरद्वाज विनिर्णयम् ॥२२॥**
**निवृत्तेन्द्रियवाक्चेष्टः सुप्तः स्वप्नगतो यदा ।**
**विषयान् सुखदुःखे च वेत्ति नाज्ञोऽप्यतः स्मृतः॥२३॥**

भरद्वाज હે ભરદ્વાજ हे भरद्वाज, इदम् अपरम् આ બીજો इस दूसरे, विनिर्णयम् च નિર્ણય પણ निर्णय को भी, गृह्णीष्व ગ્રહણ કરો ग्रहण करो, निवृत्त-इन्द्रिय-वाक्-चेष्टः ઇન્દ્રિયો- વાણી અને ચેષ્ટારહિત इन्द्रियों-वाणी और चेष्टारहित, सुप्तः નિદ્રાધીન મનુષ્ય सोया हुआ मनुष्य, यदा જ્યારે जब, स्वप्नगत સ્વપ્ન અવસ્થામાં હોય છે स्वप्नावस्थामें होता है, विषयान् ત્યારે વિષયોને तब विषयोंको, सुखदुःखे च તથા સુખદુઃખને तथा सुखदुखको, वेत्ति જાણે છે जानता है, अतः એટલા માટે इसी लिए, अपि પણ भी, अज्ञः આત્માને અજ્ઞાની आत्माको अज्ञानी, न स्मृत કહ્યો નથી नही कहा है ॥ २२-२३ ॥

22-23. O Bharadwaja, accept also this fresh conclusion. Having withdrawn from the activities of the sense-organs and speech, the sleeping man who has passed into the dream-state,

२०. चेदम्—वेदम् (च)
२१. संक्षिप्य—संगृह्य (ष. ज्ञ. त)
„ „ —सयम्य (ष.)
२१½. सर्वत्रावहितज्ञानः—सर्वज्ञ विहितज्ञानः (द.)

२३. स्वप्नगतो—स्वप्नगतान् (ष. ज.अ.)

cognises the objects and pleasure and pain, therefore the self is said never to exist without awareness

**नात्मज्ञानादृते चैकं ज्ञानं किञ्चित् प्रवर्तते ।**
**न ह्येको वर्तते भावो वर्तते नाप्यहेतुकः ॥ २४ ॥**

आत्मज्ञानात् આત્મજ્ઞાન आत्मज्ञानके, ऋते સિવાય विना, किञ्चित् च કોઈપણ कोई भी, ज्ञानम् જ્ઞાન ज्ञान, एकम् ઇન્દ્રિયાદિ કરણરૂપ સહાય વિના इन्द्रियादि करणरूप सहायके विना, न प्रवर्तते પ્રવર્તતુ નથી प्रवृत्त नहीं होता, हि કેમકે क्योंकि, भावः ઉત્પન્ન હોનાર પદાર્થ उत्पन्न होनेवाला पदार्थ, एकः કારણરહિત થઈ એકલો कारणरहित हो कर अकेला, न वर्तते ઉત્પન્ન થતો નથી- उत्पन्न नहीं होता, अहेतुकः अपि અને કર્તા વગર પણ और कर्ताके विना भी न वर्तते ઉત્પન્ન થતો નથી उत्पन्न नहीं होता ॥ २४ ॥

24. There is no cognition of any kind without self awareness, no consequent can exist independently or without a cause.

**तस्माज्ज्ञः प्रकृतिश्चात्मा द्रष्टा कारणमेव च ।**
**सर्वमेतद्भरद्वाज निर्णीतं जहि संशयम् ॥ २५ ॥**

तस्मात् તેથી इसी लिए, आत्मा આત્મા आत्मा, ज्ञ જ્ઞાની ज्ञानवान, प्रकृतिः च વિકારરહિત विकाररहित, द्रष्टा દ્રષ્ટા द्रष्टा, कारणम् एव च અને કારણસ્વરૂપ છે और कारण है, भरद्वाज હે ભરદ્વાજ! हे भरद्वाज!, एतत् सर्वम् એ સઘળુ यह सब, निर्णीतम् નક્કી કરેલુ છે निर्णीत हुआ है, संशयम् સંશયને संशयको, जहि છોડો छोड़ दो ॥ २५ ॥

25 Therefore the self is the knower, the archetype, the seer and the final cause. O Bharadwaja! all this has been definitely established, hence abandon all doubt

अध्यायोक्तविषया: —

तत्र श्लोकौ—

**हेतुर्गर्भस्य निर्वृत्तौ वृद्धौ जन्मनि चैव यः ।**
**पुनर्वसुमतिर्या च भरद्वाजमतिश्च या ॥ २६ ॥**
**प्रतिज्ञाप्रतिषेधश्च विशदश्चात्मनिर्णयः ।**
**गर्भावक्रान्तिमुद्दिश्य खुड्डीकां तत्प्रकाशितम् ॥२७॥**

तत्र તે વિષયમાં उस विषयमें, श्लोकौ ઉપસંહારના બે શ્લોકો છે કે उपसंहारके दो श्लोक हैं कि, गर्भस्य ગર્ભની गर्भकी, निर्वृत्तौ ઉત્પત્તિમાં उत्पत्तिमें, वृद्धौ વૃદ્ધિમાં वृद्धिमें, जन्मनि च एव અને જન્મમાં और जन्ममें, यः हेतुः જે કારણ છે जो कारण है, या च જે जो, पुनर्वसुमतिः પુનર્વસુનો મત છે पुनर्वसुका मत है, या च तथा જે तथा जो, भरद्वाजमतिः ભરદ્વાજનો મત છે તે भरद्वाजका मत है वह, प्रतिज्ञाप्रतिषेधः च પ્રતિજ્ઞાનો પ્રતિષેધ प्रतिज्ञाका प्रतिषेध, विशदः आत्मनिर्णय च અને આત્માનો સ્પષ્ટ નિર્ણય और आत्माका स्पष्ट निर्णय, तत् તે સઘળુ वह सब, खुड्डीकाम् गर्भावक्रान्तिम् ખુડ્ડીકાગર્ભાવક્રાન્તિને खुड्डीका गर्भावक्रान्तिको, उद्दिश्य ઉદ્દેશીને लक्ष्य करके, प्रकाशितम् પ્રકાશિત કર્યું છે प्रकाशित किया है ॥ २६-२७ ॥

Here are the two recapitulatory verses—

26-27. The cause of the manifestation, development and birth of the fetus, what the opinion of Atreya is concerning this subject, and what the opinion is of Bharadwaja; the objection to the proposition, the final conclusion concerning the self—all this has been set forth in this minor chapter relating to the formation of the fetus.

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने खुड्डीकागर्भावक्रान्तिशारीरं नाम तृतीयोऽध्याय ॥ ३ ॥**

२४ नात्मज्ञानादृते चैकं ज्ञानं किञ्चित् प्रवर्तते—आत्मज्ञानादृते चैकं ज्ञानं किञ्चिन्न वर्तते (ख. ध. त.)

२७. तत्प्रकाशितम्—सम्प्रकाशितम् (च ध)

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, शारीरस्थाने શારીરસ્થાનમાં शारीरस्थानमें, 'खुड्डीकागर्भावक्रान्तिशारीरम्' 'ખુડ્ડીકાગર્ભાવક્રાંતિશારીર' 'खुड्डीकागर्भावक्रान्तिशारीर', नाम નામનો नामका, तृतीय ત્રીજો तीसरा, अध्याय. અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ ३ ॥

3. Thus in the section on Human Embodiment in the treatise compiled by Agnivesa and revised by Caraka, the third chapter entitled "The Minor chapter on the formation of the fetus" is completed.

---

## चतुर्थोऽध्यायः ।

### ચોથો અધ્યાય अध्याय चौथा

### Chapter IV

महतीगर्भावक्रान्तिशारीरोपक्रमः—

**अथातो महतीं गर्भावक्रान्तिं शारीरं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

अथ अतः હવે અહીંથી अब आगे, 'महतीम् गर्भावक्रान्तिम् शारीरम्' 'મહતીગર્ભાવક્રાંતિશારીર' નામના અધ્યાયનું 'महतीगर्भावक्रान्तिशारीर' नामके अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥ २ ॥

1. We shall now expound "The major chapter on the formation of the fetus in the section on the Human Embodiment."

2. Thus declared the worshipful Atreya.

अस्मिन्नध्याये व्याख्यास्यमाना विषयाः—

**यतश्च गर्भः संभवति, यस्मिंश्च गर्भसंज्ञा, यद्विकारश्च गर्भः, यया चानुपूर्व्याऽभिनिर्वर्तते कुक्षौ, यश्चास्य वृद्धिहेतुः, यतश्चास्याजन्म भवति, यतश्च जायमानः कुक्षौ विनाशं प्राप्नोति, यतश्च कार्त्स्न्येनाविनश्यन् विकृतिमापद्यते, तदनुव्याख्यास्यामः ॥ ३ ॥**

गर्भ ગર્ભ गर्भ, यतः च જે કારણથી जिन कारणोंसे, संभवति ઉત્પન્ન થાય છે बनता है, यस्मिन् च જેની जिसकी, गर्भसंज्ञा ગર્ભસંજ્ઞા થાય છે गर्भसंज्ञा होती है, गर्भ. ગર્ભ गर्भ, यद्- विकारः च જેનો વિકાર છે जिनका विकार है, यया જે और जिस, आनुपूर्व्या ક્રમ પ્રમાણે परिपाटीसे, कुक्षौ ઉદરમાં कुक्षिमें, अभिनिर्वर्तते નિષ્પન્ન થાય છે निष्पन्न होता है, य च अस्य જે એની जो इसकी, वृद्धिहेतुः વૃદ્ધિનું કારણ છે वृद्धिका हेतु है, यतः च જેનાથી जिस कारणसे, अस्य એની इसकी, अजन्म અનુત્પત્તિ अनुत्पत्ति, भवति થાય છે होती है, यत च જે કારણથી जिस कारणसे, जायमान ગર્ભ જન્મ પામતો गर्भ उत्पन्न होता हुआ, कुक्षौ ઉદરમાં कुक्षिमें, विनाशम् નાશ नष्ट, प्राप्नोति પામે છે होता है, यत च અને જે કારણથી और जिस कारणसे, कार्त्स्न्येन ગર્ભ સંપૂર્ણ गर्भ सपूर्ण, अविनश्यन् નાશ ન પામતાં विनष्ट न हो कर, विकृतिम् વિકૃતિને विकृतिको, आपद्यते પામે છે प्राप्त होता है, तत् તેનું उसका, अनुव्याख्यास्याम. વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ ३ ॥

3. Whence the conception arises, to which the name of 'embryo' is given, whose modification the embryo is, in what order the various stages of the embryo develop in the womb, what makes the embryo wax, by what agency it is prevented from forming

३. अजन्म भवति—अवृद्धिर्भवति (ग)

in the womb, and by what agency, having formed, it perishes in the womb, and why again while not completely destroyed it gets deformed— all this we shall explain in due order.

**मातृतः पितृत आत्मतः सात्म्यतो रसत सत्त्वत इत्येतेभ्यो भावेभ्यः समुदितेभ्यो गर्भः संभवति। तस्य ये येऽवयवा यतो यतः संभवतः संभवन्ति तान् विभज्य मातृजादीनवयवान् पृथक् पृथगुक्तमग्रे ॥ ४॥**

मातृत• માતા माता, पितृतः પિતા पिता, आत्मत આત્મા आत्मा, सात्म्यत સાત્મ્ય सात्म्य, रसत રસ रस, सत्त्वत. અને મન और मन, इति એમ इस प्रकार, एतेभ्य એ इन, समुदितेभ्य સંમિલિત समिलित, भावेभ्य. ભાવોથી भावोंसे, गर्भ ગર્ભ गर्भ, सभवति ઉત્પન્ન થાય છે वनता है, संभवत• तस्य ઉત્પન્ન થતા તે ગર્ભના उत्पन्न होते हुए उस गर्भके, ये ये જે જે जो जो, अवयवा અવયવો अवयव, यतः यतः જે જે ભાવથી जिस जिस भावसे, सभवन्ति ઉત્પન્ન થાય છે बनते हैं, तान् તે તે उन उन, मातृजादीन् માતૃજ વગેરે मातृजादि, अवयवान् અવયવોને अवयवोंको, पृथक् पृथक् પૃથક્ પૃથક્ अलग अलग, विभज्य વિભાગ પાડીને विभाग करके, अग्रे उक्तम् આગલા અધ્યાયમાં કહ્યા છે अगले अध्यायमें कह दिये हैं ॥ ४॥

4. The conception arises from the sum of causative factors emanating from the mother the father, the spirit, the concordance, the nourishment and the mind. As to which of embryonic parts are derived from which of these six coefficient causes at the time of conception and thererfter, we have already described them having classified them under different heads.

शुक्रशोणितजीवसंयोगस्य गर्भसंज्ञत्वम्—

**शुक्रशोणितजीवसंयोगे तु खलु कुक्षिगते गर्भसंज्ञा भवति ॥ ५॥**

कुक्षिगते तु ગર્ભાશયમાં થયેલા कुक्षिगत, शुक्रशोणित- શુક્ર-શોણિત शुक्र शोणित, जीव-संयोगे खलु અને જીવના સંયોગનુ और जीवके संयोगकी, गर्भसंज्ञा 'ગર્ભ એ નામ' 'गर्भ यह संज्ञा', भवति થાય છે होती है ॥ ५॥

5 The appellation of conception is given to that union of semen, ovum and the spirit, which takes place in the womb

गर्भस्य पञ्चभूतविकारचेतनाधिष्ठानभूतत्वसाधनम्—

**गर्भस्तु खल्वन्तरिक्षवाय्वग्नितोयभूमिविकारश्चेतनाधिष्ठानभूतः ।**

गर्भं तु ગર્ભ તો गर्भ तो, खलु ખરેખર सचमुच, अन्तरिक्ष- આકાશ आकाश, वायु- વાયુ वायु, अग्नि- અગ્નિ अग्नि, तोय- જલ जल, भूमि- અને ભૂમિનો और भूमिका, विकार વિકાર છે विकार है, चेतनाधिष्ठानभूत અને આત્માનુ ભોગાયતન છે और आत्माका भोगायतन है।

6-(1) The embryo is a compound product of the ether, air, fire, water and earth and is the dwelling place of the spirit

**एवमनया युक्त्या पञ्चमहाभूतविकारसमुदायात्मको गर्भश्चेतनाधिष्ठानभूतः; स ह्यस्य षष्ठो धातुरुक्तः ॥ ६॥**

एवम् આ પ્રમાણે इस तरह, अनया युक्त्या આ યોજના અનુસાર इस युक्तिके अनुसार, पञ्चमहाभूत- પાંચ મહાભૂતના पचमहाभूतोंके, विकार- વિકારના विकारोंका, समुदायात्मक સમુદાયસ્વરૂપ समुदायस्वरूप,

६. गर्भश्चेतनाधिष्ठानभूत• — गर्भश्चेतनाधात्वधिष्ठानभूतः (ख. ग.)

,, एवमनया-एवमनयैव (ग)

गर्भः ગર્ભ गर्भ, चेतना-अधिष्ठानभूत આત્માનુ ભોગાયતન છે चेतनाका भोगायतन है, स हि તે આત્માનેજ वह आत्मा ही, अस्य આ ગર્ભનો इस गर्भकी, षष्ठ છઠ્ઠો छट्ठी, धातु: ધાતુ धातु, उक्तः કહેલો છે कही गई है ॥ ६ ॥

6. Looked at from this standpoint the embryo is the sum of the modifications occasioned in the proto-elements and is the resort of the spirit; thus the spirit has been said to be the sixth element of the embryo.

कुक्षौ गर्भोत्पत्तिप्रकारः—

**यथा चानुपूर्व्याऽभिनिर्वर्तते कुक्षौ तां व्याख्यास्यामः—**

यथा च જે जिस आनुपूर्व्या ક્રમાનુસાર क्रमसे, कुक्षौ ગર્ભ ગર્ભાશયમાં गर्भ कुक्षिमें, अभिनिर्वर्तते નિષ્પન્ન થાય છે निष्पन्न होता है, ताम् તેનું उसका, अनुव्याख्यास्याम વ્યાખ્યાન કરશું व्याख्यान करेंगे,

7-(1). Now we shall explain by what stages the embryo develops in the womb.

**गते पुराणे रजसि नवे चावस्थिते शुद्धस्नातां स्त्रियमव्यापन्नयोनिशोणितगर्भाशयामृतुमतीमाचक्ष्महे। तया सह तथाभूतया यदा पुमानव्यापन्नबीजो मिश्रीभावं गच्छति, तदा तस्य हर्षोदीरितः परः शरीरधात्वात्मा शुक्रभूतोऽङ्गादङ्गात् संभवति।**

पुराणे रजसि જૂનુ રજ पुराने रजके, गते નીકળી જાય निकल जानेपर, नवे च અને નવુ રજ और नये रजके, अवस्थिते સ્થિત થાય ત્યારે स्थित होने पर अव्यापन्न- વિકારરહિત अविकृत, योनि-शोणित- જેનાં યોનિ-શોણિત योनि-आर्तव, गर्भाशयाम् અને ગર્ભાશય છે એવી और गर्भाशयवाली, शुद्धस्नाताम् શુદ્ધ અને નાહેલી शुद्ध और नहाई हुई, स्त्रियम् સ્ત્રીને स्त्रीको, ऋतुमतीम् ઋતુમતી ऋतुमती, आचक्ष्महे કહીએ છીએ कहते हैं, तथाभूतया તેવી જાતની इस प्रकारकी, तया सह તે સ્ત્રીની સાથે उस स्त्रीके साथ, यदा જ્યારે जब, अव्यापन्नबीजः અવિકૃત બીજવાળો अविकृत बीजवाला, पुमान् પુરુષ पुरुष, मिश्रीभावम् સંયોગને मैथुन, गच्छति પામે છે करता है, तदा तस्य ત્યારે તે પુરુષનો तब उस पुरुषके, हर्ष-उदीरितः હર્ષપ્રેરિત हर्षसे प्रेरित, परः ઉત્કૃષ્ટ श्रेष्ठ, शरीरधात्वात्मा શરીરના ધાતુઓનો સાર शरीरकी धातुओंका सार, शुक्रभूत વીર્યરૂપે शुक्ररूपसे, अङ्गात् अङ्गात् અંગે અંગમાંથી अंगप्रत्यंगोंसे, संभवति ઉત્પન્ન થાય છે निकलता है;

7-(2) Now we have in mind the woman of child-bearing stage whose generative organs, ova and uterus are normal and who has gone through the purificatory bath on the completion of the last menstrual period with the fresh blood having replaced the lost blood When with a woman of this description, a man of unvitiated sperm unites in the sex-union, then impelled by orgasm there flows from every cell and tissue that quintessence of bodily secretions, the semen

**स तथा हर्षभूतेनात्मनोदीरितश्चाधिष्ठितश्च बीजरूपो धातुः पुरुषशरीरादभिनिष्पत्त्योचितेन पथा गर्भाशयमनुप्रविश्यार्तवेनाभिसंसर्गमेति ॥७॥**

तथा તેવી રીતે उसी प्रकार, हर्षभूतेन હર્ષપૂર્ણ हर्षमय, आत्मना આત્માથી आत्मासे, उदीरितः પ્રેરિત प्रेरित, अधिष्ठित च અને અધિષ્ઠિત और अधिष्ठित, सः તે वह, बीजरूपः બીજરૂપ बीजरूप, धातु: ધાતુ धातु,

७ यथा—यथा (घ)
,, तां व्याख्यास्याम.—तदमुंव्याख्यास्यामः (घ ज)
,, शुद्धस्नाताम्—पुनःशुद्धस्नाताम् (घ)
,, तदा तस्य—तस्य (घ)

७ अधिष्ठितश्च बीजरूपो धातुः—अधिष्ठितबीजधातुः (क, ध)
,, उचितेन—उदितेन (ड.)

पुरुषशरीरात् પુરુષના શરીરમાંથી पुरुषके शरीरसे, अभिनिष्पत्य બહાર નીકળીને बाहर निकल कर, उचितेन पथा ઉચિત માર્ગદ્વારા उचित मार्गसे, गर्भाशयम् ગર્ભાશયમાં गर्भाशयमें, अनुप्रविश्य પ્રવેશીને प्रविष्ट हो करके, आर्तवेन આર્તવ સાથે आर्तवके साथ, अभिसंसर्गम् સંયોગને संयोगको, एति પામે છે प्राप्त होता है ॥ ७ ॥

7. That semen having thus been set into motion by the ecstatic self and informed by it, emerging from the man's body mixes with the secretion of the woman after entering the womb through the proper channel.

गर्भे भूतग्रहणक्रम·—

**तत्र पूर्वं चेतनाधातुः सत्त्वकरणो गुणग्रहणाय प्रवर्तते; स हि हेतुः कारणं निमित्तमक्षरं कर्ता मन्ता वेदिता बोद्धा द्रष्टा धाता ब्रह्मा विश्वकर्मा विश्वरूपः पुरुषः प्रभवोऽव्ययो नित्यो गुणी ग्रहणं प्रधानमव्यक्तं जीवो ज्ञः पुद्गलश्चेतनावान् विभुर्भूतात्मा चेन्द्रियात्मा चान्तरात्मा चेति ।**

तत्र पूर्वम् તેમાં પ્રથમ उसमें प्रथम, सत्त्वकरण. મનરૂપ કરણથી યુક્ત मनरूप करणवाला, चेतनाधातुः આત્મા आत्मा, गुणग्रहणाय ભૂતોના ગ્રહણ માટે भूतोंके ग्रहणके लिए, प्रवर्तते પ્રવૃત્ત થાય છે प्रवृत्त होता है, सः हि તે આત્મા वही आत्मा, हेतु હેતુ हेतु, कारणम् કારણ कारण, निमित्तम् નિમિત્ત निमित्त, अक्षरम् અક્ષર अक्षर, कर्ता કર્તા कर्ता, मन्ता મનનશીલ मनन करनेवाला, वेदिता જ્ઞાતા ज्ञाता, बोद्धा બોદ્ધા बोद्धा, द्रष्टा દ્રષ્ટા द्रष्टा, धाता ધાતા धाता, ब्रह्मा બ્રહ્મા ब्रह्मा विश्वकर्मा વિશ્વકર્મા विश्वकर्मा, विश्वरूप. વિશ્વરૂપ विश्वरूप, पुरुष પુરુષ पुरुष, प्रभव પ્રભવ प्रभव अव्यय અવ્યય अव्यय, नित्यः નિત્ય नित्य, गुणी ગુણી गुणवाला, ग्रहणम् ગ્રહણ (ગ્રહણ કરનાર) ग्रहण (ग्रहण करनेवाला), प्रधानम् પ્રધાન प्रधान, अव्यक्तम् અવ્યક્ત अव्यक्त, जीवः જીવ जीव, ज्ञः જ્ઞ ज्ञ (ज्ञानी), पुद्गल. પુદ્ગલ पुद्गल, चेतनावान् ચેતનાવાન चेतनावान, विभु વિભુ विभु, भूतात्मा च ભૂતાત્મા भूतात्मा, इन्द्रियात्मा च ઇન્દ્રિયાત્મા इन्द्रियात्मा, अन्तरात्मा च इति અને અન્તરાત્મા કહેવાય છે और अन्तरात्मा कहाता है,

8-(1) There in the womb, the conscious element (the spirit) which has the mind for the instrument, proceeds first of all to gravitate to itself the needed ingredients This conscious element is, accordingly, said to be variously the cause, the region, the instrument, the imperishable, the agent, the thinking one, the knower, the understanding one the seer the dispenser, the great one, the universal architect, the omniform, the supreme person, the creative source, the unchanging, the eternal, the substratum of qualities, the seizer, the chief the unmanifest, the individual soul, the knower, the ego, the conscious one, the infinite, the soul of creatures, the soul of the senses and the inner soul

**स गुणोपादानकालेऽन्तरिक्षं पूर्वतरमन्येभ्यो गुणेभ्य उपादत्ते, यथा—प्रलयात्यये सिसृक्षुर्भूतान्यक्षरभूत आत्मा सत्त्वोपादानः पूर्वतरमाकाशं सृजति, ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वादिकांश्चतुरः; तथा देहग्रहणेऽपि प्रवर्तमानः पूर्वतरमाकाशमेवोपादत्ते, ततः क्रमेण व्यक्ततर-**

८ चेतनाधातु सत्त्वकरण –चेतनाधातु सत्त्वोपादान (प)
,, सत्त्वकरण.–सत्त्वोपकरण (ध)
,, प्रवर्तते–वर्तते (ध)
,, वेदिता–बोधयिता (ध)
,, विभुर्भूतात्मा–प्रभु. भूतात्मा (ध)

८. सत्त्वोपादान –सत्त्वोपादाम (द)
,, व्यक्ततर°–व्यक्तभव° (प)
,, वाय्वादिकांश्चतुर –वाय्वादींश्चतुर. (प.)

गुणान् धातून् वाय्वादिकांश्चतुरः। सर्वमपि तु खल्वेतद्गुणोपादानमणुना कालेन भवति ॥ ८ ॥

सः ते वह, गुणोपादान- भूतनुं ग्रहण करवाने भूतोंका ग्रहण करते, काले समये समय, अन्येभ्यः बीजा अन्य, गुणेभ्य भूतोमांथी भूतोसे, पूर्वतरम् प्रथम पहले, अन्तरिक्षम् आकाशनुं आकाशको, उपादत्ते ग्रहण करे छे ग्रहण करता है, यथा जेम जैसे, प्रलय-अत्यये प्रलयने अते प्रलयके अन्तमे, भूतानि भूतोने महाभूतोंकी, सिसृक्षुः सरजवानी इच्छावाळो सृष्टिकी इच्छावाला, अक्षरभूतः अविनाशी अविनाशी, आत्मा आत्मा आत्मा, सत्त्वोपादानः मनरूप करणथी युक्त थईने सत्त्वरूप करणवाला हो कर, पूर्वतरम् प्रथम प्रथम, आकाशम् आकाशने आकाशको, सृजति सरजे छे बनाता है, ततः त्यार पछी फिर, क्रमेण क्रमशः क्रमसे, व्यक्ततर- अधिक स्पष्ट अधिक स्पष्ट, गुणान् गुणवाळा गुणवाले, वाय्वादिकान् वायु आदि वायु आदि, चतुरः चार चार, धातून् भूतोने रचे छे धातुओंको रचता है, तथा तेवीज रीते वैसे ही, देहग्रहणे अपि शरीरनुं ग्रहण करवामां देहके ग्रहणमें भी, प्रवर्तमानः प्रवृत्त थतो आत्मा प्रवृत्त होता आत्मा, पूर्वतरम् प्रथम प्रथम, आकाशम् एव आकाशनुज आकाशकोही, उपादत्ते ग्रहण करे छे ग्रहण करता है, ततः त्यार पछी उसके बाद, व्यक्ततरगुणान् स्पष्ट गुणवाळा स्पष्ट गुणवाले, वाय्वादिकान् वायु आदि वायु आदि, चतुरः चार चार, धातून् भूतोने भूतोंको, क्रमेण क्रमशः क्रमशः, उपादत्ते ग्रहण करे छे ग्रहण करता है, सर्वम् खलु अपि सर्व सभी, एतत् आ यह, गुणोपादानम् तु भूतोनु ग्रहण भूतोंका ग्रहण, अणुना- कालेन अति अल्प काळमां बहुत थोडे समयमें, भवति थाय छे हो जाता है ॥ ८ ॥

8. This one, at the time of gravitating the elements to itself, draws the ether before the other elements Just as at the close of the period of dissolution, the creative self desirous of creating the world anew having the mind for his base, first creates the ether, then in due order, the remaining four elements namely the air, and the other proto-elements of more and more pronounced characteristics, even so, in procuring together to itself an individual body, it (the self) first takes the ether alone, then in due order the other elements, having more and more pronounced characteristics, beginning with air. All this gravitating of elements takes place in an infinitesimal fraction of time.

प्रथमे मासि गर्भस्य स्वरूपम्—

स सर्वगुणवान् गर्भत्वमापन्नः प्रथमे मासि संमूर्च्छितः सर्वधातुकलुषीकृतः खेटभूतो भवत्यव्यक्तविग्रहः सदसद्भूताङ्गावयवः ॥ ९ ॥

सः ते वह, सर्वगुणवान् सर्व भूतोथी युक्त सब भूतोसे युक्त, गर्भत्वम् गर्भभावने गर्भरूपको, आपन्नः पामी प्राप्त हो कर, प्रथमे प्रथम प्रथम, मासि मासमां मासमें, संमूर्च्छितः सारी रीते मिश्रित सुमिश्रित, सर्वधातु- तथा सर्व धातुओथी तथा सब धातुओंसे, कलुषीकृत. कलुषित बनतो कलुषित बनता हुआ, खेटभूतः श्लेष्म जेवो श्लेष्मसदृश, अव्यक्तविग्रहः अस्पष्ट शरीरवाळो अव्यक्त शरीरवाला, सदसद्भूत- अर्थात् विद्यमान तथा अविद्यमान अर्थात् सत और असत्, अङ्गावयव. अंग अने प्रत्यंगवाळो अंग और प्रत्यंगवाला, भवति थाय छे होता है ॥ ९ ॥

9. The spirit having now become the embryo, in the first month after conception being well compounded and tinged with all the elements, appears as a jelly-like mass of no particular shape, and with limbs emergent and latent.

द्वितीये मासि गर्भस्य स्वरूपम्—

द्वितीये मासि घनः संपद्यते पिण्डः पेश्यर्बुदं

**वा। तत्र घनः पुरुषः, पेशी स्त्री, अर्बुदं नपुंसकम् ॥ १० ॥**

द्वितीये मासि બીજે માસે ગર્ભ दूसरे मासमें गर्भ, घन पिण्डः ગાંઠના આકારમાં ઘન ग्रन्थिके रूपमें घन, पेशी પેશી पेशी, अर्बुदम् वा કે અર્બુદ या अर्बुद, सम्पद्यते થાય છે होता है, तत्र તેમાં उनमे, घन ઘન હોય તો घन होने पर, पुरुष પુરુષ पुरुष, पेशी પેશી હોય તો पेशी होने पर, स्त्री સ્ત્રી स्त्री, अर्बुदम् અને અર્બુદ હોય તો और अर्बुद होने पर, नपुंसकम् નપુંસક થાય છે नपुंसक होता है ॥ १० ॥

10. In the second month this mass hardens into the form either of a knot or a tendon or an egg Of these the knot-shaped is male, the tendon-shaped female, the egg-shaped eunuch.

तृतीये मासि गर्भस्य स्वरूपम्—

**तृतीये मासि सर्वेन्द्रियाणि सर्वाङ्गावयवाश्च यौगपद्येनाभिनिर्वर्तन्ते ॥ ११ ॥**

तृतीये मासि ત્રીજે મહિને तीसरे मासमें, यौगपद्येन એકીસાથે एक साथ, सर्वेन्द्रियाणि સર્વ ઇન્દ્રિયો सब इन्द्रियाँ, सर्वाङ्गावयवा च અને સર્વ અંગ તથા તેના અવયવો और सब अंग तथा उनके अवयव, अभिनिर्वर्तन्ते ઉત્પન્ન થાય છે बनते है ॥ ११ ॥

11 In the third month all the sense-organs and all the limbs emerge together.

गर्भस्य महाभूतप्रभवो भावा —

**तत्रास्य केचिदङ्गावयवा मातृजादीनवयवान् विभज्य पूर्वमुक्ता यथावत्। महाभूतविकारप्रविभागेन त्विदानीमस्य तांश्चैवाङ्गावयवान् कांश्चित् पर्यायान्तरेणापरांश्चानुव्याख्यास्यामः।**

तत्र ત્યાં वहा, मातृजादीन् માતૃજાદિ मातृजादि, अवयवान् અવયવોનો अवयवोंको, यथावत् સારી રીતે सम्यक् प्रकार, विभज्य વિભાગ કરીને विभक्त करके, अस्य આ ગર્ભના इस गर्भके, केचित् કેટલાક कई, अङ्गावयवाः અંગ અને તેના અવયવો अंग और उनके अवयव, पूर्वम् પૂર્વ અધ્યાયમાં पूर्व अध्यायमें, उक्ताः કહ્યાં છે कहे है, इदानीम् तु પણ હવે परन्तु अब, अस्य એના इस गर्भके, तान् च एव તેમાંના उन्हींमेंसे, कांश्चित् કેટલાક कई, अङ्गावयवान् અંગ અને અવયવોનુ अङ्ग और अवयवोंको, पर्यायान्तरेण નામાન્તરથી नामान्तरसे, अपरान् च અને બીજા અવયવોનુ પણ और दूसरे अवयवोंका भी, महाभूतविकार- પંચ મહાભૂતના વિકારના पंचमहाभूतके विकारके, प्रविभागेन વિભાગ અનુસાર विभाग अनुसार, अनुव्याख्यास्याम· વ્યાખ્યાન કરશું व्याख्यान करेंगे,

12 Some of the body-parts of the fetus have already been enumerated under various heads, such as those derived from the mother etc. Now we shall enumerate under different names with reference to the modifications of the five elements, the self-same body-parts as also some additional ones

**मातृजादयोऽप्यस्य महाभूतविकारा एव। तत्रास्याकाशात्मकं शब्दः श्रोत्रं लाघवं सौक्ष्म्यं विवेकश्च, वाय्वात्मकं स्पर्शः स्पर्शनं रौक्ष्यं प्रेरणं धातुव्यूहनं चेष्टाश्च शारीर्यः, अग्न्यात्मकं रूपं दर्शनं प्रकाशः पक्तिरौष्ण्यं च, अबात्मकं रसो रसनं शैत्यं मार्दवं स्नेहः क्लेदश्च, पृथिव्यात्मकं गन्धो घ्राणं गौरवं स्थैर्यं मूर्तिश्चेति ॥ १२ ॥**

अस्य આ ગર્ભના इस गर्भके, मातृजादयः માતૃજાદિ ભાવો मातृजादि भाव, अपि પણ भी, महाभूतविकारा મહાભૂતના વિકાર पचमहाभूतके विकार, एव જ છે ही है, तत्र તેમાં उनमें, शब्द· શબ્દ शब्द, श्रोत्रम् શ્રોત્ર श्रोत्र, लाघवम् લઘુતા लघुता, सौक्ष्म्यम् સૂક્ષ્મતા सूक्ष्मता, विवेक च અને વિવેક (શારીર ભાવોનું પરસ્પર પૃથક્પણુ ) और विवेक (शारीर भावोंका परस्पर पृथक्त्व), अस्य એ આના ये इसके, आकाशात्मकम् આકાશના વિકારો છે आकाशके विकार है, स्पर्श· સ્પર્શ स्पर्श, स्पर्शनम् સ્પર્શનેન્દ્રિય स्पर्शनेन्द्रिय, रौक्ष्यम् રૂક્ષતા

रूक्षता, प्रेरणम् પ્રેરણા प्रेरणा, धातुव्यूहनम् ધાતુરચના धातुरचना, शारीर्य. અને શરીરની और शरीरकी, चेष्टाः च ચેષ્ટાઓ चेष्टायें, वाय्वात्मकम् એ વાયુના વિકાર છે ये वायुके विकार हैं, रूपम् રૂપ रूप, दर्शनम् દર્શન दर्शनेन्द्रिय, प्रकाशः દીપ્તિ दीप्ति, पक्तिः પરિપાક परिपाक, औष्ण्यम् च અને ઉષ્ણતા और उष्णता, अग्न्यात्मकम् એ અગ્નિના વિકાર છે ये अग्निके विकार हैं, रस રસ रस, रसनम् રસના रसना, शैत्यम् શીતતા शीतता, मार्दवम् મૃદુતા मृदुता, स्नेह. સ્નેહ स्नेह, क्लेद. च અને ક્લેદ और क्लेद, अवात्मकम् એ જલના વિકાર છે ये जलके विकार हैं, गन्ध ગન્ધ गन्ध, घ्राणम् ઘ્રાણ घ्राणेन्द्रिय, गौरवम् ગૌરવ गुरुता, स्थैर्यम् સ્થિરતા स्थिरता, मूर्ति च અને કઠિનતા और कठिनता, पृथिव्यात्मकम् એ પૃથ્વીના વિકાર છે ये पृथ्वीके विकार हैं ॥ १२ ॥

12. Even those parts derived from the mother etc., are in fact only modifications of their five basic elements. In the fetus the constituents of the ether are—sound, audition, lightness, fineness and space; those belonging to air are tangibility, sense of touch, roughness, impulsion, the marshalling and maintaining of the humors of the body and its movements, those belonging to light are form, vision, brightness, digestion and heat, those belonging to water are taste, the sense of taste, coldness, softness, unctuousness and wetness, those belonging to earth are odour, the sense of smell, weight, steadfastness and hardness.

लोकपुरुषयोस्तुल्यत्वदर्शनम्—

**एवमयं लोकसंमितः पुरुषः। यावन्तो हि लोके मूर्तिमन्तो भावविशेषास्तावन्तः पुरुषे, यावन्तः पुरुषे तावन्तो लोके इति, बुधास्त्वेवं द्रष्टुमिच्छन्ति ॥ १३ ॥**

एवम् આ પ્રમાણે इस प्रकार, अयम् આ यह, पुरुष. પુરુષ पुरुष, लोकसंमित લોકતુલ્ય છે लोकतुल्य है, हि કેમકે क्योंकि, लोके લોકમાં लोकमें, यावन्त. જેટલા जितने, मूर्तिमन्त મૂર્તિમાન मूर्तिमान, भावविशेषा ભાવવિશેષો છે भावविशेष हैं, तावन्त તેટલા उतने, पुरुषे પુરુષમાં છે पुरुषमें है, यावन्त અને જેટલા और जितने, पुरुषे પુરુષમાં છે पुरुषमें है, तावन्त. તેટલા उतने, लोके इति લોકમાં છે लोकमें है, बुधा तु બુદ્ધિમાન પુરુષો बुद्धिमान तो, एवम् એમ ऐसा, द्रष्टुम् જોવાને देखना, इच्छन्ति ઇચ્છે છે चाहते हैं ॥ १३ ॥

13 Thus the individual man is an epitome of the universe As much diversity of substance and quality as is found in the world outside even so much exists in man, and as much in man, so much in the world outside Thus the wise like to regard the nature of existence

गर्भस्येन्द्रियाण्यङ्गावयवाश्च यौगपद्येनोत्पद्यन्ते, जातस्योत्तरकालजा भावाः—

**एवमस्येन्द्रियाण्यङ्गावयवाश्च यौगपद्येनाभिनिर्वर्तन्तेऽन्यत्र तेभ्यो भावेभ्यो येऽस्य जातस्योत्तरकालं जायन्ते; तद्यथा—दन्ता व्यञ्जनानि व्यक्तीभावस्तथायुक्तानि चापराणि। एषा प्रकृतिः, विकृतिः पुनरतोऽन्यथा।**

एवम् આમ इस तरह, ये જે ભાવો जो भाव, अस्य એના इसके, जातस्य જન્મ્યા जन्मके, उत्तरकालम् પછી बाद, जायन्ते ઉત્પન્ન થાય છે उत्पन्न होते है, तेभ्य તે उन, भावेभ्यः ભાવો भावोंको, अन्यत्र સિવાય छोड़ कर, अस्य આ ગર્ભની इस गर्भकी, इन्द्रियाणि ઇન્દ્રિયો इन्द्रियाँ, अङ्गावयवा च અને અંગ તથા અવયવો और अंग तथा अवयव, यौगपद्येन એક સાથે एक साथ, अभिनिर्वर्तन्ते ઉત્પન્ન થાય છે उत्पन्न होते है,

१४. व्यक्तीभाव'—शुक्ररजोव्यक्तीभाव' (ध.)

तत् यथा જેમકે जैसे कि, दन्ताः દાંત दात, व्यञ्जनानि દાઢી, મૂછ, સ્તન વગેરે दाढी, मूंछ, स्तन आदि, व्यक्तीभाव શુક્ર તથા શોણિતનું પ્રકટ થવુ शुक्र तथा शोणितका प्रकट होना, तथायुक्तानि અને તેના જેવા और ऐसे, अपराणि च બીજા બુદ્ધ્યાદિ ભાવો જન્મ્યા પછી ઉત્પન્ન થાય છે अन्य बुद्धयादिभाव जन्मके बाद उत्पन्न होते है, एषा આ यह, प्रकृतिः પ્રકૃતિ છે प्रकृति है, अतः અને એનાથી इससे, अन्यथा पुन વિપરીત विपरीत, विकृतिः વિકૃતિ છે विकृति है।

14-(1) Thus the sense-organs and the limbs of the fetus manifest them selves simultaneously Apart from these phenomena there are some which appear after the birth of the infant, these are the teeth, secondary sexual signs, and signs of puberty and such other traits This is the natural order, contrary to this is unnatural

स्त्रीपुंनपुंसकाना वैशेषिका भावा —

**सन्ति खल्वस्मिन् गर्भे केचिन्नित्या भावाः, सन्ति चानित्याः केचित्। तस्य य एवाङ्गावयवाः सन्तिष्ठन्ते, त एव स्त्रीलिङ्गं पुरुषलिङ्गं नपुंसकलिङ्गं वा बिभ्रति। तत्र स्त्रीपुरुषयोर्ये वैशेषिका भावाः प्रधानसंश्रया गुणसंश्रयाश्च, तेषां यतो भूयस्त्वं ततोऽन्यतरभावः।**

अस्मिन् આ इस, गर्भे खलु ગર્ભમાં गर्भमें, केचित् કેટલાક कई, नित्या નિત્ય नित्य, भावाः ભાવો भाव, सन्ति છે है, केचित् અને કેટલાક और कई एक, अनित्या च અનિત્ય ભાવો अनित्य भाव, सन्ति છે है, तस्य તેનાં इसके, ये एव જે જે जो ही, अङ्गावयवा અંગ અને અવયવો अंग और अवयव, सन्तिष्ठन्ते સ્થાયી રહે છે स्थायी रहते है, ते एव તેઓજ वे ही, स्त्रीलिङ्गम् સ્રીલિંગ स्त्रीलिंग, पुरुषलिङ्गम् પુરુષલિંગ पुरुषलिंग, नपुंसकलिङ्गम् वा કે નપુંસકલિંગ अथवा नपुंसकलिंगको, बिभ्रति ધારણ કરે છે धारण करते है, तत्र

तेषां उनमें, स्त्रीपुरुषयोः સ્રીપુરુષના स्त्री और पुरुषके, प्रधानसंश्रयाः આત્માશ્રિત आत्माश्रित, गुणसंश्रयाः च અને ભૂતાશ્રિત और भूताश्रित, ये જે जो, वैशेषिका ખાસ खास, भावा ભાવો છે भाव होते है, तेषाम् તેમાંથી उनमेंसे, यतः જે ભાવની जिस भावकी, भूयस्त्वम् અધિકતા હોય છે अधिकता होती हैं, तत તેને અનુસરી उसीके अनुसार, अन्यतरभाव બેમાંથી એક થાય છે दोनोंमें से किसी एकको उत्पत्ति होती है,

14-(2). Now in the fetus there are some characteristics which are permanent and some which are temporary. Those parts alone of the fetus which persist throughout life are called the primary signs of sex, whether male, female or neuter. Those distinctive (mutually exclusive) characteristics of man and woman are partly dependant on the self and partly on the material element, the sex differentiation is due to the preponderance of one or the other of these factors.

**तद्यथा—क्लैब्यं भीरुत्वमवैशारद्यं मोहोऽनवस्थानमधोगुरुत्वमसहनं शैथिल्यं मार्दवं गर्भाशयबीजभागस्तथायुक्तानि चापराणि स्त्रीकराणि, अतो विपरीतानि पुरुषकराणि, उभयभागावयवा नपुंसककराणि भवन्ति ॥ १४ ॥**

तत् यथा જેમકે जैसे कि, क्लैब्यम् કલૈબ્ય क्लीवता, भीरुत्वम् ભીરુતા भीरुता, अवैशारद्यम् અકૌશલ્ય अचातुर्य, मोह મોહ मोह, अनवस्थानम् ચિત્તચાંચલ્ય चलचित्तता, अधोगुरुत्वम् નીચેના ભાગની ગુરુના

१४. तत्र-तत. (ग)

१४ मोहोऽनवस्थानमधोगुरुत्वम्—मोहोऽवस्थानमधोगुरुत्वम् (ड य. द प)

,, मार्दवं गर्भाशयबीजभागस्तथायुक्तानि—मार्दवं तथा युक्तानि(ध)

,, बीजभाग.—बीजभावा (प)

,, उभयभागावयवा —'उभयभागभावानि' इति 'उभयभावा' इति च पाठ (ग.)

निम्न भागका भारीपन, असहनम् અસહિષ્ણુતા असहिष्णुता, शैथिल्यम् શિથિલતા शिथिलता, मार्दवम् મૃદુતા मृदुता, गर्भाशय- ગર્ભાશયનો गर्भाशयका, बीजभाग. બીજભાગ बीजभाग, तथायुक्तानि અને એના જેવા और ऐसे अपराणि च બીજા ભાવો अन्य भाव, स्त्रीकराणि સ્ત્રીકર થાય છે स्त्रीजनक होते हैं, अत• આથી इनसे, विपरीतानि વિપરીત ભાવો विपरीत भाव, पुरुषकराणि પુરુષકર થાય છે पुरुषजनक होते हैं, उभयभागावयवा' બન્ને પ્રકારના અવયવોવાળા ભાવો दोनों प्रकारके अवयवोंवाले भाव, नपुसककराणि નપુંસકકર नपुंसकजनक, भवन्ति થાય છે होते है ॥ १४ ॥

14 Thus weakness, timidity, artlessness, confusion, fickleness, heaviness of the nether limbs, want of forbearance, frailty, softness, the uterine part of the seed and such other feminine traits determine the female sex, traits opposite to these determine the male sex. When there is an equal distribution of both traits there is the neuter sex

इन्द्रियोत्पत्तिसमकालमेव गर्भस्य चेतसि वेदनानिर्बन्ध , तृतीये मासि गर्भे द्वैहृदय्योत्पत्ति —

**तस्य यत्कालमेवेन्द्रियाणि संतिष्ठन्ते, तत्कालमेव चेतसि वेदना निर्बन्धं प्राप्नोति, तस्मात्तदाप्रभृति गर्भः स्पन्दते, प्रार्थयते च जन्मान्तरानुभूतं यत् किंचित्, तद् द्वैहृदय्यमाचक्षते वृद्धाः ।**

तस्य તેને उस गर्भकी, यत्कालम् एव જે સમયે जिस समय ही, इन्द्रियाणि ઇન્દ્રિયો इन्द्रिया, सतिष्ठन्ते ઉત્પન્ન થાય છે बन जाती है, तत्कालम् एव તે જ સમયે उसी समय, चेतसि ચિત્તમાં मनमें, वेदना સુખદુ ખનુ જ્ઞાન सुखदु खका ज्ञान, निर्बन्धम् પ્રાદુર્ભાવ व्यक्त, प्राप्नोति પામે છે होता है, तस्मात् તેથી इस लिए, तदाप्रभृति ત્યારથી માંડીને उस समयसे लेकर, गर्भ ગર્ભ गर्भ, स्पन्दते ફરકવા લાગે છે फड़कने लगता है, यत् किञ्चित् અને જે કંઈ और जो कुछ, जन्मान्तर- પૂર્વજન્મમાં पूर्वजन्ममें, अनुभूतम् च અનુભવેલુ હોય છે તે अनुभूत होता है उसको, प्रार्थयते ચાહે છે चाहता है, वृद्धा વૃદ્ધો वृद्ध, तत् તેને उसे, द्वैहृदय्यम् દૌહૃદ दोहद, आचक्षते કહે છે कहते है।

15-(1) When the sense-organs appear in the fetus at that very time sentience lays hold of its mind Consequently from that time the embryo is seen to throb and yearn for this or that thing, experienced in the past existence; this condition is called the bicardiac state by the experienced.

**मातृजं चास्य हृदयं मातृहृदयेनाभिसंबद्धं भवति रसवाहिनीभिः संवाहिनीभिः; तस्मात्तयोस्ताभिर्भक्तिः संस्पन्दते। तच्चैव कारणमवेक्षमाणा न द्वैहृदय्यस्य विमानितं गर्भमिच्छन्ति कर्तुम् ।**

अस्य च એનું इस गर्भका, मातृजम् માતૃજન્ય माताम उत्पन्न, हृदयम् હૃદય हृदय, रसवाहिनीभिः રસવાહી रसवाहिनी, सवाहिनीभि• નાડીઓ દ્વારા नाडियोंके द्वारा, मातृहृदयेन માતાના હૃદય સાથે माताके हृदयसे, अभिसंबद्धम् બંધાયેલુ बन्धा हुआ, भवति રહે છે रहता है, तस्मात् તેથી इससे, तयो. भक्तिः તે બન્નેની ઇચ્છા उन दोनोंकी इच्छा, ताभि. તે નાડીઓ દ્વારા इन नाडियोंके द्वारा, संस्पन्दते આવાગમન કરે છે गमनागमन करती है, तत् एव च અને તે જ और उसी, कारणम् કારણને कारणको, अवेक्षमाणा च લક્ષમાં રાખતા देखते हुए, गर्भम् ગર્ભને गर्भको, द्वैहृदय्यस्य विमानितम् અપ્રાપ્ત દોહદવાળો अप्राप्त दोहदवाला, कर्तुम् કરવાને करना, न इच्छन्ति ઇચ્છતા નથી नहीं चाहते।

१५ तत्कालमेव चेतसि–तत्कालमेवास्य चेतसि (क. च.)

१५. रसवाहिनीभि –रसहारिणीभिः (ब)

,, ताभिर्भक्ति –ताभिर्मुक्ति (प.)

,, सस्पन्दते–सपद्यते (ध. ब)

,, न द्वैहृदय्यस्य विमानित–द्वैहृदय्याविमानितम् (क ग ध )

15-(2). The heart of the fetus, taking its rise from the mother, is connected with the mother's own heart by the channels that carry nourishment, incidentally inclinations are also conveyed by these channels Having this fact in view, the wise do not wish to see the fetus baulked of its desires originating either in its own heart or in that of the mother.

द्वैहृदय्यविमानने दोषा —

**विमानने ह्यस्य दृश्यते विनाशो विकृतिर्वा। समानयोगक्षेमा हि तदा भवति गर्भेण केषुचिदर्थेषु माता। तस्मात् प्रियहिताभ्यां गर्भिणीं विशेषेणोपचरन्ति कुशलाः ॥ १५ ॥**

हि કારણકે क्योंकि अस्य એની इसकी, विमानने ઇચ્છા પૂરી ન થતાં इच्छा पूरी न होने पर, विनाश એનો વિનાશ इसका विनाश, विकृतिः वा અથવા વિકૃતિ अथवा विकृति, दृश्यते જોવામાં આવે છે देखी जाती है, तदा ત્યારે उस समय, माता માતા माता, केषुचित् કેટલાક कुछ, अर्थेषु વિષયોમાં भावोंमें, गर्भेण ગર્ભની સાથે गर्भके साथ, समानयोगक्षेमा हि સમાન યોગક્ષેમવાળી समान योगक्षेमवाली, भवति હોય છે होती है, तस्मात् તેથી इससे, कुशलाः કુશળ મનુષ્યો कुशल मनुष्य, प्रियहिताभ्याम् પ્રિય અને હિતકર આહારવિહારોથી प्रिय और हितकर आहार-विहारोंसे, गर्भिणीम् ગર્ભિણીના गर्भिणीका, विशेषेण ખાસ કરીને विशेष रूपसे, उपचरन्ति ઉપચાર કરે છે उपचार करते है ॥ १५ ॥

15. For, from such thwartings, it is seen that the fetus is either destroyed or deformed. At this time the mother's well-being in some respects is identical with that of the fetus; because of this the skilled physicians minister exceedingly to the pregnant women with endearing and wholesome things

गर्भिण्या लिङ्गानि—

**तस्या गर्भापत्तेर्द्वैहृदय्यस्य च विज्ञानार्थं लिङ्गानि समासेनोपदेक्ष्यामः। उपचारसाधनं ह्यस्य ज्ञाने, ज्ञानं च लिङ्गतः, तस्मादिष्टो लिङ्गोपदेशः ।**

तस्याः તે ગર્ભિણીને उस गर्भिणीके गर्भापत्तेः ગર્ભની પ્રાપ્તિના गर्भप्राप्तिके, द्वैहृदय्यस्य च અને દોહદના और दोहदके, विज्ञानार्थम् જ્ઞાન માટે ज्ञानके लिए, समासेन સંક્ષેપથી संक्षेपसे, लिङ्गानि લક્ષણોને लक्षणोंको, उपदेक्ष्यामः ઉપદેશ કરશું कहेंगे, हि કારણકે क्योंकि, अस्य એનુ इसके, ज्ञाने જ્ઞાન થતાં जानने पर, उपचारसाधनम् ઉપચાર થઈ શકે છે उपचार हो सकता है, ज्ञानम् च અને જ્ઞાન और ज्ञान, लिङ्गतः લક્ષણોથી થાય છે लक्षणसे होता है, तस्मात् તેથી इस लिए, लिङ्गोपदेश લક્ષણોનો ઉપદેશ लक्षणोंका उपदेश, इष्टः આવશ્યક છે इष्ट है।

16 (1). Now with a view to ascertaining pregnancy and the bicardiac condition, we shall describe the symptoms in brief. Knowledge is essential for treatment; and knowledge comes from a study of the symptoms; therefore the exposition of the symptoms is a desideratum.

**तद्यथा—आर्तवादर्शनमास्यसंस्रवणमनन्नाभिलाषश्छर्दिररोचकोऽम्लकामता च विशेषेण श्रद्धाप्रणयनमुच्चावचेषु भावेषु गुरुगात्रत्वं चक्षुषोर्ग्लानिः स्तनयोः स्तन्यमोष्ठयोः स्तनमण्डलयोश्च कार्ष्ण्यमत्यर्थं श्वयथुः पादयोरीषल्लोमराज्युद्गमो योन्याश्चाटालत्वमिति गर्भे पर्यागते रूपाणि भवन्ति ॥१६॥**

१६ गर्भापत्ते —गर्भोत्पत्ते. (य)
,, उपचारसाधनम्—उपचारसंबोधनम् द य)
,, ह्यस्य ज्ञाने—ह्यस्याज्ञाने दोष ।य.
,, ज्ञान—दोषज्ञान च द. य)

तत् यथा જેમકે जैसे कि, आर्तव-अदर्शनम् આર્તવ ન દેખાવુ आर्तवका न दीखना, आस्य-संस्रवणम् મોઢામાંથી લાળ સરવી मुखसे लार गिरना, अन्नाभिलाष. અન્નની અનિચ્છા अन्नकी अनिच्छा, छर्दिः ઉલટી वमन, अरोचकः અરુચિ अरुचि, विशेषेण વિશેષે કરીને विशेष कर, अम्लकामता च ખાટા પદાર્થોની ઇચ્છા खट्टे पदार्थोंकी इच्छा, उच्चावचेषु ઊંચાનીચા ऊचनीच, भावेषु ભાવોમાં भावोंमें, श्रद्धा-प्रणयनम् ઇચ્છા થવી इच्छाका होना, गुरुगात्रत्वम् અંગોનુ ભારેપણું शरीरका भारीपन, चक्षुषोः આંખોમાં नेत्रोंमें, ग्लानि. ગ્લાનિ ग्लानि, स्तनयोः સ્તનોમાં स्तनोंमें, स्तन्यम् દૂધનુ પ્રકટ થવુ दूधका प्रकट होना, ओष्ठयो. હોઠ होठ, स्तनमण्डलयो च અને સ્તનમંડલની और स्तनमण्डलका, अत्यर्थम् વિશેષ પ્રમાણમાં अत्यन्त, कार्ष्ण्यम् કાળાશ काला पड़ना, पादयोः પગે पैरोंमें, ईषत् श्वयथुः થોડો સોજો कुछ सूजन, लोमराजि- રૂંવાડાં रोमराजिका, उद्गम' ઊભાં થવાં खड़ा होना, योन्याः અને યોનિનુ और योनिका, चाटालत्वम् વિસ્તૃતપણુ चौड़ा होना, इति એ ये, गर्भे ગર્ભની गर्भकी, पर्यागते પ્રાપ્તિ થતાં प्राप्ति होने पर, रूपाणि લક્ષણો लक्षण, भवन्ति થાય છે होते हैं ॥१६॥

16. These symptoms are—the stoppage of menstruation, excessive salivation, dislike for food, vomiting, anorexia, excessive hankering for sour things, the exhibition of relish for all sorts of things, heaviness of the limbs, lack-lustre eyes, lactation, deep pigmentation of the lips and breasts, slight edema of the feet, growth of down on the abdomen, extension of the vagina—these are the indications of a growing conception.

गर्भोपघातकरान्भावान् विहाय गर्भिणी यदिच्छेत्तत्तस्यै दद्यात्—

**सा यद्यदिच्छेत्तत्तदस्यै दद्यादन्यत्र गर्भोपघातकरेभ्यो भावेभ्यः ॥ १७ ॥**

सा ગર્ભિણી गर्भिणी, यत् यत् જે જે जो जो, इच्छेत् ઇચ્છે चाहे, तत् तत् તે તે वह वह, गर्भोपघातकरेभ्यः ગર્ભને હાનિકારક गर्भके लिए हानिकारक, भावेभ्य ભાવો भावोंके. अन्यत्र સિવાય छोड़ कर, अस्यै તેને उसे, दद्यात् દેવુ જોઈએ देना चाहिए ॥ १७ ॥

17 The pregnant woman should be given whatever she desires with the exception of such things as would injure the fetus.

गर्भोपघातकरा भावा —

**गर्भोपघातकरास्त्विमे भावा भवन्ति, तद्यथा— सर्वमतिगुरूष्णतीक्ष्णं दारुणाश्च चेष्टाः;**

इमे भावा' तु આ ભાવો ये भाव, गर्भोपघातकराः ગર્ભને હાનિ કરનારા गर्भको हानि पहुचानेवाले, भवन्ति થાય છે होते है, तत् यथा જેમકે जैसे, सर्वम् સઘળુ सब, अतिगुरु- અતિ ગુરુ अति गुरु, उष्ण- અતિ ઉષ્ણ अति उष्ण, तीक्ष्णम् અને અતિ તીક્ષ્ણ અન્નપાન और अति तीक्ष्ण अन्नपान, दारुणा. च અને દારુણ और दारुण, चेष्टा. ચેષ્ટાઓ चेष्टायें;

18-(1) These things will tend to injure the fetus, namely, all those that are very heavy, heat-producing or pungent, and all violent movements.

**इमांश्चान्यानुपदिशन्ति वृद्धाः—देवतारक्षोऽनुचरपरिरक्षणार्थं न रक्तानि वासांसि बिभृयान्न मदकराणि मद्यान्यभ्यवहरेन्न यानमधिरोहेन्न मांसमश्नीयात् सर्वेन्द्रियप्रतिकूलांश्च भावान् दूरतः परिवर्जयेत्, यच्चान्यदपि किञ्चित् स्त्रियो विद्युः ॥ १८ ॥**

वृद्धा' વૃદ્ધો वृद्धलोग, इमान् આ इन, अन्यान् च બીજા ભાવોનો પણ अन्य भावोंका भी, उपदिशन्ति ઉપદેશ કરે છે उपदेश करते हैं, देवता- દેવતાઓના देवता, रक्षः- તથા રાક્ષસોના तथा राक्षसोंके, अनुचर-

१८. न मदकराणि मद्यान्यभ्यवहरेत्—न मदकराणि च द्यान्यभ्यवहरेत् (ख घ.)

અનુચરોથી अनुचरोंसे, परिरक्षणार्थम् રક્ષણ કરવા માટે वचनेके लिए, रक्तानि રાતાં लाल, वासांसि વસ્ત્ર वस्त्र, न बिभृयात् ધારણ ન કરવાં धारण न करे, मदकराणि મદકારી मदकारी, मद्यानि મદ્યોનુ मद्योंको, न अभ्यवहरेत् સેવન ન કરવુ न पीवे, यानम् વાહન પર वाहन पर, न अधिरोहेत् સ્વારી ન કરવી न चढे, मांसम् માંસ मांस, न अश्नीयात् ખાવું નહિ न खाये, सर्वेन्द्रिय- સર્વ ઇન્દ્રિયોને सब इन्द्रियोंके, प्रतिकूलान् પ્રતિકૂળ प्रतिकूल, भावान् च ભાવોને भावोंको. स्त्रिय. અને વૃદ્ધ સ્ત્રીઓ और वृद्ध स्त्रिया, यत् अन्यत् જે બીજું जो दूसरा, अपि किञ्चित् કંઈ પણ कुछ भी, विद्यु જાણતી હોય जानती हों, तत् તેનો उसका दूरतः દૂરથી दूरसे, परिवर्जयेत् ત્યાગ કરવો त्याग करे ॥१८॥

18. The elderly people prescribe these other measures too, in order to shield the fetus from angelic and demoniac powers and their followers, the exepectant mother should not wear red habiliments nor indulge in intoxicating wines, nor ascend nor travel in a carriage, nor eat meat; in short, she should never come near anything that might injure her senses She should also keep away from whatever else that experienced women declare as harmful

प्रार्थनासंधारणे दोषा —

**तीव्रायां तु खलु प्रार्थनायां काममहितमप्यस्यै हितेनोपहितं दद्यात् प्रार्थनाविनयनार्थम्। प्रार्थनासंधारणाद्धि वायुः प्रकुपितोऽन्तःशरीरमनुचरन् गर्भस्यापद्यमानस्य विनाशं वैरूप्यं वा कुर्यात् ॥ १९ ॥**

प्रार्थनायाम् खलु ઇચ્છા इच्छाके, तीव्रायाम् तु તીવ્ર હોય તો तीव्र होने पर, प्रार्थनाविनयनार्थम् ઇચ્છાની નિવૃત્તિ કરવા માટે इच्छाकी निवृत्तिके लिए, अस्यै આને इस सगर्भाको, कामम् अहितम् ખુશીથી અહિત વસ્તુ भले अहित वस्तु, अपि પણ भी, हितेन હિતકર વસ્તુની સાથે हितकर वस्तुके साथ, उपहितम् મેળવીને मिला कर, दद्यात् દેવી देवे, हि કારણકે क्योंकि, प्रार्थनासंधारणात् ઇચ્છા રોકવાથી इच्छाके रोकनेसे, प्रकुपित. પ્રકોપ પામેલો प्रकुपित हुआ, वायुः વાયુ वायु, अन्त - शरीरम् શરીરની અંદર शरीरके भीतर, अनुचरन् સંચાર કરતો घूमता हुआ, आपद्यमानस्य ઉત્પન્ન થતા बनते हुए, गर्भस्य ગર્ભનો गर्भका, विनाशम् નાશ विनाश, वैरूप्यम् वा કે વિકૃતિ या विरूपता, कुर्यात् કરે છે करता है ॥ १९ ॥

19. But if the longing becomes intolerable it is better to give the pregnant woman the desired object, be it injurious, having neutralized it to whatever extent possible by the addition of a wholecome ingredient, so that the longing is removed. For if the longing is completely repressed, the irritated vata moving inside the body will either destroy or deform the fetus.

चतुर्थे मासि गर्भस्य स्वरूपम्—

**चतुर्थे मासि स्थिरत्वमापद्यते गर्भः, तस्मात्तदा गर्भिणी गुरुगात्रत्वमधिकमापद्यते विशेषेण ॥२०॥**

चतुर्थे मासि ચોથે મહિને चौथे मासमें, गर्भ ગર્ભ गर्भ, स्थिरत्वम् સ્થિરતા स्थिरताको, आपद्यते પ્રાપ્ત કરે છે प्राप्त करता है, तस्मात् તેથી इस लिए, तदा ત્યારે उस समय, गर्भिणी ગર્ભિણી गर्भिणी, विशेषेण વિશેષે કરીને विशेषत., अधिकम् અધિક अधिक, गुरुगात्रत्वम् ભારી શરીરવાળી भारी शरीरवाली, आपद्यते બને છે होती है ॥ २० ॥

20. In the fourth month the fetus becomes stabilised; consequently the

१९ प्रकुपितो-कुपितो (च ज थ)

१, प्रार्थनाविनयनार्थम्–प्रार्थनादित्यार्थम् (द.)

pregnant woman shows a pronounced increase in the body-weight.

पञ्चमे मासि गर्भस्य स्वरूपम्—

**पञ्चमे मासि गर्भस्य मांसशोणितोपचयो भवत्यधिकमन्येभ्यो मासेभ्यः, तस्मात्तदा गर्भिणी कार्श्यमापद्यते विशेषेण ॥ २१ ॥**

पञ्चमे मासि પાંચમે મહિને पांचवें मासमें, अन्येभ्यः मासेभ्य. બીજા મહિનાઓ કરતાં अन्य मासोंकी अपेक्षा, गर्भस्य ગર્ભના गर्भके, मांस-शोणित- માંસ અને શોણિતની माम और शोणितकी उपचय. વૃદ્ધિ वृद्धि, अधिकम् અધિક अधिक, भवति થાય છે होती है, तस्मात् તેથી इस लिए, तदा ત્યારે उस समय, गर्भिणी ગર્ભિણી गर्भिणी, विशेषेण વિશેષ પ્રમાણમાં विशेष रूपसे, कार्श्यम् કૃશતાને कृशताको, आपद्यते પામે છે पाती है ॥ २१ ॥

21. In the fifth month there is a greater increase, to the fetus, in the accession of flesh and blood than during other months. Therefore at this time, the pregnant woman becomes exceedingly emaciated.

षष्ठे मासि गर्भस्य स्वरूपम्—

**षष्ठे मासि गर्भस्य बलवर्णोपचयो भवत्यधिकमन्येभ्यो मासेभ्यः, तस्मात्तदा गर्भिणी बलवर्णहानिमापद्यते विशेषेण ॥ २२ ॥**

षष्ठे मासि છઠ્ઠે મહિને छट्ठे मासमें, अन्येभ्य मासेभ्यः બીજા મહિનાઓ કરતાં अन्य मासोंकी अपेक्षा, गर्भस्य ગર્ભના गर्भके, बल-वर्ण- उपचयः બલ અને વર્ણની પુષ્ટિ बल तथा वर्णकी पुष्टि, अधिकम् અધિક अधिक, भवति થાય છે होती है, तस्मात् तदा તેથી ત્યારે इस लिए इस समय, गर्भिणी ગર્ભિણી गर्भिणी, विशेषेण વિશેષે કરીને विशेष रूपसे, बल-वर्ण-हानिम् બલ અને વર્ણની હાનિને बल और वर्णकी हानिको, आपद्यते પામે છે पाती है ॥२२॥

22. In the sixth month there is a greater increase in the accession of strength and pigmentation to the fetus than during the other months; consequently at this time the pregnant woman loses strength and color exceedingly.

सप्तमे मासि गर्भस्य स्वरूपम्—

**सप्तमे मासि गर्भः सर्वैर्भावैराप्याय्यते, तस्मात्तदा गर्भिणी सर्वाकारैः क्लान्ततमा भवति ॥२३॥**

सप्तमे मासि સાતમે મહિને सातवें मासमें, गर्भः ગર્ભ गर्भः, सर्वैः भावैः સર્વ ભાવોથી सब भावोंसे, आप्याय्यते વૃદ્ધિ પામે છે वृद्धि पाता है, तस्मात् तदा તેથી ત્યારે इस लिए उस समय, गर्भिणी ગર્ભિણી गर्भिणी, सर्वाकारैः સર્વરૂપે सब रूपसे, क्लान्ततमा અત્યંત થાકી ગયેલી अधिक क्लान्त, भवति થાય છે हो जाती है ॥ २३ ॥

23. In the seventh month the fetus develops in all ways; therefore, at this time, the pregnant woman becomes exceedingly restless (tired)

अष्टमे मातृगर्भयोः परस्परमोजोग्रहणम्—

**अष्टमे मासि गर्भश्च मातृतो गर्भतश्च माता रसहारिणीभिः संवाहिनीभिर्मुहुर्मुहुरोजः परस्परत आददाते गर्भस्यासंपूर्णत्वात् ।**

अष्टमे मासि આઠમે મહિને आठवें मासमें, गर्भस्य ગર્ભની गर्भके, असंपूर्णत्वात् સંપૂર્ણતા ન હોવાથી असंपूर्ण होनेसे, रसवाहिनीभिः રસવાહિની रसवाहिनी, संवाहिनीभिः શિરાઓ દ્વારા नाडियों द्वारा, गर्भः च मातृतः ગર્ભ માતામાંથી गर्भ मातासे, माता च गर्भतः અને માતા ગર્ભમાંથી और माता गर्भसे, मुहुः मुहु વાર-

२२. बलवर्णोपचयो—मासशोणितोपचयो (ब)

२३. सर्वैर्भावैः—सर्वभावैः (ब.)

,, ,, —सर्वभावै सह (ज)

२४. रसहारिणीभि —रसवाहिनीभि (ब. प.)

,, गर्भस्यासपूर्णत्वात्—गर्भस्य सपूर्णत्वात् (क.ज.ख.ब.प.)

વાર वारवार, परस्परत પરસ્પર परस्पर, ओज· ઓજસ ओजको, आददाते ગ્રહણ કરે છે ग्रहण करते रहते है,

24-(1) In the eighth month, on account of the yet incomplete formation of the fetus, there is a cotinuous transmission of vitality from the mother to the fetus and vice versa by means of the channels that carry the body-nutrient fluid

तस्मात्तदा गर्भिणी मुहुर्मुहुर्मुदा युक्ता भवति मुहुर्मुहुश्च म्लाना, तथा गर्भ ; तस्मात्तदा गर्भस्य जन्म व्यापत्तिमद्भवत्योजसोऽनवस्थितत्वात् । त चैवार्थमभिसमीक्ष्याष्टमं मासमगण्यमित्याचक्षते कुशलाः ॥ २४ ॥

तस्मात् તેથી इस हेतुसे, तदा ત્યારે उस समय, गर्भिणी ગર્ભિણી गर्भिणी, मुहु मुहु· વારવાર वारबार, मुदा युक्ता આનંદયુક્ત हर्षयुक्त, मुहु· मुहुः અને વારંવાર और बारबार, म्लाना च હર્ષરહિત ग्लानियुक्त, भवति થાય છે हो जाती है, गर्भ ગર્ભ પણ गर्भ भी, तथा તે પ્રમાણે થાય છે वैसा ही होता है, तस्मात् તેથી अत, तदा ત્યારે उस समय, गर्भस्य जन्म ગર્ભનો જન્મ गर्भका जन्म, ओजस· ઓજસની ओजकी, अनवस्थितत्वात् અસ્થિરતાને લઈ अस्थिरताके कारण, व्यापत्तिमत् ઉપદ્રવયુક્ત उपद्रवयुक्त, भवति થાય છે होता है, कुशला કુશળ વૈદ્યો कुशल वैद्य, तम् च एव ते उस, अर्थम् બાબતને अर्थको, अभिसमीक्ष्य લક્ષમાં લઈને ध्यानमें रखकर, अष्टमम् मासम् આઠમો મહિનો अष्टम मास, अगण्यम् ગર્ભિણી પાસે ગણવા યોગ્ય નથી गर्भिणीके पास गिनने योग्य नहीं है, इति એમ ऐसा, आचक्षते કહે છે कहते है ॥ २४ ॥

24 Therefore at this time the pregnant woman becomes momentarily joyful and momentarily distressed; in the same manner, also the fetus. Hence at this time the birth of the fetus is attended with risk because of the instability of the vital essence. It is on account of this consideration that the learned say that the eighth month is not to be reckoned upon

२४ म्काना–ग्लाना (ग)

,, भवति–भवत्यपिकं (ध.)

प्रसवकाल· —

तस्मिन्नेकदिवसातिक्रान्तेऽपि नवमं मासमुपादाय प्रसवकालमित्याहुरादशमान्मासात्। एतावान् प्रसवकालः, वैकारिकमतः परं कुक्षाववस्थानं गर्भस्य ॥ २५॥

तस्मिन् તે આઠમા મહિનાને उस अष्टम मासके, एक-दिवस-अतिक्रान्ते વીત્યે એક દિવસ થયા છતાં वाद एक दिन बीतने पर, अपि પણ भी, नवमम् मासम् નવમા માસને नवम मासको, उपादाय લઈને ले कर, आदशमात् દશમા दशम, मासात् માસપર્યન્ત मासपर्यन्त, प्रसवकालम् પ્રસવકાલ છે प्रसवकाल है, इति એમ ऐसा, आहु કહે છે कहते है, एतावान् આટલો इतना, प्रसवकाल પ્રસૂતિ થવાનો કાળ છે प्रसवकाल है अत. परम् એ પછીથી इसके बाद, गर्भस्य ગર્ભનું गर्भका, कुक्षौ ગર્ભાશયમાં कुक्षिमें, अवस्थानम् રહેવું निवास, वैकारिकम् વિકારવાળું છે विकारयुक्त है ॥२५॥

25. If the eighth month is passed even by a day, the ninth month having come in, thence till the tenth month is the period of delivery. This is the normal period of delivery. If the fetus stays longer in the womb, it is abnormal

२५ नवम मासमुपाद्राय प्रनदकालम्–नवमं मासमुपा[illegible] कालम् ([illegible])

,, आदशमान्मामात–आद्वादशमान्मात (ट)

,, दशमान्मासात्–द्वादशान्मासात् (ग)

,, अत. पर कुक्षाववस्थानम्–अत ऊर्ध्वमवस्थानम् (ध)

प्रकरणोपसंहारः—

**एवमनयाऽऽनुपूर्व्याऽभिनिर्वर्तते कुक्षौ ॥ २६ ॥**

एवम् આમ इस तरह, अनया આ इस, आनुपूर्व्या ક્રમાનુસાર क्रमसे, कुक्षौ ગર્ભ ઉદરમાં गर्भ कुक्षिमें, अभिनिर्वर्तते નિષ્પન્ન થાય છે निष्पन्न होता है ॥ २६ ॥

26 Thus by these stages the fetus develops in the womb.

कुक्षौ गर्भस्य वृद्धेर्हेतुः—

**मात्रादीनां खलु गर्भकराणां भावानां संपदस्तथा वृत्तस्य सौष्ठवान्मातृतश्चैवोपस्नेहोपस्वेदाभ्यां कालपरिणामात् स्वभावसंसिद्धेश्च कुक्षौ वृद्धिं प्राप्नोति ॥ २७ ॥**

मात्रादीनाम् खलु માતા આદિ माता आदि, गर्भकराणाम् ગર્ભકર गर्भोत्पादक, भावानाम् ભાવોની भावोंकी, संपदः સંપત્તિથી संपन्नतासे, तथा वृत्तस्य માતાના આચરણની गर्भिणीके आचारके, सौष्ठवात् ઉત્તમતાથી सम्यक् पालनसे, मातृत. एव માતાથીજ મળતાં माताहीसे प्राप्त, उपस्नेह- ઉપસ્નેહન उपस्नेहन, उपस्वेदाभ्याम् च તથા ઉપસ્વેદનથી एवं उपस्वेदनसे, कालपरिणामात् કાળક્રમે પરિપાક પામવાથી कालद्वारा परिपाक होनेसे, स्वभावसंसिद्धेः च અને સ્વાભાવિક વૃદ્ધિ- થવાથી और [illegible]स्वभाववाला होनेसे, कुक्षौ ગર્ભ ઉદરમાં गर्भ उदरमें, वृद्धिम् વૃદ્ધિ वृद्धि, प्राप्नोति પામે છે पाता है ॥ २७ ॥

27. The fetus waxes in the womb by the excellence of the parts derived from the various embryo-forming elements like the mother etc, as also from the excellence of the expectant mother's regimen and the Upasweda and Upa sneha procedures, the passage of time, and finally from the course of nature.

गर्भस्याजन्मनि हेतुः—

**मात्रादीनामेव तु खलु गर्भकराणां भावानां व्यापत्तिनिमित्तमस्याजन्म भवति ॥ २८ ॥**

मात्रादीनाम् खलु માતા આદિ माता आदि, गर्भकराणाम् ગર્ભકર गर्भोत्पादक, भावानाम् ભાવોની भावोंका, व्यापत्तिनिमित्तम् દૂષિતતાને કારણે दूषितताके कारण, एव तु જ ही, अस्य એની इसका, अजन्म અનુત્પત્તિ अजन्म, भवति થાય છે होता है ॥२८॥

28. It is exclusively on account of some defects in the embryo-forming elements like the mother etc., that the fetus fails to get born.

गर्भस्य व्यापत्तेर्हेतुः—

**ये ह्यस्य कुक्षौ वृद्धिहेतुसमाख्याता भावास्तेषां विपर्ययादुदरे विनाशमापद्यते, अथवाऽप्यचिरजातः स्यात् ॥ २९ ॥**

ये हि વળી જે और जो, भावा ભાવો भाव, कुक्षौ अस्य ઉદરમાં આની उदरमें इसकी, वृद्धिहेतु- વૃદ્ધિના હેતુ वृद्धिके कारण, समाख्याता. કહ્યા છે कहे है, तेषाम् તેઓની उनके, विपर्ययात् વિપરીતતાથી वैगुण्यसे, उदरे એ ઉદરમાં यह उदरमें, विनाशम् आपद्यते વિનાશ પામે છે विनाश पाता है, अथवा अपि અથવા या, अचिरजातः स्यात् તરતમાંજ તેનો પ્રસવ થઈ વિનાશ થાય છે शीघ्र ही उसका प्रसव हो कर विनाश होता है ॥ २९ ॥

39 It is on account of the retardation of the processes which we have described as helping the growth of the fetus in the womb that the fetus gets destroyed or in the alternative is prematurely delivered.

गर्भस्य बीजदोषादिप्रभवा विकृतय —

**यतस्तु कार्त्स्न्येनाविनश्यन् विकृतिमापद्यते, तदनुव्याख्यास्यामः—**

२८ मात्रादीनामेव तु—मात्रादीना तु (ब)

यतः तु જે કારણે વળી और जिससे, कार्त्स्न्येन ગર્ભ સ પૂર્ણપણે गर्भ संपूर्णतया, अविनश्यन् નાશ ન પામતાં नष्ट न हो कर, विकृतिम् વિકૃતિને विकृतिको, आपद्यते પામે છે प्राप्त होता है, तत् તેનુ उसका, अनुव्याख्यास्यामः વ્યાખ્યાન કરશુ व्याख्यान करेंगे—

30-(1). We shall now explain how the fetus not being wholly destroyed, is, however, deformed.

**यदा स्त्रिया दोषप्रकोपणोक्तान्यासेवमानाया दोषाः प्रकुपिताः शरीरमुपसर्पन्तः शोणितगर्भाशयावुपपद्यन्ते, न च कार्त्स्न्येन शोणितगर्भाशयौ दूषयन्ति, तदेयं गर्भं लभते स्त्री; तदा तस्य गर्भस्य मातृजानामवयवानामन्यतमोऽवयवो विकृतिमापद्यत एकोऽथवाऽनेके, यस्य यस्य ह्यवयवस्य वीजे वीजभागे वा दोषाः प्रकोपमापद्यन्ते, तं तमवयवं विकृतिराविशति ।**

दोष-प्रकोपण-उक्तानि દોષોને પ્રકુપિત કરનારપણાથી કહેલા પદાર્થોનું दोष-प्रकोपणत्वसे कही हुई वस्तुओंका, आसेवमानाया. વિશેષ સેવન કરનાર विशेष सेवन करनेवाली, स्त्रिया. સ્ત્રીના स्त्रीके, दोषा. દોષો दोष, यदा જ્યારે जब, प्रकुपिता. પ્રકોપ પામીને प्रकुपित हो कर, शरीरम् શરીરમાં शरीरमें, उपसर्पन्त ફેલાતા ફેલાતા फैलते हुए, शोणित- શોણિત आर्तव, गर्भाशयौ અને ગર્ભાશયમાં और गर्भाशयमें, उपपद्यन्ते પહોંચે છે पहुचते है, शोणितगर्भाशयौ તથા શોણિત અને ગર્ભાશયને और आर्तव एवं गर्भाशयको, कार्त्स्न्येन પૂર્ણપણે सपूर्णतया, न दूषयन्ति च દૂષિત કરતા નથી नहीं दूषित करते, तदा ત્યારે तब, इयम् એ यह, स्त्री સ્ત્રી स्त्री, गर्भम् ગર્ભને गर्भको, लभते ધારણ કરે છે धारण करती है, तदा ત્યારે तब, तस्य તે उस, गर्भस्य ગર્ભના गर्भके, मातृजानाम् માતૃજ मातृज, अवयवानाम् અવયવોમાંનો अवयवोंमेंसे, अन्यतम. કોઈ कोई, एकः अवयवः એક અવયવ एक अवयव, विकृतिम् વિકાર विकृतिको, आपद्यते પામે છે प्राप्त होता है, अथवा અથવા अथवा, अनेके અનેક અવયવો વિકાર પામે છે अनेक अवयव विकृतिको प्राप्त होते है, हि કારણકે क्योंकि, यस्य यस्य જે જે जिस जिस, अवयवस्य અવયવના अवयवके, वीजे બીજમાં बीजमें, वीजभागे वा કે બીજભાગમાં या बीजभागमें, दोषा દોષો दोष, प्रकोपम् પ્રકોપ प्रकोपको, आपद्यन्ते પામે છે प्राप्त होते हैं, तम् તે उस, तम् તે उस, अवयवम् અવયવમાં अवयवमें, विकृति વિકૃતિ विकृति, आविशति પેસે છે आती है।

30-(2). If a woman who is habituated to things that are apt to irritate the three humors, which being thus irritated, spread through the body and reach the generative organs, without, however, completely vitiating them, if such a woman conceives, then of that conception one or more of the parts deriving from the mother will be rendered defective, the defect being limited to those limbs whose parent parts in the spermoplasm are vitiated by reason of the irritated humors.

**यदा ह्यस्याः शोणिते गर्भाशयवीजभागः प्रदोषमापद्यते, तदा वन्ध्यां जनयतिः यदा पुनरस्याः शोणिते गर्भाशयवीजभागावयवः प्रदोषमापद्यते, तदा पूतिप्रजां जनयति, यदा त्वस्याः शोणिते गर्भाशयवीजभागावयवः स्त्रीकराणां च शरीरवीजभागानामेकदेशः प्रदोषमापद्यते, तदा स्त्र्याकृतिभूयिष्ठामस्त्रियं वार्तां नाम जनयति, तां स्त्रीव्यापदमाचक्षते ॥ ३० ॥**

---

३० शोणितगर्भाशयावुपपद्यन्ते—शोणितगर्भाशयोपघातायोपपद्यन्ते (द व)

,, तदेयम्—तदा य (भ)

,, एकोऽथवाऽनेके—एकोऽथवाऽनेक (ध. च)

,, यस्य यस्य—अस्य यस्य (म)

,, तदा तस्य गर्भस्य—तदा गर्भस्य (व)

३० यदा—तदा (ध.)

,, वार्ता—रान्ता (व ध)

यदा हि જ્યારે जब, अस्या એ સ્ત્રીના इस स्त्रीके, शोणिते આર્તવમાં आर्तवमें, गर्भाशय-बीजभागः ગર્ભાશયને ઉત્પન્ન કરનાર બીજભાગ गर्भाशयजनक बीजभाग, प्रदोषम् દોષ दुष्ट, आपद्यते પામે છે होता है, तदा ત્યારે तब, वन्ध्याम् તે વન્ધ્યાને वह वन्ध्याको, जनयति ઉત્પન્ન કરે છે उत्पन्न करता है, यदा पुनः વળી જ્યારે और जब, अस्याः એના इसके, शोणिते આર્તવમાં आर्तवमें, गर्भाशय-बीजभाग-अवयवः ગર્ભાશયને ઉત્પન્ન કરનાર બીજભાગનો અંશ गर्भाशयजनक बीजभागका अंश, प्रदोषम् દોષ दुष्ट, आपद्यते પામે છે होता है, तदा ત્યારે तब, पूतिप्रजाम् તે પૂતિપ્રજાને वह पूतिप्रजाको, जनयति ઉત્પન્ન કરે છે उत्पन्न करता है, यदा तु વળી જ્યારે और जब, अस्या એના इसके, शोणिते આર્તવમાં आर्तवमें, गर्भाशयबीजभागावयव. ગર્ભાશયને ઉત્પન્ન કરનાર બીજભાગનો અંશ गर्भाशयजनक बीजभागका अंश, स्त्रीकराणाम् च અને સ્ત્રીપણાને કરનારા और स्त्रीत्वजनक, शारीरबीजभागानाम् શરીરોત્પાદક બીજભાગોનો शरीरोत्पादक बीजभागोंका, एकदेशः એક અંશ एक अंश, प्रदोषम् દોષ दुष्ट, आपद्यते પામે છે होता है, तदा ત્યારે तब, स्त्र्याकृतिभूयिष्ठाम् સ્ત્રીને ઘણી મળતી આકૃતિવાળી स्त्रीसे वहुत मिलने जुलने आकारवाली, अस्त्रियम् સ્ત્રીભાવરહિત स्त्रीभावरहित, वार्ताम् વાર્તા वार्ता, नाम નામની વિકૃતિને नामकी विकृतिको, जनयति ઉત્પન્ન કરે છે उत्पन्न करती है, ताम् તેને उसको, स्त्रीव्यापदम् સ્ત્રીવ્યાપત્ स्त्रीव्यापत्, आचक्षते કહે છે कहते है ॥ ३० ॥

30 Thus for instance, if the uterine part of the spermo plasm is vitiated, then the mother gives birth to a barren female. If again only a part of the spermo-plasm is vitiated, then she gives birth to a Putipraja. If again the uterine part of the fertitized ovum and that part of the fertilized ovum which is responsible for the differentiation of female characteristics get partially vitiated, then she gives birth to a non-female having however abundance of female characteristics, and named 'Varta'. Such a person is spoken of as a female deformity.

**एवमेव पुरुषस्य यदा वीजे बीजभागः प्रदोषमापद्यते, तदा वन्ध्यं जनयति; यदा पुनरस्य वीजे वीजभागावयवः प्रदोषमापद्यते, तदा पूतिप्रजं जनयति; यदा त्वस्य वीजे बीजभागावयवः पुरुषकराणां च शरीरबीजभागानामेकदेशः प्रदोषमापद्यते, तदा पुरुषाकृतिभूयिष्ठमपुरुषं तृणपुत्रिकं नाम जनयति; तां पुरुषव्यापदमाचक्षते ॥ ३१ ॥**

एवम् एव એ જ પ્રમાણે इसी तरह, यदा જ્યારે जब, पुरुषस्य પુરુષના पुरुषके, वीजे બીજમાં बीजमें, बीजभागः બીજભાગ बीजभाग, प्रदोषम् દોષ दूषित, आपद्यते પામે છે होता है, तदा ત્યારે तब, वन्ध्यम् તે વન્ધ્ય પુરુષને वह वन्ध्य पुरुषको, जनयति ઉત્પન્ન કરે છે उत्पन्न करता है, यदा पुनः જ્યારે વળી और जब, अस्य वीजे એના બીજમાં इसके बीजमें, बीजभाग-अवयव બીજભાગનો અંશ बीजभागका अंश, प्रदोषम् દોષ दुष्ट, आपद्यते પામે છે होता है, तदा ત્યારે तब, पूतिप्रजम् તે પૂતિપ્રજાવાળાને वह पूतिप्रजावालेको, जनयति ઉત્પન્ન કરે છે उत्पन्न करता है, यदा तु વળી જ્યારે और जब, अस्य वीजे એના બીજમાં इसके बीजमें, बीजभाग-अवयवः બીજભાગનો અંશ बीजभागका अंश, पुरुषकराणाम् च તથા પુરુષપણાને કરનારા और पुरुषत्वजनक, शरीर-बीजभागानाम् શરીરના ઉત્પાદક બીજભાગોનો शरीरोत्पादक बीजभागोंका, एकदेश. એક અંશ एक अंश, प्रदोषम् દોષ दुष्ट, आपद्यते પામે છે होता है, तदा ત્યારે तब, पुरुषाकृतिभूयिष्ठम् પુરુષને ઘણી મળતી આકૃતિવાળા पुरुषसे वहुत मिलते जुलते आकारवाले, अपुरुषम् પુરુષ નહિ એવી पुरुषत्वरहित, तृणपुत्रिकम् તૃણપુત્રિક तृणपुत्रिक, नाम

३१ एवमेव पुरुषस्य यदा वीजे वीजभागः प्रदोषमापद्यते, तदा वन्ध्य जनयति, यदा पुनरस्य वीजे बीजभागावयव प्रदोषमापद्यते—एवमेव पुरुषस्य बीजदोषे पितृजावयवविकृति विषाद यदा हि अस्य वीजे बीजभागावयव. प्रदोषमापद्यते (ध)

,, तृणपुत्रिकम्—तृणपूलिकम् (क. ष. त. द. ध.)

नामनी વિકૃતિને नामकी विकृतिको, जनयति ઉત્પન્ન કરે છે उत्पन्न करता है, ताम् તેને उसको, पुरुषव्यापदम् પુરુષ-વ્યાપત્ पुरुषव्यापत्, आचक्षते કહે છે कहते है ॥३१॥

31. Similarly if the male procreating part of the semen is vitiated then the man begets a sterile male; if again the male procreating part of the semen of a man is partially vitiated, then he begets a male called 'Putipraja'; if the male procreating part of the semen and those parts of the semen which give rise to the differentiation of the male characteristics are partially vitiated, then he begets a pon-man having a number of male characteristics, and named 'Trinaputrika'. He is spoken of as a male deformity

**एतेन मातृजानां पितृजानां चावयवानां विकृतिव्याख्यानेन सात्म्यजानां रसजानां सत्त्वजानां चावयवानां विकृतिर्व्याख्याता भवति ॥ ३२॥**

एतेन આથી इससे, मातृजानाम् માતૃજ मातृज, पितृजानाम् અને પિતૃજ और पितृज, अवयवानाम् અવયવોની अवयवोंकी, विकृतिव्याख्यानेन વિકૃતિના વ્યાખ્યાનથી विकृतिके व्याख्यानसे, सात्म्यजानाम् સાત્મ્યજ सात्म्यज, रसजानाम् રસજ रसज, सत्त्वजानाम् च અને સત્ત્વજ और सत्त्वज, अवयवानाम् અવયવોની अवयवोंकी, विकृति વિકૃતિનુ પણ विकृतिका भी, व्याख्याता भवति વ્યાખ્યાન થઈ જાય છે व्याख्यान हो जाता है ॥ ३२ ॥

32. Thus the conditions we have shown, concerning the defects originating from either the father or the mother, are also to be applied in the case of defects originating from the other factors such as concord, nutrition as also the psychic factor.

आत्मनो निर्विकारत्वनिर्देश —

**निर्विकारः परस्त्वात्मा सर्वभूतानां निर्विशेषः; सत्त्वशरीरयोस्तु विशेषाद्विशेषोपलब्धिः ॥ ३३ ॥**

परः आत्मा तु પરમાત્મા તો परमात्मा तो, निर्विकार નિર્વિકાર છે विकाररहित है, सर्वभूतानाम् અને સર્વપ્રાણીઓમાં और सब प्राणियोंमें, निर्विशेषः તુલ્યપણે રહેલો છે तुल्य है, सत्त्वशरीरयो तु પરંતુ મન અને શરીરની परन्तु मन और शरीरके, विशेषात् ભિન્નતાને લઈ भेदसे, विशेषोपलब्धि તે ભિન્ન હેય તેમ પ્રતીત થાય છે उसमें भिन्नता प्रतीत होती है ॥ ३३ ॥

33. The supreme spirit is ever defectless and is the same in all living beings; but on account of the difference in mind and body, it appears to be different.

शारीरा मानसाश्च दोषा.—

**तत्र त्रयः शरीरदोषा वातपित्तश्लेष्माणः, ते शरीरं दूषयन्ति, द्वौ पुनः सत्त्वदोषौ रजस्तमश्च, तौ सत्त्वं दूषयतः। ताभ्यां च सत्त्वशरीराभ्यां दुष्टाभ्यां विकृतिरुपजायते, नोपजायते चाप्रदुष्टाभ्याम् ॥ ३४॥**

तत्र તેમાં इनमें, वात-पित्त-श्लेष्माण વાત, પિત્ત અને શ્લેષ્મ वात, पित्त और कफ, त्रयः એ ત્રણ ये तीन, शरीरदोषाः શરીરના દોષો છે शरीरके दोष हैं, ते તેઓ वे, शरीरम् શરીરને शरीरको, दूषयन्ति દૂષિત કરે છે दूषित करते है, रजः રજોગુણ रज, तम च અને તમોગુણ और तम, द्वौ पुनः એ બે ये दो, सत्त्वदोषौ મનના દોષો છે मनके दोष हैं, तौ તે वे, सत्त्वम् મનને मनको, दूषयत. દૂષિત કરે છે दूषित करते हैं, ताभ्याम् તે इन, दुष्टाभ्याम् દૂષિત થયેલા दूषित, सत्त्वशरीराभ्याम् च મન અને શરીરથી मन और शरीरसे, विकृति વિકૃતિ विकार, उपजायते ઉત્પન્ન થાય છે उत्पन्न होती है, अप्रदुष्टाभ्याम् च અને મન

३४. त्रयः – त्रयस्तु (ग.)
,, शरीरदोषा – शारीरदोषा. (च)

तथा शरीर દૂષિત ન થયાં હોય તો और मन तथा शरीर दूषित न हो तो, न उपजायते વિકૃતિ થતી નથી विकार उत्पन्न नहीं होता ॥ ३४ ॥

34. Now there are three vitiating elements in the body namely, vata, pitta and kapha; these vitiate the body. As regards the mind there are two vitiating elements namely passion and ignorance. Disease takes its rise as the result of the vitiation of the two—the body and the mind; it cannot manifest if they remain unvitiated

शरीरभेदाः —

**तत्र शरीरं योनिविशेषाच्चतुर्विधमुक्तमग्रे ॥३५॥**

तत्र ત્યાં वहां, शरीरम् શરીર शरीर, योनिविशेषात् યોનિના ભેદથી योनिके भेदसे, चतुर्विधम् ચાર પ્રકારનું છે चार प्रकारका है, अग्रे એમ પહેલાં ऐसा पहले, उक्तम् કહ્યું છે कहा है ॥ ३५ ॥

35. Of these two, the body is of four kinds on account of the manner of propagation as shown previously

सत्त्वभेदाः —

**त्रिविधं खलु सत्त्वं-शुद्धं, राजसं, तामसमिति। तत्र शुद्धमदोषमाख्यातं कल्याणांशत्वात्, राजसं सदोषमाख्यातं रोषांशत्वात्, तामसमपि सदोषमाख्यातं मोहांशत्वात् ।**

सत्त्वम् खलु મન मन, त्रिविधम् ત્રણ પ્રકારનું છે तीन प्रकारका है, शुद्धम् શુદ્ધ शुद्ध, राजसम् રાજસ राजस, तामसम् इति અને તામસ और तामस, तत्र તેમાં उनमें, शुद्धम् શુદ્ધ મનને शुद्ध मनको, कल्याणांशत्वात् કલ્યાણભાગવાળું હોવાને લીધે कल्याण भागवाला होनेसे, अदोषम् દોષરહિત दोषरहित, आख्यातम् કહેલ છે कहा है, राजसम् રાજસ મનને राजस मनको, रोषांशत्वात् રોષભાગવાળું હોવાને લીધે रोषभागवाला होनेसे, सदोषम् દોષયુક્ત दोषयुक्त, आख्यातम् કહેલ છે कहा है, तामसम् अपि તથા તામસ મનને तथा तामस मनको, मोहांशत्वात् મોહભાગવાળું હોવાને લીધે मोह भागवाला होनेसे, सदोषम् દોષયુક્ત दोषयुक्त, आख्यातम् કહેલ છે कहा है।

36-(1). The mind is of three kinds —pure, passionate and ignorant. The pure mind is considered to be without any taint as it represents the beneficient aspect of the intelligence, the passionate mind is tainted as it represents the violent aspect, the ignorant mind is also tainted on account of its representing the deluded aspect.

**तेषां तु त्रयाणामपि सत्त्वानामेकैकस्य भेदाग्रमपरिसङ्ख्येयं तरतमयोगाच्छरीरयोनिविशेषेभ्यश्चान्योन्यानुविधानत्वाच्च। शरीरं ह्यपि सत्त्वमनुविधीयते, सत्त्वं च शरीरम्। तस्मात् कतिचित्सत्त्वभेदाननूकाभिनिर्देशेन निदर्शनार्थमनुव्याख्यास्यामः ॥ ३६ ॥**

तरतमयोगात् તર અને તમના યોગથી तरतमके योगसे, शरीरयोनि- શરીર અને યોનિઓના शरीर और योनिके, विशेषेभ्य: च ભેદથી भेदसे, अन्योन्य- અને શરીર તથા સત્ત્વનુ પરસ્પરની સાથે और शरीर एवं सत्त्वके परस्पर साथ, अनुविधानत्वात् च અનુરૂપપણું હોવાથી अनुरूपता होनेसे, तेषाम् ते इन, त्रयाणाम् अपि ત્રણેય तीनों, सत्त्वानाम् મનમાંના सत्त्वोंमेंसे, एकैकस्य પ્રત્યેકના प्रत्येकके, भेदाग्रम् ભેદના પ્રકાર भेदके प्रकार, अपरिसंख्येयम् અસંખ્ય થાય છે असंख्य होते है, हि કારણકે क्योंकि, शरीरम् अपि શરીર शरीर, सत्त्वम् મનને मनके, सत्त्वम् च અને મન एवं मन, शरीरम् શરીરને शरीरके, अनुविधीयते અનુરૂપ થાય છે अनुरूप होता है, तस्मात् તેથી इस लिए, निदर्शनार्थम् ઉદાહરણ માટે उदाहरणके तौर पर, कतिचित् કેટલાક कतिपय, सत्त्वभेदान् મનના ભેદોનુ मनके भेदोंका, अनूक- સાદૃશ્યનો सादृश्यका, अभिनिर्देशेन નિર્દેશ કરી निर्देश कर, अनुव्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ ३६ ॥

36. Each of these three types of mind reveals an infinite number of variations on account of the differentiating factors of degree, origin and body, and the mutual concomitance of body and mind Thus a particular type of body goes with a particular type of mind; and conversely a particular type of mind with a particular type of body. In order to illustrate this, we shall now enumerate, by way of examples, several different intellectual types.

ब्राह्मसत्त्वस्य लक्षणम्—

**तद्यथा—शुचिं सत्याभिसन्धं जितात्मानं संविभागिनं ज्ञानविज्ञानवचनप्रतिवचनसंपन्नं स्मृतिमन्तं कामक्रोधलोभमानमोहेर्ष्याहर्षामर्षापेतं समं सर्वभूतेषु ब्राह्मं विद्यात् ॥ (१) ॥**

तत् यथा જેમકે जैसे कि, शुचिम् પવિત્ર पवित्र, सत्याभिसन्धम् સત્ય પ્રતિજ્ઞાવાળા सत्य प्रतिज्ञावाले, जितात्मानम् જિતેન્દ્રિય जितेन्द्रिय, सविभागिनम् સંપત્તિ વગેરેનો ઉચિત વિભાગ કરનાર सपत्ति आदिका उचित विभाग करनेवाले, ज्ञानविज्ञान- જ્ઞાન-વિજ્ઞાન ज्ञान-विज्ञान, वचन-प्रतिवचन- વચન અને પ્રતિવચનની वचन और प्रतिवचनकी, संपन्नम् સંપત્તિવાળા संपत्तिसे युक्त, स्मृतिमन्तम् સ્મૃતિમાન स्मृतिमान काम - क्रोध - કામ - ક્રોધ काम-क्रोध, लोभ-मान- લોભ-માન लोभ-मान, मोह-ईर्ष्या- મોહ-ઈર્ષ્યા मोह-ईर्ष्या, हर्ष-अमर्ष- હર્ષ અને અમર્ષથી हर्ष और अमर्षसे, अपेतम् રહિત रहित, सर्वभूतेषु તથા સર્વ પ્રાણી પર और सब प्राणियोंमें, समम् સમદૃષ્ટિવાળા પુરુષને समदृष्टिवाले पुरुषको, ब्राह्मम् બ્રાહ્મસત્ત્વ (બ્રાહ્મ સત્ત્વવાળો) ब्राह्मसत्त्व (ब्राह्मसत्त्ववाला), विद्यात् જાણવો जानना चाहिए ॥ (१) ॥

37-(1) One who is pure, devoted to truth, self-controlled, of right discrimination, endowed with knowledge, understanding and power of exposition and reply, possessed of memory, free from desire, anger, greed, conceit, infatuation, envy, dejection and intolerance and equally well disposed to all creatures is to be known as being of the Brahmic type

आर्षसत्त्वस्य लक्षणम्—

**इज्याध्ययनव्रतहोमब्रह्मचर्यपरमतिथिव्रतमुपशान्तमदमानरागद्वेषमोहलोभरोषं प्रतिभावचनविज्ञानोपधारणशक्तिसंपन्नमार्षं विद्यात् ॥ (२) ॥**

इज्या- યજ્ઞ यज्ञ, अध्ययन- અધ્યયન स्वाध्याय, व्रत- વ્રત व्रत, होम- હોમ होम, ब्रह्मचर्यपरम् અને બ્રહ્મચર્યમાં તત્પર और ब्रह्मचर्यपरायण, अतिथिव्रतम् અતિથિપૂજક अतिथिपूजक, उपशान्तमद- શાંત મદ शात मद, मान- માન मान, राग- રાગ राग, द्वेष- દ્વેષ द्वेष, मोह- મોહ मोह, लोभ- લોભ लोभ, रोषम् તથા રોષવાળા तथा रोषवाले, प्रतिभा- वचन- તેમજ પ્રતિભાયુક્ત વચન एवं प्रतिभायुक्त वचन, विज्ञान- વિજ્ઞાન विज्ञान, उपधारणशक्ति- અને ધારણાશક્તિથી और धारणाशक्तिसे, सपन्नम् સંપન્ન પુરુષને सपन्न पुरुषको, आर्षम् આર્ષસત્ત્વ आर्षसत्त्व, विद्यात् જાણવો जानना चाहिए, (२)॥

37-(2) One who is devoted to sacrifice, study, vows, burnt-offerings, celibacy, is hospitable, devoid of pride, conceit, attachment, hate, infatuation, greed and anger, endowed with genius, eloquence, understanding. and retentive power is to be known as being of the Rishi type.

ऐन्द्रसत्त्वस्य लक्षणम्—

**ऐश्वर्यवन्तमादेयवाक्यं यज्वानं शूरमोजस्विनं**

---

३७.(२) अतिथिव्रतम्—अतिथिपूजकम् (च)

,, प्रतिभावचन°—प्रतिवचन° (ख)

३७ (३) ऐश्वर्यवन्तमादेयवाक्यं—ऐश्वर्यवन्तमौपधिक (प.)

**तेजसोपेतमक्लिष्टकर्माणं दीर्घदर्शिनं धर्मार्थकामाभिरतमैन्द्रं विद्यात्॥ (३)॥**

ऐश्वर्यवन्तम् ઐશ્વર્યયુક્ત ऐश्वर्यशाली, **आदेयवाक्यम्** ગ્રહણ કરવા યોગ્ય વચનવાળા मानने योग्य वचनवाले, **यज्वानम्** યજ્ઞ કરનાર यज्ञशील, **शूरम्** શૂર शूर, **ओजस्विनम्** ઓજસ્વી ओजस्वी, **तेजसा-उपेतम्** તેજસ્વી तेजयुक्त, **अक्लिष्टकर्माणम्** નિન્દિત કર્મ નહિ કરનાર निन्दित कर्म न करनेवाले, **दीर्घदर्शिनम्** દીર્ઘદર્શી दूरदर्शी, **धर्मार्थकाम-अभिरतम्** તથા ધર્મ-અર્થ અને કામમાં પ્રીતિવાળા પુરુષને एव धर्म- अर्थ और काममें परायण पुरुषको, **ऐन्द्रम्** ઐન્દ્રસત્ત્વ ऐन्द्रसत्त्व, **विद्यात्** જાણવો जानना चाहिए ॥ (३) ॥

37-(3). One who is endowed with lordship, is of authoritative speech, given to the performance of sacrifices, brave, energetic, endowed with splendour, given to blameless actions, possessed of foresight and devoted to the pursuits of virtue, wealth and sense-pleasures, is to be known as belonging to the Indra type

याम्यसत्त्वस्य लक्षणम् –

**लेखास्थवृत्तं प्राप्तकारिणमसंप्रहार्यमुत्थानवन्तं स्मृतिमन्तमैश्वर्यलम्भिनं व्यपगतरागेर्ष्याद्वेषमोहं याम्यं विद्यात् ॥ (४)॥**

**लेखास्थवृत्तम्** કર્તવ્યાકર્તવ્યની મર્યાદામાં રહેલા આચરણવાળા कर्तव्याकर्तव्यकी मर्यादामें स्थित आचारवाले, **प्राप्तकारिणम्** યુક્ત કર્મ કરનાર प्राप्तकारी, **असंप्रहार्यम्** જેના પર આક્રમણ ન થઈ શકે એવા जिस पर प्रहार न हो सके ऐसा, **उत्थानवन्तम्** ઉદ્યોગી उद्यमी, **स्मृतिमन्तम्** સ્મૃતિમાન स्मृतिमान, **ऐश्वर्यलम्भिनम्** ઐશ્વર્ય પ્રાપ્ત કરનાર ऐश्वर्यशाली, **व्यपगतराग-** અને રાગ राग, **ईर्ष्या-** ઈર્ષ્યા ईर्ष्या, **द्वेष-** દ્વેષ द्वेष, **मोहम्** તથા મોહરહિત પુરુષને तथा मोहरहित पुरुषको, **याम्यम्** યામ્યસત્ત્વ याम्यसत्त्व, **विद्यात्** જાણવો जाने ॥ (४) ॥

37-(4). One whose conduct is governed by considerations of propriety, who does the right thing, is unassailable, who is constantly up and about, who is endowed with good memory, who sets store by authority and power, and who is free from the passions of attachment, envy, hate and infatuation is to be known as belonging to the Yama type.

वारुणसत्त्वस्य लक्षणम्—

**शूरं धीरं शुचिमशुचिद्वेषिणं यज्वानमम्भोविहाररतिमक्लिष्टकर्माणं स्थानकोपप्रसादं वारुणं विद्यात् ॥ (५) ॥**

**शूरम्** શૂરવીર शूर, **धीरम्** ધીર धीर, **शुचिम्** પવિત્ર पवित्र, **अशुचि-द्वेषिणम्** અપવિત્રનો દ્વેષ કરનાર अपवित्रतासे द्वेष करनेवाले, **यज्वानम्** યજ્ઞ કરનાર यागशील, **अम्भोविहाररतिम्** જલવિહારમાં પ્રીતિવાળા जलक्रीडाप्रेमी, **अक्लिष्टकर्माणम्** નિન્દ્ય કર્મ નહિ કરનાર निन्द्य कर्म न करनेवाला, **स्थानकोपप्रसादम्** અને યોગ્ય સ્થળે કોપ તથા પ્રસન્નતા કરનાર પુરુષને और समय पर कोप तथा पसाद करनेवाले पुरुषको, **वारुणम्** વારુણસત્ત્વ वारुणसत्त्व, **विद्यात्** જાણવો जाने ॥ (५) ॥

37-(5). One who is valiant, courageous, clean, intolerant of uncleanliness, devoted to the performance of sacrifices, fond of aquatic sports and given to pursuits which are not blameworthy, whose anger and favour are well-placed, is to be known as belonging to the Varuna type.

३७- ४) लेखास्थवृत्तं–लेखस्थवृत्त (प)
,, ऐश्वर्यलम्भिनम्–ऐश्वर्यालम्बिनम् (च)
,, ऐश्वर्यलम्भिन–ऐश्वर्यलम्बिन (च.)
,, व्यपगतरागेर्ष्याद्वेष°–व्यपगतरागद्वेष° (ख.)

कौबेरसत्त्वस्य लक्षणम्—

**स्थानमानोपभोगपरिवारसंपन्नं धर्मार्थकामनित्यं शुचिं सुखविहारं व्यक्तकोपप्रसादं कौबेरं विद्यात् ॥ (६) ॥**

**स्थान-** સ્થાન स्थान, **मान-** માન मान, **उपभोग-** ઉપભોગ उपभोग, **परिवारसंपन्नम्** તથા પરિવારથી સંપન્ન एवं परिवारसे युक्त, **धर्मार्थकाम-नित्यम्** ધર્મ, અર્થ તથા કામમાં તત્પર धर्म, अर्थ तथा काममें परायण, **शुचिम्** પવિત્ર पवित्र, **सुखविहारम्** સુખપૂર્વક વિહાર કરનાર सुखविहारी **व्यक्त-कोप-प्रसादम्** અને સ્પષ્ટ કોપ તથા પ્રસન્નતાવાળા પુરુષને और जिसके कोप एवं प्रसन्नता प्रकट है ऐसे पुरुषको, **कौबेरम्** કૌબેરસત્ત્વ कौबेरसत्त्व, **विद्यात्** જાણવો जाने ॥ (६) ॥

37-(6) One who commands status, honour, luxuries and attendants, who is devoted to the constant pursuit of virtue, wealth and pleasure, is clean, is given to the pleasures of recreation, whose modes of anger and favour are patent, is to be known as belonging to the Kubera type.

गान्धर्वसत्त्वस्य लक्षणम्—

**प्रियनृत्यगीतवादित्रोल्लापकश्लोकाख्यायिकेतिहासपुराणेषु कुशलं गन्धमाल्यानुलेपनवसनस्त्रीविहारकामनित्यमनसूयकं गान्धर्वं विद्यात् ॥ (७) ॥**

**प्रिय-नृत्य** પ્રિય લાગે એવાં નૃત્ય प्रिय नृत्य, **गीत-** ગીત गीत, **वादित्र-** વાદિત્ર वाद्य, **उल्लापक-** સ્તોત્ર स्तोत्र, **श्लोक** શ્લોક श्लोक, **आख्यायिका-** આખ્યાયિકા कहानिया, **इतिहास** ઇતિહાસ इतिहास, **पुराणेषु** તથા પુરાણોમાં एव पुराणमें, **कुशलम्** કુશળ कुशल, **गन्ध-** ગન્ધ गन्ध, **माल्य-** માળા माल्य, **अनुलेपन-** અનુલેપન अनुलेपन, **वसन-** વસ્ત્રધારણ वस्त्रधारण, **स्त्रीविहार-** તથા સ્ત્રીવિહારની तथा स्त्रीविहारकी, **कामनित्यम्** કામનામાં તત્પર कामनामें तत्पर, **अनसूयकम्** અને અસૂયારહિત પુરુષને और असूयारहित पुरुषको, **गान्धर्वम्** ગાન્ધર્વસત્ત્વ गान्धर्वसत्त्व, **विद्यात्** જાણવો जाने ॥ (७) ॥

37 (7). One who is fond of dancing, song, music, praise, and is well-versed in poetry, anecdotes history and legends, is constantly addicted to the pleasures of fragrant unguents, garlands, ointments, fine raiment, women and recreation and is free from envy, is to be known as belonging to the Gandharva type.

शुद्धसत्त्वाना मध्ये ब्राह्मस्यात्यन्तशुद्धत्वम्—

**इत्येवं शुद्धस्य सत्त्वस्य सप्तविधं भेदांशं विद्यात् कल्याणांशत्वात्; तत्संयोगात्तु ब्राह्ममत्यन्तशुद्धं व्यवस्येत् ॥ ३७ ॥**

**इति एवम्** આ પ્રમાણે इस प्रकार, **कल्याणांशत्वात्** કલ્યાણ ભાગથી યુક્ત હોવાને લીધે कल्याण भागसे युक्त होनेके कारण, **शुद्धस्य** શુદ્ધ शुद्ध, **सत्त्वस्य** મનના सत्त्वके, **सप्तविधम्** સાત પ્રકારના सात प्रकारके, **भेदांशम्** ભેદ भेद, **विद्यात्** જાણવા जाने, **तत्-संयोगात्** તે કલ્યાણ ભાગના સમ્યગ્યોગથી उस कल्याणभागके सम्यग्योगसे, **तु** વળી तो, **ब्राह्मम्** બ્રાહ્મસત્ત્વને ब्राह्मसत्त्वको, **अत्यन्तशुद्धम्** અત્યન્ત શુદ્ધ अत्यन्त शुद्ध, **व्यवस्येत्** જાણવું समझना चाहिए ॥ ३७ ॥

37 Thus the Sattvic type is of seven varieties, they are all of the beneficent kind The first variety—the Brahmic, is to be considered the purest for the benificent aspect of the mind is perfectly represented in it.

---

३७-(६) परिवारसपन्न—परिवारोपसपन्न (ज.)
,, व्यक्तकोपप्रनाद—व्यक्तकोपप्रसाद (ध.)
३७-(७) वादित्रोल्लापकश्लोका°—वादित्रोल्लापक श्लोका (ध)
,, °विहारकामनित्यम्—°विहारनित्यम् (ध)

३७. तत्संयोगात्तु—संयोगात्तु (ध.)

आसुरसत्त्वस्य लक्षणम्—

**शूरं चण्डमसूयकमैश्वर्यवन्तमौपधिकं रौद्रमननुक्रोशमात्मपूजकमासुरं विद्यात् ॥ (१) ॥**

शूरम् શૂરવીર शूर, चण्डम् તીવ્ર કોપવાળા तीव्र कोपवाला, असूयकम् દોષ જોનાર दोषदर्शी, ऐश्वर्यवन्तम् ઐશ્વર્યયુક્ત ऐश्वर्यवान, औपधिकम् છળકપટયુક્ત कपटचारी, रौद्रम् રૌદ્ર नित्यक्रोधी, अननुक्रोशम् નિર્દય निर्दय, आत्मपूजकम् અને આત્મશ્લાઘી પુરુષને आत्मश्लाघी पुरुषको, आसुरम् આસુરસત્ત્વ आसुरसत्त्व, विद्यात् જાણવો जाने ॥ (१) ॥

38-(1). One who is valiant, despotic, of an envious disposition, possessed of authority, given to poses, terrifying, pitiless, and fond of self-adulation is to be known as representing the Asura type.

राक्षससत्त्वस्य लक्षणम्—

**अमर्षिणमनुबन्धकोपं छिद्रप्रहारिणं क्रूरमाहारातिमात्ररुचिमामिषप्रियतमं स्वप्नायासबहुलमीर्ष्युं राक्षसं विद्यात् ॥ (२) ॥**

अमर्षिणम् અસહિષ્ણુ असहिष्णु, अनुबन्धकोपम् દીર્ઘક્રોધી सदाक्रोधी, छिद्रप्रहारिणम् છિદ્રપ્રહારી छिद्रप्रहारी, क्रूरम् ક્રૂર क्रूर, आहार- આહારમાં भोजनमें, अतिमात्ररुचिम् અતિ રુચિવાળા अधिक रुचिवाले, आमिषप्रियतमम् માંસ જેને સૌથી પ્રિય છે એવા मांसका अति प्रेमी, स्वप्न-आयासबहुलम् બહુ નિદ્રા અને પરિશ્રમ કરનાર अति निद्रा और अति प्रयत्नशील, ईर्ष्युम् તથા ઈર્ષ્યાખોર પુરુષને तथा ईर्ष्यालु पुरुषको, राक्षसम् રાક્ષસસત્ત્વ राक्षससत्त्व, विद्यात् જાણવો जाने ॥ (२) ॥

38-(2). One who is intolerant, of implacable hate, bides his time and then strikes, is cruel, gluttonous, inordinately fond of flesh-foods, of an excessively somnolent and indolent disposition and envious, should be known as representing the Rakshasa type.

पैशाचसत्त्वस्य लक्षणम्—

**महाशनं स्त्रैणं स्त्रीरहस्कामसशुचिं शुचिद्वेषिणं भीरुं भीषयितारं विकृतविहाराहारशीलं पैशाचं विद्यात् ॥ (३) ॥**

महाशनम् બહુ ખાનાર बहुभोजी, स्त्रैणम् સ્ત્રીવશ स्त्रीके वशवर्ती, स्त्रीरहस्कामम् સ્ત્રી સાથે એકાન્તમાં રહેવાની ઇચ્છાવાળા स्त्रीके साथ एकान्त चाहनेवाला, अशुचिम् અપવિત્ર अपवित्र, शुचिद्वेषिणम् પવિત્રદ્વેષી पवित्रद्वेषी, भीरुम् ભીરુ डरनेवाला, भीषयितारम् બીવડાવનાર डरानेवाला, विकृत- અને વિકૃત विकृत, विहाराहारशीलम् વિહારઆહારના અભ્યાસી પુરુષને विहारआहारसेवीको, पैशाचम् પૈશાચસત્ત્વ पैशाचसत्त्व, विद्यात् જાણવો जाने ॥ (३) ॥

38-(3) One who is a great eater, uxorious, fond of keeping company of women in secret, unclean, a hater of cleanliness, a coward, a bully, given to abnormal recreations and diet is to be known as the Pishacha type.

सार्पसत्त्वस्य लक्षणम्—

**क्रुद्धशूरमक्रुद्धभीरुं तीक्ष्णमायासबहुलं संत्रस्तगोचरमाहारविहारपरं सार्पं विद्यात् ॥ (४) ॥**

क्रुद्ध- ગુસ્સે થાય ત્યારે क्रुद्धावस्थामें, शूरम् શૂરવીર शूरवीर, अक्रुद्धभीरुम् ગુસ્સે ન થાય ત્યારે ડરપોક अक्रुद्ध अवस्थामें डरपोक, तीक्ष्णम् તીક્ષ્ણ तेज मिजाजवाला, आयासबहुलम् બહુ પરિશ્રમ કરનાર परिश्रमप्रिय, संत्रस्तगोचरम् બીતાં બીતાં વિષય સેવન કરનાર डरते हुए

३८-(१) औपधिकम्—औदरिकम् (ध. द)

३८-(३) महाशन—महालस (क ध च झ ङ त द. ध.)
,, अशुचि शुचिद्वेषिणं—अशुचि शुद्धिद्वेषिणम् (ख.)
,, विकृतविहाराहारशील—विहारशील (च)
३८-(४). अक्रुद्ध—अक्रूर (त.)
,, संत्रस्तगोचरम्—मन्त्रस्तगोचरम् (च. ङ. द. ध)

विषयसेवी, आहारविहारपरम् અને આહારવિહારમાં મગ્ન રહેનાર પુરુષને और आहारविहारमें आसक्त पुरुषको, सार्पम् સાર્પસત્ત્વ सार्पसत्त्व, विद्यात् જાણવો जाने ॥ (४) ॥

38-(4). One who is brave when excited, touchy, of an indolent disposition, who arouses fear in the beholder and is devoted to food and the pleasures of recreation is to be known as representing the Sarpa (serpent) type.

प्रैतसत्त्वस्य लक्षणम्—

**आहारकाममतिदुःखशीलाचारोपचारमसूयकमसंविभागिनमतिलोलुपमकर्मशीलं प्रैतं विद्यात् (५)**

**आहारकामम्** આહારની કામનાવાળા आहारकामी, **अतिदुःखशील-आचार-उपचारम्** અતિદુઃખદાયક છે શીલ આચાર અને ઉપચાર જેનાં એવા जिसके शील आचार तथा उपचार अति दुःखद हों ऐसे, **असूयकम्** અસૂયક दोषदर्शी, **असंविभागिनम्** સમાન વિભાગ ન કરનાર समान विभाग न करनेवाला, **अतिलोलुपम्** અતિશય લોલુપતાવાળા अतिलोलुप, **अकर्मशीलम्** અને અકર્મશીલ પુરુષને आलसी पुरुषको, **प्रैतम्** પ્રૈતસત્ત્વ प्रैतसत्व, **विद्यात्** જાણવો जाने ॥ (५) ॥

38-(5) One who is fond of food, whose character, conduct and pastimes are of a very painful description, who is envious, who is without discrimination, who is very covetous and who is disinclined to work should be known as representing the Preta (ghost) type

शाकुनसत्त्वस्य लक्षणम्—

**अनुषक्तकाममजस्रमाहारविहारपरमनवस्थितममर्षणमसंचयं शाकुनं विद्यात् ॥ (६) ॥**

**अनुषक्तकामम्** સતતકામી निरन्तर कामनायुक्त, **अजस्रम्** નિરંતર निरन्तर, **आहारविहारपरम्** આહારવિહારમાં મગ્ન आहारविहारपरायण, **अनवस्थितम्** અસ્થિર મતિવાળા अस्थिर मतिवाले, **अमर्षणम्** અસહિષ્ણુ असहिष्णु, **असंचयम्** અને સંચય ન કરનાર પુરુષને और असग्रही पुरुषको, **शाकुनम्** શાકુનસત્ત્વ शाकुनसत्त्व, **विद्यात्** જાણવો जाने ॥ (६) ॥

38-(6) One who is of strong attachments, who is constantly devoted to the delights of eating and recreation, is fickle, intolerant, and unacquisitive is to be known as representing the *Sakuna* (bird) type.

एषा षड्विधाना राजसत्वम्—

**इत्येवं खलु राजसस्य सत्त्वस्य षड्विधं भेदांशं विद्यात्, रोषांशत्वात् ॥ ३८ ॥**

इति एवम् આ પ્રમાણે इस प्रकार, **रोषांशत्वात्** રોષભાગથી યુક્ત હોવાને લીધે रोषभागसे युक्त होनेके कारण, **राजसस्य** રાજસ राजस, **सत्त्वस्य** खलु મનના सत्त्वके, **षड्विधम्** ૭ પ્રકારના छ प्रकारके, **भेदांशम्** ભેદ भेद, **विद्यात्** જાણવા जाने ॥ ३८ ॥

38 Thus the Rajasa type is to be known as comprising six varieties, they are all tinged with passion.

पाशवसत्त्वस्य लक्षणम्—

**निराकरिष्णुममेधसं जुगुप्सिताचाराहारं मैथुनपरं स्वप्नशीलं पाशवं विद्यात् ॥ (१) ॥**

**निराकरिष्णुम्** અનાદર કરનાર अनादर करनेवाले, **अमेधसम्** મેધારહિત मेधारहित, **जुगुप्सित**- નિન્દિત निन्दित, **आचाराहारम्** આચાર તથા આહારવાળા आचार तथा आहारवाले, **मैथुनपरम्** મૈથુનપરાયણ मैथुनपरायण **स्वप्नशीलम्** અને નિદ્રાશીલ પુરુષને और

३८-(५) अकर्मशील–कर्मशील (द)

३८-(६) अमर्षणमसचय–अमर्षिणमसचय (ध.)

३८ इत्येव खलु षड्विधं भेदाश–इत्येव...षड्विध भेद विद्यात् (द.)

३९-(१) निराकरिष्णुम्–निरलङ्करिष्णुम् (ध.)

„ अमेधस–अधमवेश (ध. ळ. द)

निद्रापरायण पुरुषको, पाशवम् પાશવસત્ત્વ पाशवसत्त्व, विद्यात् જાણવો जाने ॥ (१) ॥

39-(1) One who is of a forbidding disposition, unintellectual, disgusting in his behaviour and dietetic habits, abandoned to sex pleasures, and given to somnolent habits is to be known as belonging to the animal type.

मात्स्यसत्त्वस्य लक्षणम्—

**भीरुमबुधमाहारलुब्धमनवस्थितमनुषक्तकामक्रोधं सरणशीलं तोयकामं मात्स्यं विद्यात् ॥ (२) ॥**

भीरुम् ભીરુ डरपोक, अबुधम् અબુધ अज्ञान, आहारलुब्धम् આહારલોભી आहारलोभी, अनवस्थितम् અસ્થિર મતિવાળા अस्थिर मतिवाले, अनुषक्त- सतत निरतर, कामक्रोधम् કામ તથા ક્રોધવાળા काम तथा क्रोधसे युक्त, सरणशीलम् ગમનશીલ गमनशील, तोयकामम् અને જલની કામનાવાળા પુરુષને और जलप्रिय पुरुषको, मात्स्यम् માત્સ્યસત્ત્વ मात्स्यसत्त्व, विद्यात् જાણવો जाने ॥ (२) ॥

39-(2). One who is pusilanimous, unintelligent, greedy for food, unstable, of persistent likes and dislikes, of itinerant habits and fond of water is to be known as belonging to the fish type.

वानस्पत्यसत्त्वस्य लक्षणम्—

**अलसं केवलमभिनिविष्टमाहारे सर्वबुद्ध्यङ्गहीनं वानस्पत्यं विद्यात् ॥ (३) ॥**

अलसम् આળસુ आलसी, केवलम् કેવળ केवल, आहारे આહારમાં आहारमें, अभिनिविष्टम् આસક્ત आसक्त, सर्वबुद्ध्यङ्गहीनम् અને સર્વ જ્ઞાનરહિત પુરુષને और सब प्रकारकी बुद्धिसे रहित पुरुषको, वानस्पत्यम् વાનસ્પત્ય સત્ત્વ वानस्पत्यसत्त्व, विद्यात् જાણવો जाने ॥ (३) ॥

39-(3). One who is lazy, exclusively devoted to the business of eating and devoid of mental faculties is to be known as belonging to the vegetable type.

एषा त्रिविधाना तामसत्वम्—

**इत्येवं तामसस्य सत्त्वस्य त्रिविधं भेदांशं विद्यान्मोहांशत्वात् ॥ ३९ ॥**

इति एवम् આ પ્રમાણે इस प्रकार, मोहांशत्वात् મોહભાગથી યુક્ત હોવાને લીધે मोहभागसे युक्त होनेके कारण, तामसस्य તામસ तामस, सत्त्वस्य મનના मनके, त्रिविधम् ત્રણ પ્રકારના तीन प्रकारके, भेदांशम् ભેદ भेद, विद्यात् જાણવા जाने ॥ ३९ ॥

39. Thus the Tamasa type should be known to comprise three varieties; they represent the inert aspect of the mind.

सत्त्वभेदोपसंहारः—

**इत्यपरिसंख्येयभेदानां त्रयाणामपि सत्त्वानां भेदैकदेशो व्याख्यातः; शुद्धस्य सत्त्वस्य सप्तविधो ब्रह्मर्षिशक्रयमवरुणकुबेरगन्धर्वसत्त्वानुकारेण, राजसस्य षड्विधो दैत्यपिशाचराक्षससर्पप्रेतशकुनिसत्त्वानुकारेण, तामसस्य त्रिविधः पशुमत्स्यवनस्पतिसत्त्वानुकारेण, कथं च यथासत्त्वमुपचारः स्यादिति ॥ ४० ॥**

इति આમ इस प्रकार, कथम् च કેવી રીતે कैसे, यथा- सत्त्वम् મન પ્રમાણે मनके अनुसार, उपचारः ઉપચાર उपचार, स्यात् થાય हो, इति એ હેતુથી इस हेतुसे, अपरिसंख्येय- અગણિત असंख्य, भेदानाम् ભેદવાળા भेदवाले, त्रयाणाम् अपि ત્રણેય तीनों ही, सत्त्वानाम् મનોના सत्त्वोंके, भेदैकदेश ભેદના એક ભાગનું भेदोंके एक भागका, ब्रह्म- જેમકે બ્રહ્મા जैसेकि ब्रह्मा, ऋषि- ઋષિ ऋषि, शक्र- ઇન્દ્ર इन्द्र, यम- યમ यम, वरुण- વરુણ वरुण, कुबेर- કુબેર कुबेर, गन्धर्व-

३९-(३). सर्वबुद्ध्यङ्गहीनम्—सर्वबुद्ध्या हीनम् (क. च)

तथा गन्धर्वना तथा गन्धर्वके, सत्त्वानुकारेण मनने अनुसरी मनके अनुसार, शुद्धस्य शुद्ध शुद्ध, सत्त्वस्य मनना सत्त्वके, सप्तविधः सात प्रकारना भेदनु सात प्रकारके भेदका, दैत्य- दैत्य दैत्य, पिशाच- पिशाच पिशाच, राक्षस- राक्षस राक्षस, सर्प- सर्प सर्प, प्रेत- प्रेत प्रेत, शकुनि- तथा शकुनिना तथा शकुनिके, सत्त्वानुकारेण मनने अनुसरी मनके अनुसार, राजसस्य राजस मनना राजस मनके, षड्विध छ प्रकारना भेदनु छ. प्रकारके भेदका, पशु- अने पशु और पशु, मत्स्य- मत्स्य मत्स्य, वनस्पति- तथा वनस्पतिना तथा वनस्पतिके, सत्त्वानुकारेण मनने अनुसरी मनके अनुसार, तामसस्य तामस मनना तामस मनके, त्रिविध' त्रण प्रकारना भेदनुं तीन प्रकारके भेदका, व्याख्यातः व्याख्यान कर्युं छे व्याख्यान किया है ॥ ४० ॥

40. In this manner we have described a few of the innumerable varieties to be met with in the three types of mind with a view to indicating the general nature of the treatment to be given in each type Thus we have classified the Sattvic type under seven heads according as they correspond to the psychic types of Brahma, Rishi, Indra, Yama, Varuna, Kubera and Gandharva; the Rajasic type under six heads according as they correspond to the psychic types of Daitya, Pisacha, Rakshasa, Sarpa, Preta and Sakuni, and finally the Tamasic type under three heads according as they correspond to the psychic types of animal, fish and vegetable life

**केवलश्चायमुद्देशो यथोद्देशमभिनिर्दिष्टो भवति गर्भावक्रान्तिसंप्रयुक्तः; तस्य चार्थस्य विज्ञाने सामर्थ्यं गर्भकराणां च भावानामनुसमाधिः, विघातश्च विघातकराणां भावानामिति ॥ ४१ ॥**

गर्भावक्रान्ति- गर्भावक्रान्तिमां गर्भावक्रान्तिमें, संप्रयुक्तः उपयोगी उपयोगी, अयम् आ यह, केवलः आखो समग्र, उद्देशः च विषय विषय, यथोद्देशम् उद्देश क्रमानुसार उद्देशक्रमानुसार, अभिनिर्दिष्ट बतावेलो बतला दिया, भवति छे है, तस्य ते उस, अर्थस्य विषयनुं विषयके, विज्ञाने ज्ञान थतां ज्ञानके होनेका, सामर्थ्यम् आ प्रयोजन छे के यह प्रयोजन है कि, गर्भकराणाम् गर्भकर गर्भकर, भावानाम् च भावोनु भावोंका, अनुसमाधि' अनुष्ठान अनुष्ठान, विघातकराणाम् तथा विनाशक तथा विनाशक, भावानाम् भावोनो भावोंका, विघात च इति परित्याग थई शके परित्याग हो सके ॥ ४१ ॥

41. Thus the intention with which this topic of the formation of the fetus was begun has been achieved in full and agreeably to the purpose set out By understanding what has been laid down here, one is enabled to promote those influences which are conducive to the rise and growth of conception and to inhibit those which are inhibitive of conception and its subsequent development.

अध्यायोक्तविषयाः —

**तत्र श्लोकाः—**

**निमित्तमात्मा प्रकृतिर्वृद्धिः कुक्षौ क्रमेण च ।**
**वृद्धिहेतुश्च गर्भस्य पञ्चार्थाः शुभसंज्ञिताः ॥४२॥**

तत्र ते विषयमां उस विषयमें, श्लोका. उपसंहारना श्लोको छे के उपसंहारके श्लोक है कि, गर्भस्य गर्भनु गर्भका, निमित्तम् निमित्त निमित्त, आत्मा गर्भरूप आत्मा गर्भरूप आत्मा, प्रकृति. गर्भनी प्रकृति गर्भकी प्रकृति, कुक्षौ उदरमां कुक्षिमें, क्रमेण च क्रमशः क्रमसे, वृद्धि. गर्भनी वृद्धि गर्भका बढना, वृद्धिहेतुः प

४१ गर्भावक्रान्तिसम्प्रयुक्त , तस्य चार्थस्य–गर्भावक्रान्तिसम्प्रयुक्तस्यार्थस्य (च. ग. च)

४२ पञ्चार्था –पञ्च स्यु' (प)

અને ગર્ભની વૃદ્ધિનો હેતુ और गर्भके बढ़नेका कारण, पञ्च अर्थाः એ પાંચ ભાવ ये पाच अर्थ, शुभसंज्ञिताः શુભ કહેવાય છે शुभ कहे गये है ॥ ४२ ॥

Here are the recapitulatory verses—

42 The instrumental cause, the embryonic self, the material cause, the gradual development in the womb and the factors promoting the growth; these five in relation to the fetus are declared to be the auspicious topics in embryology

**अजन्मनि च यो हेतुर्विनाशे विकृतावपि ।**
**इमांस्त्रीनशुभान् भावानाहुर्गर्भविघातकान् ॥४३॥**

अजन्मनि ગર્ભની અનુત્પત્તિમાં गर्भके अजन्ममें, विनाशे ગર્ભના વિનાશમાં गर्भके विनाशमें विकृतौ अपि च અને ગર્ભની વિકૃતિમાં और गर्भकी विकृतिमें, यो हेतुः જે હેતુ છે जो हेतु है, इमान् त्रीन् એ ત્રણ इन तीन, गर्भविघातकान् ગર્ભનાશક गर्भनाशक, भावान् ભાવોને भावोंको, अशुभान् અશુભ अशुभ, आहुः કહે છે कहते है ॥ ४३ ॥

43. The factors which tend to inhibit conception or to destroy it once it has taken place or to render it defective—these three factors inimical to the formation and growth of the fetus are said to be the inauspicious topics

**शुभाशुभसमाख्यातानष्टौ भावानिमान् भिषक् ।**
**सर्वथा वेद यः सर्वान् स राज्ञः कर्तुमर्हति ॥४४॥**

यः भिषक् જે વૈદ્ય जो वैद्य, शुभाशुभ- શુભ અને અશુભ शुभ और अशुभ, समाख्यातान् કહેવાયેલા कहे हुए, इमान् આ इन, सर्वान् બધાય सब, अष्टौ भावान् આઠ ભાવોને आठ भावोंको, सर्वथा સર્વથા सब प्रकारसे, वेद જાણે છે जानता है, सः તે वह, राज्ञः રાજાની राजाकी, कर्तुम् ચિકિત્સા કરવાને चिकित्सा करनेके लिए, अर्हति યોગ્ય છે योग्य है ॥ ४४ ॥

44 The physician who is fully conversant with all these eight topics divided into the auspicious and the unauspicious is entitled to wait on royalty.

**अवाप्त्युपायान् गर्भस्य स एवं ज्ञातुमर्हति ।**
**ये च गर्भविघातोक्ता भावास्तांश्चाप्युदारधीः ॥४५॥**

एवम् આ પ્રમાણે इस प्रकार, गर्भस्य ગર્ભની गर्भकी, अवाप्ति- પ્રાપ્તિના प्राप्तिके, उपायान् ઉપાયોને उपायोंको, गर्भविघातोक्ताः તથા ગર્ભનાશકપણાથી કહેલા तथा गर्भविघातकारकरूपमें कहे हुए, ये च જે जो, भावाः ભાવો भाव, तान् च अपि તેઓને પણ उनको भी, ज्ञातुम् જાણવા માટે जाननेके लिए, सः उदारधीः તે ઉત્તમ બુદ્ધિવાળો वह उत्तम बुद्धिवाला, अर्हति યોગ્ય છે योग्य है ॥ ४५ ॥

45 The physician of large understanding requires to know both these sets of factors, viz, those which are helpful in the formation and development of the fetus and those which are inhibitive of such formation and growth

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने महतीगर्भावक्रान्तिशारीरं नाम चतुर्थोऽध्यायः ॥ ४ ॥**

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, शारीरस्थाने શારીરસ્થાન વિષે शारीरस्थानमें, 'महतीगर्भावक्रान्तिशारीरम्' 'મહતીગર્ભાવક્રાન્તિશારીર' 'महतीगर्भावक्रान्तिशारीर', नाम નામનો नामका, चतुर्थः ચોથો चौथा, अध्यायः અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ ४ ॥

४३. अजन्मनि—यज्जन्मनि (झ)

4 Thus in the section on Human Embodiment in the treatise compiled by Agnivesa and revised by Caraka, the fourth chapter entitled "The major chapter on the formation of the fetus" is completed.

---

## पञ्चमोऽध्यायः ।
## પાંચમો અધ્યાય अध्याय पांचवाँ
## Chapter V

पुरुषविचयशारीरोपक्रमः—

**अथातः पुरुषविचयं शारीरं व्याख्यास्यामः ॥१॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

अथ अतः હવે અહીંથી अब आगे, 'पुरुषविचयम् शारीरम्' 'પુરુષવિચયશારીર' નામના અધ્યાયનુ 'पुरुषविचयशारीर' नामके अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, आत्रेय. આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલુ છે कहा है ॥ २ ॥

1 We shall now expound "The analysis of man" in the section on the Human Embodiment"

2. Thus declared the worshipful Atreya.

पुरुषस्य लोकसमितत्वम्—

**'पुरुषोऽयं लोकसंमितः' इत्युवाच भगवान् पुनर्वसुरात्रेयः। यावन्तो हि लोके (मूर्तिमन्तो) भावविशेषास्तावन्तः पुरुषे, यावन्तः पुरुषे तावन्तो लोके;**

अयम् पुरुषः આ પુરુષ यह पुरुष, लोक- संमित. લોક (જગત) તુલ્ય છે लोकके सदश है, इति એમ ऐसा, भगवान् ભગવાન भगवान, आत्रेयः पुनर्वसुः આત્રેય પુનર્વસુએ आत्रेय पुनर्वसुने, उवाच કહ્યુ कहा, हि કારણકે क्योंकि, यावन्तः જેટલા जितने, (मूर्तिमन्तः મૂર્તિમાન मूर्तिमान), भावविशेषा. ભિન્ન ભિન્ન ભાવો भावविशेष, लोके આ લોકમાં છે इस लोकमें है, तावन्तः તેટલા उतने, पुरुषे પુરુષમાં છે पुरुषमें है, यावन्त અને જેટલા और जितने, पुरुषे પુરુષમાં છે पुरुषमें है, तावन्त. તેટલા उतने, लोके આ લોકમાં છે इस लोकमें है;

3-(1) Man is the epitome of the universe (microcosm) There is in man as much diversity as in the world outside, and there is in the world as much diversity as in man

**इत्येवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—नैतावता वाक्येनोक्तं वाक्यार्थमवगाहामहे, भगवता बुद्ध्या भूयस्तरमतोऽनुव्याख्यायमानं शुश्रूषामह इति ॥ ३ ॥**

इति આમ इस प्रकार, एवंवादिनम् એ પ્રમાણે બોલતા ऐसा कहनेवाले, भगवन्तम् ભગવાન भगवान, आत्रेयम् આત્રેયને आत्रेयको, अग्निवेशः અગ્નિવેશે अग्निवेशने, उवाच કહ્યુ कहा, एतावता આટલા इतने, वाक्येन વાક્યથી वचनसे, उक्तम् કહેલા कहे गये, वाक्यार्थम् વાક્યાર્થને वाक्यार्थको, न अवगाहामहे અમે સમજી શકતા નથી हम नही समझ सकते, अत એથી इस लिए, भगवता આપથી आपसे, बुद्ध्या સૂક્ષ્મ બુદ્ધિવડે सूक्ष्म-बुद्धिसे, भूयस्तरम् વધારે વિસ્તારવડે अधिक विस्तारसे, अनुव्याख्यायमानम् તેનું વ્યાખ્યાન થતુ इसके व्याख्यानको, शुश्रूषामहे સાંભળવાની અમે ઇચ્છા રાખીએ છીએ सुनना चाहते है ॥ ३ ॥

3 To the worshipful Atreya propounding this doctrine, Agnivesa made the request 'We fail to understand the full import of this cryptic utterance

---

३. भूयस्तरमतो–भूयस्तरतमतो (द)
,, भूयस्तरमतोऽनु°–भूयस्तरमनु° (च)

Therefore we desire to hear a further clarification of this by your reverence.'

उक्तस्यार्थस्य विस्तरेण व्याख्यानम्—

**तमुवाच भगवानात्रेयः—अपरिसंख्येया लोकावयवविशेषाः, पुरुषावयवविशेषा अप्यपरिसंख्येयाः; तेषां यथास्थूलं कतिचिद्भावान् सामान्यमभिप्रेत्योदाहरिष्यामः, तानेकमना निबोध सम्यगुपवर्ण्यमानानग्निवेश! ।**

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, **तम् उवाच** તેને કહ્યું उसे कहा, लोकावयव-विशेषा. લોકના અવયવના ભેદ लोकके अवयवके भेद, अपरिसंख्येया· અગણિત છે असख्य है, पुरुष-अवयव-विशेषाः પુરુષના અવયવના ભેદ पुरुषके अवयवके भेद, अपि પણ भी, अपरिसंख्येया· અગણિત છે असंख्य है, सामान्यम् સમાનતાને तुल्यताको, अभिप्रेत्य અનુલક્ષીને दृष्टिसे, तेषाम् તેમાંના उनमेंसे, कतिचित् કેટલાક कुछ, भावान् ભાવોને भावोंको, यथास्थूलम् સ્થૂલતા પ્રમાણે स्थूलतासे, उदाहरिष्याम· ઉદાહરણ તરીકે આપીશું उदाहरणके तौर पर कहेंगे, सम्यक् સારી રીતે अच्छी तरहसे, उपवर्ण्यमानान् વર્ણવાતા कहे जानेवाले, तान् તેઓને उन भावोंको, अग्निवेश ! હે અગ્નિવેશ ! हे अग्निवेश !, एकमना· એકચિત્ત બની एकचित्त हो कर, निबोध સાંભળો सुनो।

4-(1). To him replied the worshipful Atreya, 'The different members composing the universe are too many to count and so are the different members composing man; of them, therefore we shall instance a few outstanding examples with a view to showing their mutual unity. O, Agnivesa! follow attentively the examples which shall be cited with exactitude

**षड्धातवः समुदिताः 'पुरुष' इति शब्दं लभन्ते, तद्यथा—पृथिव्यापस्तेजो वायुराकाशं ब्रह्म चाव्यक्तमिति, एत एव च षड्धातवः समुदिताः 'पुरुष' इति शब्दं लभन्ते ॥ ४॥**

षड्धातव· ૭ ધાતુઓ छ धातुएं, समुदिता· ભેળા થઈ सम्मिलित हो कर, पुरुष· इति 'પુરુષ' એવુ 'पुरुष' ऐसी, शब्दम् નામ संज्ञाको, लभन्ते મેળવે છે प्राप्त करते हैं, तत् यथा જેમકે जैसे, पृथिवी પૃથિવી पृथिवी, आपः જલ जल, तेज તેજ तेज, वायुः વાયુ वायु, आकाशम् આકાશ आकाश, अव्यक्तम् ब्रह्म च इति અને અવ્યક્ત બ્રહ્મ और अव्यक्त ब्रह्म, एते एव આ જ ये ही, षड्धातवः च ૭ ધાતુઓ छ धातु, समुदिताः ભેળા મળીને मिलकर, पुरुषः इति 'પુરુષ' એવુ 'पुरुष' ऐसी, शब्दम् નામ संज्ञाको, लभन्ते મેળવે છે प्राप्त करते हैं ॥ ४ ॥

4. The assemblage of the six elements that go to make man receive the appellation of man, these elements are the earth, water, light, air, ether and the immaterial self These six elements considered together receive the name of 'man'

**तस्य पुरुषस्य पृथिवी मूर्तिः, आपः क्लेदः, तेजोऽभिसन्तापः, वायुः प्राणः, वियत् सुषिराणि, ब्रह्म अन्तरात्मा। यथा खलु ब्राह्मी विभूतिर्लोके तथा पुरुषेऽप्यान्तरात्मिकी विभूतिः, ब्रह्मणो विभूतिर्लोके प्रजापतिरन्तरात्मनो विभूतिः पुरुषे सत्त्वं, यस्त्विन्द्रो लोके स पुरुषेऽहङ्कारः, आदित्यस्त्वादानं, रुद्रो रोषः, सोमः प्रसादः, वसवः**

४ अपरिसख्येया लोकावयवविशेषा , पुरुषावयवविशेषा अप्यपरिसख्येयाः—अपरिसख्येया लोकपुरुषावयवविशेषा ख )

,, तेषा यथास्थूल कतिचिद्भावान्—यथा यथा प्रधान च तेषा यथास्थूलं पुरुषावयवविशेषा कतिचित् तेषाम् (द )

,, तेषा यथास्थूल कतिचिद्भावान्—यथा यथा प्रधान यथास्थूल कतिचित् (प.)

,, कतिचिद्भावान्—भावान् (क घ. च.)

४. 'पुरुष'—'लोक' (क ब च ड)

५. वियत् सुषिराणि—वियच्छिद्राणि (क. च छ. झ. ड. त. द.)

,, आदित्यस्त्वादान—आदित्यास्त्वादान (क. च.)

सुखम्, अश्विनौ कान्तिः, मरुदुत्साहः, विश्वेदेवाः सर्वेन्द्रियाणि सर्वेन्द्रियार्थाश्च, तमो मोहः, ज्योतिर्ज्ञानं, यथा लोकस्य सर्गादिस्तथा पुरुषस्य गर्भाधानं, यथा कृतयुगमेवं बाल्यं, यथा त्रेता तथा यौवनं, यथा द्वापरस्तथा स्थाविर्यं, यथा कलिरेवमातुर्यं, यथा युगान्तस्तथा मरणमिति। एवमेतेनानुमानेनानुक्तानामपि लोकपुरुषयोरवयवविशेषाणामग्निवेश! सामान्यं विद्यादिति ॥५॥

तस्य पुरुषस्य તે પુરુષની उस पुरुषकी, मूर्ति. કઠિનતા कठिनता, पृथिवी પૃથિવી છે पृथिवी है, क्लेद ક્લિન્નતા क्लेद, आप જલ છે जल है, अभिसन्तापः શરીરની ગરમી शारीरिक उष्णता, तेजः અગ્નિ છે अग्नि है, प्राण પ્રાણ प्राण, वायु વાયુ છે वायु है, सुषिराणि છિદ્રો छिद्र, वियत् આકાશ છે आकाश है, अन्तरात्मा અને અન્તરાત્મા और अन्तरात्मा, ब्रह्म બ્રહ્મ છે ब्रह्म है, यथा खलु જેવી રીતે ખરેખર जैसे ही, लोके લોકમાં लोकमें, ब्राह्मी બ્રહ્મની ब्रह्मकी, विभूतिः વિભૂતિ છે विभूति है, तथा તેવી રીતે वैसे ही, पुरुषे अपि પુરુષમાં પણ पुरुषमें भी, आन्तरात्मिकी અન્તરાત્માની अन्तरात्माकी, विभूति વિભૂતિ છે विभूति है, लोके લોકમાં लोकमें, प्रजापति दक्ष પ્રજાપતિ दक्ष प्रजापति, ब्रह्मणः બ્રહ્મની ब्रह्मकी, विभूति. વિભૂતિ છે विभूति है, पुरुषे પુરુષમાં पुरुषमें, सत्वम् મન मन, अन्तरात्मनः અન્તરાત્માની अन्तरात्माकी, विभूति વિભૂતિ છે विभूति है, य. तु જે और जो, लोके લોકમાં लोकमें, इन्द्र ઇન્દ્ર છે इन्द्र है, स. पुरुषे તે પુરુષમાં वह पुरुषमें, अहङ्कार અહંકાર છે अहंकार है, आदित्य. तु જે લોકમાં સૂર્ય છે जो लोकमें सूर्य है, आदानम् તે પુરુષમાં રસગ્રહણ શક્તિ છે वह पुरुषमें रसग्रहण शक्ति है, रुद्रः જે લોકમાં રુદ્ર છે जो लोकमें रुद्र है, रोष તે પુરુષમાં રોષ છે वह पुरुषमें रोष है, सोम જે લોકમાં ચન્દ્ર છે जो लोकमें चन्द्र है, प्रसाद. તે પુરુષમાં પ્રસન્નતા છે वह पुरुषमें प्रसन्नता है, वसव· જે લોકમાં વસુઓ છે जो लोकमें वसु है, सुखम् તે પુરુષમાં સુખ છે वह पुरुषमें सुख है, अश्विनौ જે લોકમાં અશ્વિનીકુમારો છે जो लोकमें अश्विनीकुमारों है, कान्तिः તે પુરુષમાં કાન્તિ છે वह पुरुषमें कान्ति है, मरुत् જે લોકમાં મરુદ્ગણ છે जो लोकमें मरुद्गण है, उत्साह તે પુરુષમાં ઉત્સાહ છે वह पुरुषमें उत्साह है, विश्वेदेवाः જે લોકમાં વિશ્વદેવ છે जो लोकमें विश्वदेव है, सर्वेन्द्रियाणि તે પુરુષમાં સર્વ ઇન્દ્રિયો वे पुरुषमें सब इन्द्रियाँ, सर्वेन्द्रियार्थाश्च તથા સર્વ ઇન્દ્રિયોના વિષયો છે और सब इन्द्रियोंके विषयों हैं, तम જે લોકમાં અંધકાર છે जो लोकमें अन्धकार है, मोह તે પુરુષમાં મોહ છે वह पुरुषमें मोह है, ज्योति. જે લોકમાં પ્રકાશ છે जो लोकमें प्रकाश है, ज्ञानम् તે પુરુષમાં જ્ઞાન છે वह पुरुषमें ज्ञान है, यथा જેમ जैसे, लोकस्य લોકની लोककी, सर्गादिः સૃષ્ટિનો પ્રારંભ કાળ છે सृष्टिका प्रारंभ काल है, तथा તેમ वैसे, पुरुषस्य પુરુષનું पुरुषका, गर्भाधानम् ગર્ભાધાન છે गर्भाधान है, यथा જેમ जैसा, कृतयुगम् લોકમાં સત્યયુગ છે लोकमें सत्य युग है, एवम् તેમ वैसे, बाल्यम् પુરુષમાં બાલપણુ છે पुरुषमें बाल्यावस्था है, यथा જેમ जैसे, त्रेता લોકમાં ત્રેતાયુગ છે लोकमें त्रेतायुग है, तथा તેમ वैसे, यौवनम् પુરુષમાં યૌવન છે पुरुषमें यौवन है, यथा જેમ जैसे, द्वापर· લોકમાં દ્વાપરયુગ છે लोकमें द्वापरयुग है, तथा તેમ वैसे, स्थाविर्यम् પુરુષમાં વાર્ધક્ય છે पुरुषमें बुढ़ापा है, यथा જેમ जैसे, कलिः લોકમાં કલિયુગ છે लोकमें कलियुग है, एवम् તેમ वैसे, आतुर्यम् પુરુષમાં આતુરાવસ્થા છે पुरुषमें रुग्णावस्था है, यथा અને જેમ और जैसे, युगान्तः લોકમાં પ્રલય છે लोकमें प्रलय है, तथा તેમ वैसे, मरणम् इति પુરુષમાં મરણ છે पुरुषमें मरण है, एवम् આ પ્રમાણે इस प्रकार, अग्निवेश! હે અગ્નિવેશ! हे अग्निवेश!, एतेन આ इस, अनुमानेन અનુમાનથી अनुमानसे, अनुक्तानाम् ન કહ્યા હોય એવા अनुक्त, अपि પણ भी, लोकपुरुषयो. લોક અને પુરુષના लोक और पुरुषके, अवयवविशेषाणाम् ભિન્ન ભિન્ન અવયવોની भिन्न भिन्न अवयवोंकी, सामान्यम् સમાનતાને समाननाको, विद्यात् इति જાણવી जान लेना चाहिए ॥५॥

5 The earth is represented in man by hardness, water by moisture, fire by heat, air by the vital breath, the ether by the interstices and the self by the indwelling spirit. Similar to the office

५ स्थाविर्यं–स्थाविरम् (च)

,, एवमेतेनानुमानेन–एवमनुमानेन (घ)

of God in the world is the might of the individual soul in man God's greatness in the universe is seen as creator; in the body the soul's greatness is seen as the mind What Indra is in the universe the ego is in man, the Sun corresponds to the power of seizing, Rudra to anger, the Moon to beneficence, the Vasus to pleasures, the two Aswins to lustre, the Maruts (winds) to enthusiasm, the Vishvedeva (universal Gods) to the sense-organs and the sense objects, darkness to delusion, light to knowledge, just as there is the act of creation in the universe, so also in man there is fertilization or the act of impregnation Corresponding to Kritayuga is the period of childhood; corresponding to Treta is youth, corresponding to Dwapara is old age, corresponding to Kali is infirmity and corresponding to the end of a word-cycle is death in man. In this manner by pursuing this analogy, O, Agnivesa ! you are to understand the unity of all those different members in the world and in man which we have left unmentioned here'

लोकपुरुषयोः सामान्योपदेशस्य प्रयोजनम्—

**एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—एवमेतत् सर्वमनपवादं यथोक्तं भगवता लोकपुरुषयोः सामान्यम्। किन्त्वस्य सामान्योपदेशस्य प्रयोजनमिति ॥ ६ ॥**

एवंवादिनम् એમ કહેતા ऐसा कहनेवाले, भगवन्तम् ભગવાન भगवान, आत्रेयम् આત્રેયને आत्रेयको, अग्निवेशः અગ્નિવેશે अग्निवेशने, उवाच કહ્યું कहा, लोकपुरुषयोः લોક અને પુરુષની लोक और पुरुषकी, सामान्यम् સમાનતા समानता, यथा જે પ્રમાણે जैसे, भगवता આપે आपने, उक्तम् કહી છે कही है, एवम् તે પ્રમાણે वैसे ही, एतत् सर्वम् એ સઘળી यह सब, अनपवादम् અપવાદરહિત છે अपवादरहित है, अस्य પણ આ परन्तु इस, सामान्योपदेशस्य સમાનતાના ઉપદેશનું समानताके उपदेशका, किम् नु શું क्या ? प्रयोजनम् इति પ્રયોજન છે ? प्रयोजन है ? ॥ ६ ॥

6. To the worshipful Atreya, propounding this argument, Agnivesa said, 'All this that your reverence has observed concerning the unity of man and the universe is unexceptionable. But the question remains—what actually is the utility of this doctrine of unity in Ayurveda ?'

**भगवानुवाच—शृण्वग्निवेश! सर्वलोकमात्मन्यात्मानं च सर्वलोके सममनुपश्यतः सत्या बुद्धिः समुत्पद्यते। सर्वलोकं ह्यात्मनि पश्यतो भवत्यात्मैव सुखदुःखयोः कर्ता नान्य इति। कर्मात्मकत्वाच्च हेत्वादिभिर्युक्तः सर्वलोकोऽहमिति विदित्वा ज्ञानं पूर्वमुत्थाप्यतेऽपवर्गायेति। तत्र संयोगापेक्षी लोकशब्दः। षड्धातुसमुदायो हि सामान्यतः सर्वलोकः ॥ ७ ॥**

भगवान् ભગવાન આત્રેયે भगवान आत्रेयने, उवाच કહ્યું कहा, शृणु સાંભળો सुनो, अग्निवेश! હે અગ્નિવેશ! हे अग्निवेश!, सर्वलोकम् સઘળા લોકને अखिल जगतको, आत्मनि પોતામાં अपनेमें, आत्मानम् च અને પોતાને और अपनेको, सर्वलोके સઘળા લોકમાં सपूर्ण जगतमें, समम् સમાનતાથી एक रूपसे, अनुपश्यतः જોનારને देखनेवालेको, सत्या સત્ય सत्य, बुद्धिः બુદ્ધિ

१. किन्वस्य—किन्त्वस्य (त.)

७ भगवानुवाच-शृण्वग्निवेश!—भगवानुवाच-कथमग्निवेश (ख प)
,, सममनुपश्यत —समनुपश्यता (प.)
,, सत्या बुद्धि —तस्यात्मबुद्धि (थ फ)
,, बुद्धि समुत्पद्यते—बुद्धिरुत्पद्यन इति (प)
,, हेत्वादिभिर्युक्त —हेत्वादिभिरयुक्त. (द प)
,, ,, —देहादिभिरयुक्त (प)
,, उत्थाप्यते—उत्थास्यते (ख प)

वृद्धि, समुत्पद्यते ઉત્પન્ન થાય છે उत्पन्न होती है, सर्व-लोकम् हि સર્વ લોકને सब लोकको, आत्मनि પોતામાં अपनेमें, पश्यत જોનારને देखनेवालेको, आत्मा एव આત્માજ आत्मा ही, सुखदु खयो સુખદુ ખનો सुख-दु खका, कर्ता કર્તા कर्ता, भवति છે है, न अन्य. इति બીજો કોઈ નથી એવુ જ્ઞાન થાય છે दूसरा कोई नहीं है ऐसा ज्ञान होता है, कर्मात्मकत्वात् च અને કર્માધીન-પણાને લઈ और कर्माधीन होनेके कारण, हेत्वादिभि हेतु આદિથી हेतु आदिसे, युक्त યુકત युक्त, सर्वलोक સર્વ લોક सपूर्ण लोक, अहम् હું છું मै हू, इति विदित्वा એમ જાણીને ऐसा जान कर, अपवर्गाय મોક્ષને માટે मोक्षके लिए, ज्ञानम् જ્ઞાન ज्ञान, पूर्वम् પહેલાં पथम, उत्थाप्यते इति ઉત્પન્ન કરવામાં આવે છે जगाया जाता है, तत्र તેમાં उसमें, लोकशब्द 'પુરુષ' એ શબ્દ 'पुरुष' यह शब्द, संयोगापेक्षी સંયોગની અપેક્ષા રાખે છે सयोगकी अपेक्षा करनेवाला है, हि કારણકે क्योंकि, सामान्यत· સામાન્યપણે सामान्यत, षड्धातुसमुदाय છ ધાતુઓનો સમુદાય એ छ धातुओंका समुदाय यह, सर्वलोक સર્વલોક છે सपूर्ण लोक है ॥ ७ ॥

7 The worshipful Atreya replied, "Listen O, Agnivesa ! to one who contemplates the whole world as being in himself and himself in the whole world, with equanimity, there is born the true understanding In as much as he regards the world as being in himself, he realises that the self, and none else, is the agent of pleasure and pain, and in as much as he realises the whole world, being of the nature of activity and yoked to motivating factors etc , is as his own self, he awakens the primary knowledge leading to final emancipation. The word 'world' always implies aggregation for speaking in general, everything in the world is made up of the six elements.

**तस्य हेतुः, उत्पत्तिः, वृद्धिः, उपप्लवः, वियोगश्च। तत्र हेतुरुत्पत्तिकारणं, उत्पत्तिर्जन्म, वृद्धिराप्यायनम्, उपप्लवो दु खागमः, षड्धातुविभागो वियोगः स जीवापगमः स प्राणनिरोधः स भङ्गः स लोकस्वभावः। तस्य मूलं सर्वोपप्लवानां च प्रवृत्तिः, निवृत्तिरुपरमः। प्रवृत्तिर्दुःखं, निवृत्तिः सुखमिति यज्ज्ञानमुत्पद्यते तत् सत्यम्। तस्य हेतुः सर्वलोकसामान्यज्ञानम्। एतत्प्रयोजनं सामान्योपदेशस्येति ॥ ८ ॥**

तस्य हेतु તે પુરુષના હેતુ उस पुरुषके हेतु, उत्पत्ति. ઉત્પત્તિ उत्पत्ति, वृद्धि વૃદ્ધિ वृद्धि उपप्लव· ઉપપ્લવ उपप्लव, वियोग च અને વિયોગ છે और वियोग हैं, तत्र हेतु તેમાં હેતુ એટલે उसमें हेतुका अर्थ, उत्पत्तिकारणम् ઉત્પત્તિનુ કારણ છે उत्पत्तिका कारण है, उत्पत्ति जन्म ઉત્પત્તિનો અર્થ જન્મ છે उत्पत्तिका अर्थ जन्म है, वृद्धि आप्यायनम् વૃદ્ધિનો અર્થ વધ્યે જવુ છે वृद्धिका अर्थ आप्यायन है, उपप्लवः दु खागम ઉપપ્લવનો અર્થ દુ ખનુ આવવુ છે उपप्लव-का अर्थ दु खागम है, वियोग. અને વિયોગનો અર્થ और वियोगका अर्थ, षड्धातुविभाग છયે ધાતુઓનો વિભાગ છે छ धातुओंका अलग होना है, सः તે वह, जीवापगम જીવાપગમ છે जीवापगम है, स તે वह, प्राणनिरोधः પ્રાણનિરોધ (મૃત્યુ) છે प्राणनिरोव है. सः भङ्ग તે ભગ છે वह भङ्ग है, स लोकस्वभाव તે લોકસ્વભાવ છે वह लोकस्वभाव है, तस्य તે જીવાપગમ (મરણ) નુ उस जीवापगम (मरण) का, सर्वोपप्लवानाम् च તથા સર્વ દુ.ખોનુ और सब दु खोंका, मूलम् મૂળ मूल, प्रवृत्ति પ્રવૃત્તિ છે प्रवृत्ति है, उपरम જીવાપગમ તથા સર્વ દુ.ખોનો ઉપરામ એ जीवापगम और सब दु.खोंका उपराम यह, निवृत्ति. નિવૃત્તિ છે અર્થાત્ નિવૃત્તિનાં કાર્ય છે निवृत्ति है अर्थात् निवृत्तिके कार्य हे, प्रवृत्ति. પ્રવૃત્તિ प्रवृत्ति, दु खम् દુ ખરૂપ છે दु खरूप है, निवृत्ति અને નિવૃત્તિ और निवृत्ति, सुखम् સુખ છે सुख है, इति यत् એમ જે ऐसा जो, ज्ञानम् જ્ઞાન ज्ञान, उत्पद्यते ઉત્પન્ન થાય છે उत्पन्न होता है, तत् सत्यम् તે સત્યજ્ઞાન છે वह सत्य ज्ञान है, सर्वलोकसामान्यज्ञानम् સર્વ લોક તથા પુરુષનુ

८. एतत्प्रयोजन–तत् प्रयोजनम् (ष )

સામાન્ય જ્ઞાન (સર્વ લોક તથા પુરુષની સમાનતાનું જ્ઞાન) એ सब लोक और पुरुषका सामान्यज्ञान (सब लोक और पुरुषकी समानताका ज्ञान) यह, तस्य हेतुः તે સત્ય જ્ઞાનનુ કારણ છે उस सत्यज्ञानका हेतु है, सामान्योपदेशस्य સમાનતાના ઉપદેશનુ और समानताके उपदेशका, एतत् આ સમાનતાનુ જ્ઞાન यह समानताका ज्ञान, प्रयोजनम् इति પ્રયોજન છે प्रयोजन है ॥ ८ ॥

8. Now the world has causation, birth, growth, affliction and disruption In other words, causation is that which brings about, birth is germination, growth is increase, affliction is the influx of pain, and the dispersal of the six basic elements is disruption This last is called variously the departure of the spirit, the cessation of life, the dissolution and the way of all flesh The source of the world and of all affliction is action, while quietus comes from inaction True understanding is that which arises from the judgement that action is pain and inaction is happiness. The causation of this understanding is the knowledge of the unity of the whole world This indeed is the utility of this teaching of unity."

प्रवृत्तेर्मूलम्—

**अथाग्निवेश उवाच—किंमूला भगवन्! प्रवृत्तिः, निवृत्तौ च क उपाय इति ॥ ९ ॥**

अथ ત્યાર પછી उसके बाद, अग्निवेशः અગ્નિવેશ अग्निवेशने, उवाच બોલ્યા कहा, भगवन् હે ભગવન્! हे भगवन्!, प्रवृत्ति પ્રવૃત્તિનુ प्रवृत्ति, किंमूला મૂળ (કારણ) શુ છે? किस कारणसे होती है?, निवृत्तौ च અને નિવૃત્તિમાં और निवृत्तिमे, कः उपाय इति શો ઉપાય છે? क्या उपाय है? ॥ ९ ॥

9. Here Agnivesa said, "O, revered Sir! what are the springs of action and what is the means towards inaction?"

**भगवानुवाच—मोहेच्छाद्वेषकर्ममूला प्रवृत्तिः। तज्जा ह्यहङ्कारसङ्गसंशयाभिसंप्लवाभ्यवपातविप्रत्ययाविशेषानुपायास्तरुणमिव द्रुममतिविपुलशाखास्तरवोऽभिभूय पुरुषमवतत्यैवोत्तिष्ठन्ते, यैरभिभूतो न सत्तामतिवर्तते।**

भगवान् ભગવાન આત્રેયે भगवान आत्रेयने, उवाच કહ્યુ कहा, प्रवृत्ति પ્રવૃત્તિ प्रवृत्ति, मोह- મોહ मोह, इच्छा- ઇચ્છા इच्छा, द्वेष- અને દ્વેષથી થયેલી और द्वेषजन्य, कर्ममूला કર્મરૂપ મૂળવાળી છે कर्मरूप मूलवाली है, अति- विपुल- शाखाः અતિ વિશાળ શાખાવાળાં अति विशाल शाखाओंवाले, तरवः વૃક્ષો वृक्ष, तरुणम् द्रुमम् તરુણ તરુને तरुण वृक्षको, इव જેમ जैसे, अभिभूय પરાભવ પમાડીને (દબાવીને) दबाकर, उत्तिष्ठन्ते ઊંચાં આવે છે बढते हैं, तज्जा हि તેમ તે પ્રવૃત્તિમાંથી ઉત્પન્ન થયેલા उसी तरह प्रवृत्तिजन्य, अहङ्कार- અહંકાર अहंकार, सङ्ग- સંગ संग, संशय- સંશય संशय, अभिसंप्लव- અભિસંપ્લવ (અનાત્મ પદાર્થમાં આત્મબુદ્ધિ) अभिसंप्लव (अनात्म पदार्थमें आत्मबुद्धि), अभ्यवपात- અભ્યવપાત (અનાત્મ પદાર્થમાં મમતા) अभ्यवपात (अनात्म पदार्थमें ममता), विप्रत्यय- વિપ્રત્યય (વિપરીત જ્ઞાન) विप्रत्यय (विपरीत ज्ञान), अविशेष- અવિશેષ (સમાનતાનુ જ્ઞાન) अविशेष (समानताका ज्ञान), अनुपाया તથા અનુપાય (મોક્ષના અનુપાય) तथा अनुपाय (मोक्षके अनुपाय), पुरुषम् પુરુષમાં पुरुषको, अवतत्य एव વ્યાપી જઈને दबाकर, उत्तिष्ठन्ते વૃદ્ધિ પામે છે बढते हैं, यैः જેનાથી जिनसे, अभिभूत દબાયેલો પુરુષ दबा हुआ पुरुष, सत्ताम् સાંસારિક સ્થિતિને सांसारिक स्थितिको, न अतिवर्तते ઉલ્લંઘી શકતો નથી नही लाघ पाता,

१० अहङ्कारसङ्गसंशया°—सङ्गसंदोहा° (ग.)

,, सत्तामतिवर्तते—सत्तापमभिवर्तते (प)

10-(1). The worshipful one said, "Action springs from behaviour impelled by delusion, desire and hate. Born of it are egoism, attachment, doubt, vain-glory, wrong identification, wrong judgement, absence of discrimination and the wrong means. As trees with wide sweeping branches smother a tender sapling, so these raise themselves at the expense of man who being overpowered by them, is unable to transcend action

तत्रैवंजातिरूपवित्तवृत्तबुद्धिशीलविद्याभिजनवयोवीर्यप्रभावसंपन्नोऽहमित्यहङ्कार', यन्मनोवाक्कायकर्म नापवर्गाय स सङ्गः, कर्मफलमोक्षपुरुषप्रेत्यभावादयः सन्ति वा नेति संशयः, सर्वावस्थास्वनन्योऽहमहं स्रष्टा स्वभावसंसिद्धोऽहमहं शरीरेन्द्रियबुद्धिस्मृतिविशेषराशिरिति ग्रहणमभिसंप्लवः, मम मातृपितृभ्रातृदारापत्यबन्धुमित्रभृत्यगणो गणस्य चाहमित्यभ्यवपातः, कार्याकार्यहिताहितशुभाशुभेषु विपरीताभिनिवेशो विप्रत्ययः, ज्ञाज्ञयोः प्रकृतिविकारयोः प्रवृत्तिनिवृत्त्योश्च सामान्यदर्शनमविशेषः, प्रोक्षणानशनाग्निहोत्रत्रिषवणाभ्युक्षणावाहनयाजनयजनयाचनसलिलहुताशनप्रवेशाद्य समारम्भा प्रोच्यन्ते ह्यनुपायाः।

तत्र તેમાં इनमें, अहम् હું मैं, एवम् આવાં ऐसे, जाति- જાતિ जाति, रूप- રૂપ रूप, वित्त- ધન धन, वृत्त- આચાર आचरण, बुद्धि- બુદ્ધિ बुद्धि, शील- શીલ स्वभाव, विद्या- વિદ્યા विद्या, अभिजन- અભિજન कुल, वय - વય वय, वीर्य- વીર્ય शक्ति, प्रभाव- અને પ્રભાવથી और प्रभावसे, सम्पन्न યુક્ત છું युक्त हू, इति આ यह, अहङ्कार• અહંકાર છે अहंकार है, यत् જે जो, मन - મન मन, वाक्- વાણી वाणी, काय कर्म- અને કાયાનુ કર્મ और शरीरका कर्म, अपवर्गाय न મોક્ષ માટે ન હોય मोक्षके लिए न हो, स• તે वह, सङ्ग સંગ છે संग है, कर्म- કર્મ कर्म, फल- ફળ फल, मोक्ष- મોક્ષ मोक्ष, पुरुष- પુરુષ पुरुष, प्रेत्यभावादय• અને પુનર્જન્મ વગેરે और पुनर्जन्म आदि, सन्ति वा न છે કે નહિ है या नही, इति संशय એ સંશય છે यह संशय है, सर्वावस्थासु શરીરની સર્વ અવસ્થાઓમાં शरीरकी सब अवस्थाओंमें, अहम् ७ ધાતુના સમુદાયરૂપ હુ છ धातुओंका समुदायरूप मैं, अनन्य એક છુ एक हू, अहम् હુ मैं, स्वभावसंसिद्ध स्वભાવસિદ્ધ છુ अपने आप बना हूं, अहम् હુ मैं, शरीर- શરીર शरीर, इन्द्रिय- ઇન્દ્રિય इन्द्रिय, बुद्धि- બુદ્ધિ बुद्धि, स्मृतिविशेष- તથા ભિન્ન ભિન્ન સ્મૃતિઓના और भिन्न भिन्न स्मृतिका, राशि સમુદાયરૂપ છુ समुदायरूप हूं, इति એવુ ऐसा, ग्रहणम् જ્ઞાન ज्ञान, अभिसप्लवः અભિસંપ્લવ છે अभिसंप्लव है, मातृ- માતા माता, पितृ- પિતા पिता, भ्रातृ- ભાઈ भ्राता, दार- સ્ત્રી स्त्री, अपत्य- સંતાન संतान, बन्धु- બંધુ बन्धु, मित्र- મિત્ર मित्र, भृत्यगण અને સેવકોનો સમૂહ और भृत्यगण, मम મારો છે मेरे है, अहम् च અને હુ और मैं, गणस्य એ સમૂહનો છુ इस समूहका हूं, इति એ यह, अभ्यवपात અભ્યવપાત છે अभ्यवपात है, कार्य-अकार्य- કાર્ય-અકાર્ય कार्य-अकार्य, हित-अहित હિત અહિત हित-अहित, शुभ-अशुभेषु અને શુભ તથા અશુભમાં और शुभ एवं अशुभमें, विपरीत- વિપરીત विपरीत, अभिनिवेश જ્ઞાન થવુ ज्ञान होना, विप्रत्यय એ વિપ્રત્યય यह विप्रत्यय है, ज्ञाज्ञयो જ્ઞ અને અજ્ઞમાં ज्ञ और अज्ञमें, प्रकृतिविकारयो પ્રકૃતિ અને વિકારમા प्रकृति और विकृतिमें, प्रवृत्तिनिवृत्त्यो च તથા પ્રવૃત્તિ અને નિવૃત્તિમાં तथा प्रवृत्ति और निवृत्तिमें, सामान्य- સમાનતા समानता, दर्शनम् દેખવી देखना, अविशेषः એ અવિશેષ यह अविशेष है, प्रोक्षण- તેમજ પ્રોક્ષણ एवं प्रोक्षण, अनशन- અનશન (ન ખાવુ) अनशन,

१० सर्वावस्थासु-सर्वास्ववस्थासु (च क्ष)
,, ,, -सर्वावस्थोऽहम् (प)
,, बुद्धिस्मृतिविशेषराशिरिति-बुद्धिविशेषराशिरिति (ख)
,, सामान्यदर्शनम्-असामान्यदर्शनम् (द.)
,, दर्शनमविशेष.-दर्शनविशेष (क्ष. त प.)
,, अभ्युक्षणावाहनयाजनयजनयाचन-अभ्युक्षणावाहनायाचन(ख)
,, ह्यनुपायाः-ह्यनुपाय (ध)

अग्निहोत्र- અગ્નિહોત્ર अग्निहोत्र, त्रिषवण- ત્રિકાલસ્નાન त्रिकालस्नान, अभ्युक्षण- સેચન सेचन, आवाहन- આવાહન देवताओंका आवाहन, याजन- યજ્ઞ કરાવવો यज्ञ कराना, याचन- યાચના मागना, सलिल-हुताशन-प्रवेशादय. જલપ્રવેશ અગ્નિપ્રવેશ આદિ जलप्रवेश-अग्निप्रवेश आदि, समारम्भा કર્મોને कर्म, अनुपायाः અનુપાય अनुपाय, प्रोच्यन्ते हि કહેવામાં આવે છે कहलाते हैं,

as the ceremonial sprinkling of water etc., in sacrifices, fasting, the keeping of the sacred fire, the three diurnal baths, ceremonial spraying, invocation, officiating at another's sacrifice, sacrificing for oneself, mendicancy and entering the waters or fire etc

10-(2) Now, I am endowed with such race, looks, wealth, conduct, intelligence, character, learning, lineage, period of life, vigour and capability—this notion is egoism. Whatever action mental, vocal or bodily, is not conducive to final emancipation, is called attachment; questioning such facts as the results of action, liberation and human survival after death is called doubt. The notion, I am a unitary personality through all vissicitudes, I am the creator, I am perfect by nature, I am the unique conglomeration of the body, the senses, intelligence and recollection—this is vain glory. The mother, father, brother, wife, child, kinsman, friend, servant etc, are mine and I am theirs—this is wrong identification. Erroneous conception of what is enjoined and prohibited, the beneficial and the harmful, and the good and the evil, is wrong judgement. The confounding of the knower and the non-knower, the original and the modification, action and inaction, is absence of discrimination. And lastly, the wrong means are said to be such undertakings

एवमयमधीधृतिस्मृतिरहङ्काराभिनिविष्टः सक्तः ससंशयोऽभिसंप्लुतबुद्धिरभ्यवपतितोऽन्यथादृष्टिरविशेषग्राही विमार्गगतिर्निवासवृक्षः सत्त्वशरीरदोषमूलानां सर्वदुःखानां भवति। एवमहङ्कारादिभिर्दोषैर्भ्राम्यमाणो नातिवर्तते प्रवृत्तिं, सा च मूलमघस्य ॥ १० ॥

एवम् આ પ્રમાણે इस प्रकार, अ-धी धृति स्मृति બુદ્ધિ-ધૃતિ તથા સ્મૃતિથી રહિત बुद्धि-धृति तथा स्मृतिसे हीन, अहङ्काराभिनिविष्ट અહંકારના અભિનિવેશવાળો अहंकाराविष्ट, सक्त ससंशयः આસક્ત, શંકાયુક્ત आसक्त, संशययुक्त, अभिसंप्लुत- बुद्धिः અભિસંપ્લવવાળી બુદ્ધિથી યુક્ત अभिसंप्लुत बुद्धिवाला, अभ्यवपतित મમતાયુક્ત ममतायुक्त, अन्यथादृष्टिः વિપરીત દૃષ્ટિવાળો अन्यथादर्शी, अविशेषग्राही ભેદને નહિ જાણનાર भेदको न समझनेवाला, विमार्गगति અને વિમાર્ગગામી और विमार्गगामी, अयम् આ પુરુષ यह पुरुष, सत्त्व-शरीर-दोष मूलानाम् મન તથા શરીરના દોષરૂપ મૂળવાળુ मन और शरीरके दोषरूप मूलवाला, सर्वदुःखानाम् સર્વ દુઃખોનું सब दुःखोंका, निवासवृक्षः નિવાસવૃક્ષ निवासवृक्ष, भवति થાય છે बन जाता है, एवम् આ પ્રમાણે इस प्रकार, अहङ्कारादिभि અહંકારાદિક अहंकारादि, दोषैः દોષોથી दोषोंसे, भ्राम्यमाण. ભમાવાતો પુરુષ चक्करमें पड़ा हुआ मनुष्य, प्रवृत्तिम् પ્રવૃત્તિને प्रवृत्तिको, न अतिवर्तते ઉલ્લંઘી શકતો નથી नहीं छोड़ पाता. सा च અને તે પ્રવૃત્તિ और वह प्रवृत्ति, अघस्य मूलम् પુણ્ય તથા પાપનું મૂળ છે पुण्य और पापका मूल है ॥१०॥

---

१०. अविशेषग्राही–विशेषग्राही (द)

,, सर्वदुःखाना–मूल सर्वदु.खानाम् (ध. छ.)

10. Thus man, dispossessed of right understranding, resolution and recollection and taken possession of by the ego and attached to action and given to doubt, his understanding clouded with conceit, and merging himself in his environment, with distorted vision, lacking discrimination and going astray, becomes the dwelling tree of all afflictions which have for their root-cause defects of the body and the mind. In this manner, being borne about hither and thither by the evil forces of egoism etc, man is unable to transcend the vicious chain of causation, which indeed is the mainspring of all evil

निवृत्ते स्वरूपम्—

**निवृत्तिरपवर्गः; तत् परं प्रशान्तं तत्तदक्षरं तद्ब्रह्म स मोक्षः ॥ ११ ॥**

निवृत्तिः निवृत्ति निवृत्ति, अपवर्ग मोक्ष छे अपवर्ग है, तत् परम् ते परम छे वह सर्वोत्कृष्ट है, तत् प्रशान्तम् ते प्रशान्त छे वह प्रशान्त है, तत् अक्षरम् ते अक्षर छे वह अक्षर है, तत् ब्रह्म ते ब्रह्म छे वह ब्रह्म है, सः मोक्ष. अने ते मोक्ष छे और वह मोक्ष है ॥ ११ ॥

11. In action which breaks the chain of causation, is the ultimate dissolution. That is the highest, the final peace; that is the indestructible, that is Brahma, and that is liberation

मोक्षोपाया.—

**तत्र मुमुक्षूणामुदयनानि व्याख्यास्यामः। तत्र लोकदोषदर्शिनो मुमुक्षोरादित एवाचार्याभिगमनं, तस्योपदेशानुष्ठानम्, अग्नेरेवोपचर्या, धर्मशास्त्रानुगमनं, तदर्थाववोधः, तेनावष्टम्भः, तत्र यथोक्ताः क्रियाः, सतामुपासनम्, असतां परिवर्जनम्, असङ्गतिर्दुर्जनेन, सत्यं सर्वभूतहितमपरुषमनतिकाले परीक्ष्य वचनं, सर्वप्राणिषु चात्मनीवावेक्षा, सर्वासामस्मरणमसङ्कल्पनमप्रार्थनमनभिभाषणं च स्त्रीणां, सर्वपरिग्रहत्यागः, कौपीनं प्रच्छादनार्थं, धातुरागनिवसनं, कन्थासीवनहेतोः सूचीपिप्पलकं, शौचाधानहेतोर्जलकुण्डिका, दण्डधारणं, भैक्षचर्यार्थं पात्रं, प्राणधारणार्थमेककालमग्राम्यो यथोपपन्नोऽभ्यवहारः, श्रमापनयनार्थं शीर्णशुष्कपर्णतृणास्तरणोपधानं, ध्यानहेतोः कायनिवन्धनं, वनेष्वनिकेतवासः, तन्द्रानिद्रालस्यादिकर्मवर्जनम्, इन्द्रियार्थेष्वनुरागोपतापनिग्रहः, सुप्तस्थितगतप्रेक्षिताहारविहारप्रत्यङ्गचेष्टादिकेष्वारम्भेषु स्मृतिपूर्विका प्रवृत्तिः, सत्कारस्तुतिगर्हावमानक्षमत्वं, क्षुत्पिपासायासश्रमशीतोष्णवातवर्षासुखदुःखसंस्पर्शसहत्वं, शोकदैन्यमानोद्वेगमदलोभरागेर्ष्याभयक्रोधादिभिरसंचलनम्, अहङ्कारादिषूपसर्गसंज्ञा, लोकपुरुषयोः सर्गादिसामान्यावेक्षणं, कार्यकालात्ययभयं, योगारम्भे सततमनिर्वेदः, सत्त्वोत्साहः, अपवर्गाय धीधृतिस्मृतिवलाधानं, नियमनमिन्द्रियाणां चेतसि, चेतस आत्मनि, आत्मनश्च, धातुभेदेन शरीरावयवसंख्यानमभीक्ष्णं, सर्वं कारणवद्दुःखमस्वमनित्यमित्यभ्युपगमः, सर्वप्रवृत्तिष्वघसंज्ञा,**

११ प्रशान्तम्—तत् प्रशान्तम् (ध.)
,, तत्तदक्षरम्—तदक्षरम् (ध.)
१२ उदयनानि—सर्वाणि उदयनानि (छ.)
,, उदयनानि व्याख्यास्याम.—उदयनानि (ध)
,, ,, ,, —उदयनानि सर्वाणि अनुव्याख्यास्याम (न.)

१२ असङ्गति.—न सङ्गति (च.)
,, यथोपपन्न —यथोपपन्न एव (च.)
,, यथोपपन्नोऽभ्यवहार —यथापन्न एवाभ्यवहार (ध.)
,, इन्द्रियार्थेषु—सर्वेष्विन्द्रियार्थेषु (क च छ.)
,, आहारविहार°—आहार° (ध.)
,, °क्षमत्वम्—°क्षमित्वम् (ज)
,, क्षुत्पिपासायासश्रम°—क्षुत्पिपासाया° (त.)
,, क्रोधादिभिरसंचलनम्—क्रोधादिभि असवसनम् (ध.)
,, असंचलनम्—अवलनम् (च)
,, , —अनवलनम् (प)
,, सर्वं कारणवद् दुःखमस्वमनित्य—सर्वं मरणदुःखमनित्य (फ)
,, अघसंज्ञा—दुःखसंज्ञा (ध. च. झ. ट न ध)

सर्वसंन्यासे सुखमित्यभिनिवेशः; एष मार्गोऽपवर्गाय, अतोऽन्यथा बध्यते; इत्युदयनानि व्याख्यातानि ॥ १२ ॥

तत्र આ વિષયમાં इस विषयमें, मुमुक्षूणाम् મોક્ષની ઇચ્છાવાળાઓના मुमुक्षुओंके लिए, उदयनानि મોક્ષના ઉપાયોનુ मोक्षके उपायोंका, व्याख्यास्यामः વ્યાખ્યાન કરશુ व्याख्यान करेंगे, तत्र એઓમાં इनमें, लोकदोषदर्शिन. લોકમાં દોષદષ્ટિ કરનાર लोकमें दोषदर्शी, मुमुक्षो. મુમુક્ષુનુ मुमुक्षुको, आदित एव સૌ પહેલાં प्रथमसे ही, आचार्याभिगमनम् આચાર્ય પાસે જવુ आचार्यके पास जाना, तस्य તેના उसके, उपदेशानुष्ठानम् ઉપદેશને આચારમાં મૂકવો उपदेशका पालन, अग्ने एव અગ્નિની अग्निकी, उपचर्या ઉપચર્યા सेवा, धर्मशास्त्र- ધર્મશાસ્ત્રોનુ धर्मशास्त्रोंका, अनुगमनम् અધ્યયન अध्ययन, तदर्थावबोधः તેનો અર્થ જાણવો उसके अर्थको समझना, तेन अवष्टम्भ તે વડે દઢતા उससे दढता, तत्र यथोक्ता શાસ્ત્રમાં જે પ્રમાણે કહી હોય તે પ્રમાણે शास्त्रमें कहे अनुसार, क्रियाः ક્રિયાઓ करना, सताम् उपासनम् સત્પુરુષોની ઉપાસના सत्पुरुषोंकी उपासना, असताम् परिवर्जनम् અસત્ પુરુષોનો ત્યાગ असत् पुरुषोंका त्याग, दुर्जनेन असङ्गतिः दुर्જન સાથે સંગતિ ન રાખવી दुर्जनोंका असंग, सत्यम् સત્ય सत्य, सर्वभूतहितम् સર્વ પ્રાણીઓને હિતકર सब भूतोंके लिए हितकर, अपरुषम् કોમળ कोमल, अनतिकाले અને સમયસર समय पर, परीक्ष्य પરીક્ષા કરીને सोच विचार कर, वचनम् બોલવુ बोलना, सर्वप्राणिषु च સર્વ પ્રાણીઓ તરફ और सब प्राणियोंमें, आत्मनि इव પોતા તરફ હોય એવી अपनी ही तरह, अवेक्षा નજર देखना, सर्वासाम् स्त्रीणाम् સ્ત્રીમાત્રના स्त्रीमात्रके, अस्मरणम् સ્મરણનો ત્યાગ स्मरणका त्याग, असंकल्पनम् સંકલ્પનો અભાવ संकल्पका अभाव, अप्रार्थनम् પ્રાર્થનાનો ત્યાગ प्रार्थनाका त्याग, अनभिभाषणम् च तथा સંભાષણનો અભાવ और सभाषणका अभाव, सर्वपरिग्रहत्यागः સર્વ પરિગ્રહનો ત્યાગ सब परिग्रहोंका त्याग, प्रच्छादनार्थम् નગ્નતા ઢાંકવા માટે नग्नता ढापनेके लिए, कौपीनम् કૌપીન कौपीन, धातुरागनिवसनम् ગેરુથી રંગેલાં વસ્ત્ર પહેરવાં गेरुए वस्त्रका पहिरना, कन्थासीवनहेतोः કન્થા સીવવાના હેતુથી गुदड़ी सीनेके लिए, सूचीपिप्पलकम् સોય રાખવાનુ પાત્ર सुई रखनेका पात्र, शौचाधानहेतोः નહાવા ધોવાના હેતુથી नहाने धोनेके लिए, जलकुण्डिका જલપાત્ર जलपात्र, दण्डधारणम् દંડનુ ધારણ दण्डका धारण, भैक्षचर्यार्थम् ભિક્ષા માગવા માટે भिक्षाके लिए, पात्रम् પાત્ર पात्र, प्राणधारणार्थम् પ્રાણ ટકાવવા માટે प्राण धारणके लिए, एककालम् એક વખત एक समय, अग्राम्य. વન્ય કંદમૂળ વગેરે वन्य कदमूल आदि, यथोपपन्न. મળી આવે તેવુ यदृच्छाप्राप्त, अभ्यवहार ભોજન आहार, श्रम-अपनयनार्थम् થાક દૂર કરવા માટે श्रमनिवारणार्थ, शीर्ण शुष्कपर्ण- ખરી પડેલાં સૂકાં પાંદડાં गिरे हुए सूखे पत्ते, तृणास्तरणोपधानम् તથા ઘાસનુ બિછાનુ અને ઓશીકુ तथा घासका बिछौना और तकिया, ध्यानहेतो. ધ્યાનને માટે ध्यानके लिए, कायनिबन्धनम् પવનપાવડી योगपट्ट (पावड़ी), वनेषु વનમાં वनमें, अनिकेतवास ઘર વગરનુ વસવું बिना घरके वसना, तन्द्रा-निद्रा- તન્દ્રા નિદ્રા तन्द्रा-निद्रा, आलस्यादिकर्म- અને આળસ વગેરે કર્મનો और आलस्यादि कर्मोंका, वर्जनम् त्याग त्याग, इन्द्रियार्थेषु ઇન્દ્રિયોના વિષયમાં इन्द्रियोंके विषयमें, अनुराग- પ્રીતિ प्रीति, उपताप- તથા અપ્રીતિનો तथा द्वेषको, निग्रह નિગ્રહ रोकना, सुप्त-स्थित- સૂવા-બેસવા सोना-बैठना गत-प्रेक्षित- ચાલવા-જોવા चलना-देखना, आहार- विहार- આહાર- વિહાર आहार- विहार, प्रत्यङ्गचेष्टादिकेषु અને પ્રત્યેક અંગની ચેષ્ટા આદિક और प्रत्येक अंगकी चेष्टा आदि, आरम्भेषु કાર્યોમાં आरंभोंमें, स्मृतिपूर्विका સ્મૃતિપૂર્વક स्मृतिपूर्वक, प्रवृत्ति પ્રવૃત્તિ प्रवृत्त होना, सत्कार- સત્કાર आदर, स्तुति- સ્તુતિ प्रशंसा, गर्हा- નિન્દા निन्दा, अवमान- અને અપમાન अपमानको, क्षमत्वम् સહન કરવાની શક્તિ सहनेकी शक्ति, क्षुत्-पिपासा- ભૂખ તરસ भूख-प्यास, आयास-श्रम- પરિશ્રમ- થાક परिश्रम- थकावट, शीत-उष्ण- ટાઢ તડકો शीत-उष्ण, वात-वर्षा- વાત- વર્ષા वायु- वर्षा, सुख-दुःख- સુખ અને દુઃખના सुख एवं दुःखके, संस्पर्शसहत्वम् સ્પર્શને સહન કરવો स्पर्शको सहना, शोक-दैन्य- શોક- દીનતા शोक- दीनता, मान-उद्वेग- માન- ઉદ્વેગ मान- उद्वेग, मद-लोभ- મદ-લોભ

मद लोभ, राग-ईर्ष्या- રાગ-ઈર્ષ્યા राग-ईर्ष्या, भय- ભય भय, क्रोधादिभि અને ક્રોધાદિકથી और क्रोधादिसे, असंचलनम् વિચલિત ન થવું विचलित न होना, अहङ्कारादिषु અહંકારાદિકમાં अहङ्कारादिमें, उपसर्ग-संज्ञा અનર્થના હેતુપણાની ભાવના अनर्थके हेतुकी भावना, लोकपुरुषयो લોક અને પુરુષમાં लोक और पुरुषमें, सर्गादि-सामान्य- સર્ગઆદિની સમાનતા सर्गादिकी समानताको, अपेक्षणम् જોવી देखना, कार्यकालात्यय- કાર્યનો કાળ પસાર થઈ જવાનો कार्यकालके वीत जानेसे, भयम् ભય हरना, योगारम्भे યોગારંભમાં योगारम्भमें, सततम् सतत निरंतर, अनिर्वेद અખિન્નતા अवैराग्य, सत्त्वोत्साह મનમાં ઉત્સાહ मनमें उत्साह, अपवर्गाय મોક્ષને માટે मोक्षके लिए, धी- બુદ્ધિ बुद्धि, धृति- ધૃતિ धृति, स्मृति- સ્મૃતિ स्मृति, बल- તથા બલનું और बलको, आधानम् ધારણ કરવુ धारण करना, इन्द्रियाणाम् ઇન્દ્રિયોનુ इन्द्रियोंको, चेतसि- ચિત્તમાં मनमें, चेतस અને ચિત્તનુ और मनको, आत्मनः च તથા આત્માનું तथा आत्माको, आत्मनि આત્મામાં પરમાત્માના જ્ઞાન માટે आत्मामें परमात्माके ज्ञानके लिए, नियमनम् નિયમન नियमन करना, धातुभेदेन ધાતુભેદ પ્રમાણે धातुभेदमे, अभीक्ष्णम् વારવાર वारवार, शरीरावयव- શરીરના અવયવોની शरीरके अवयवोंकी, संख्यानम् વિચારણા विचारणा, कारणवत् કારણવાળુ (ઉત્પત્તિ-ધર્મવાળુ कारणयुक्त, सर्वम् સર્વ सब, दुःखम् દુઃખનુ કારણ છે दुःखका कारण है, अस्वम् આપણુ નથી अनात्मीय है, अनित्यम् અને અનિત્ય છે और अनित्य है, इति એવો ऐसा, अभ्युपगमः સ્વીકાર मानना, सर्व-प्रवृत्तिषु સર્વ પ્રવૃત્તિઓમાં सर्व प्रवृत्तियोंमें, अघसंज्ञा પાપ જેવુ पाप देखना, सर्वसंन्यासे અને સર્વસંન્યાસમાં और सर्वत्यागमे, सुखम् इति સુખ છે એવો सुख है ऐसा, अभिनिवेश- નિશ્ચય निश्चय करना, एष मार्ग. આ માર્ગ यह मार्ग, अपवर्गाय મોક્ષને માટે છે मोक्षके लिए है, अतः अन्यथा આથી વિપરીતપણે इससे विपरीत दशामें, वध्यते પુરુષ બંધાય છે पुरुष बद्ध होता है, इति આ પ્રમાણે इस तरह, उदयनानि મોક્ષના ઉપાયોનું मोक्षके उपायोंका, व्याख्यातानि વ્યાખ્યાન કર્યું છે व्याख्यान किया है ॥ १२ ॥

12. We shall now describe the upward-leading path of those who seek liberation. The seeker after final emancipation, who has seen the vanity of the world, should first make his app roach to a teacher whose teaching he should then put into practice. Thus he should tend the ceremonial fire, study the sacred law-books, understand their meaning and taking them for his guide should mould his conduct thereby. He should seek the good and avoid the evil, he should eschew the company of the wicked, he should speak only that which is true, conducive to the good of all creatures, gentle, seasonable and well-considered. He should regard all creatures as himself. He should avoid all reminiscence, desire, questing and discourse with women and renounce all possessions retaining only the following appurtenance; a loin-cloth for cover and an ochre-coloured garment, and for mending it a case of sewing needles. For the sake of cleanliness he may carry a water-pot and as a mark of his order a mendicant's staff, and a bowl for collecting alms. He may substitute alms by such natural food as is easily available in the woods and just enough to maintain life If he is fatigued, he may take his rest on a bed improvised with dry fallen leaves and weeds, but he should not do this habitually. He may keep an arm-rest as an aid in meditation. He should dwell in the woods and

have no roof over his head, avoiding drowsiness, sleep, laziness etc He should check desire and aversion to sense-objects. He should exercise circumspection in sleeping, staying, moving, seeing, eating, recreation and in fact in the movement of every individual limb. He should be indulgent alike to honorable treatment, adulation, contempt and humiliation, and should be able to put up with hunger, thirst, fatigue, strain, cold, heat, wind, rain, pleasure and pain. He should be unmoved by grief, depression, self conceit, affliction, arrogance, greed, attachment, envy, fear anger etc. He should look on egoism etc., as causative of suffering, and on the macrocosm and microcosm in the matter of creation etc as being identical. He should dread procrastination ands hould never feel disinclined to practise yoga He should be of an enthusiastic frame of mind. He should bend all his powers of understanding, resolution and recollection towards final emancipation, he should restrain the senses by means of the mind, and the mind by means of the Spirit and the Spirit by itself He should constantly revolve in mind the categories giving rise to the body and its members and should resolve that every thing that has causation is not the self, is fraught with pain and is transient He should regard all activity as tainted with evil, and hold the conviction that in the renunciation of all things is true happiness. This is the path leading to final emancipation; straying from this, one is bound. Thus have we described the upward steps

शुद्धसत्त्वस्य लक्षणम्—

भवन्ति चात्र—

एतैरविमलं सत्त्वं शुद्ध्युपायैर्विशुध्यति ।
मृज्यमान इवादर्शस्तैलचेलकचादिभिः ॥ १३ ॥

अत्र च આ વિષયમાં इस विषयमें, भवन्ति શ્લોકો છે કે श्लोक हैं कि, तैल-चेल-कचादिभिः તેલ, વસ્ત્ર, વાળ વગેરેથી तैल, वस्त्र, वाल आदिसे, मृज्यमान. લૂછાતા साफ किये जाते, आदर्शः इव અરીસાની પેઠે आदर्शकी तरह, एतैः આ इन, शुद्धि-उपायैः શુદ્ધિના ઉપાયોથી शुद्धिके उपायोंसे, अविमलम् મેલું मलिन, सत्त्वम् મન मन, विशुध्यति વિશુદ્ધ થાય છે विशुद्ध हो जाता है ॥ १३ ॥

Here are verses again—

13. By these purifying means, the impure mind is cleansed, just as a looking-glass is cleansed by being rubbed with such things as oil, cloth and brush.

ग्रहाम्बुदरजोधूमनीहारैरसमावृतम् ।
यथाऽर्कमण्डलं भाति भाति सत्त्वं तथाऽमलम् ॥१४॥

ग्रह- રાહુ राहु, अम्बुद- મેઘ मेघ, रज - રજ रज, धूम- ધૂમ धूम, नीहारैः અને ધુમ્મસથી और कुहरेसे, असमावृतम् અનાચ્છાદિત अनाच्छन्न, अर्कमण्डलम् સૂર્યમંડળ सूर्यमंडल, यथा भाति જેમ પ્રકાશે છે जैसे प्रकाशित होता है, तथा તેમ वैसे, अमलम् નિર્મળ निर्मल, सत्त्वम् મન मन, भाति પ્રકાશે છે प्रकाशित होता है ॥ १४ ॥

14. The purified mind, thereafter, shines like the sun's orb that has

come out of an eclipse, water-vapour, dust-cloud, smoke-cloud or fog.

ज्वलत्यात्मनि संरुद्धं तत् सत्त्वं संवृतायने ।
शुद्धं स्थिरः प्रसन्नार्चिर्दीपो दीपाशये यथा ॥१५॥

शुद्ध શુદ્ધ शुद्ध, स्थिर સ્થિર स्थिर, प्रसन्नार्चि. અને સ્વચ્છ પ્રભાયુક્ત उज्ज्वल शिखावाला, दीप દીવો दीप (संवृतायने) બંધ बन्द, दीपाशये ફાનસમાં फानुसमें, यथा (ज्वलति) જેવી રીતે પ્રકાશે છે जैसा चमकता है, (तथा) તેવી રીતે उसी तरह, संवृतायने રુદ્ધ માર્ગવાળા रुद्ध इन्द्रिय- द्वारवाले, आत्मनि શરીરમાં देहमें, संरुध्यम् રૂંધાયેલું संरुद्ध, तत् सत्त्वम् તે મન वह मन, ज्वलति પ્રકાશે છે प्रकाशित होता है ॥ १५ ॥

15. That mind, stabilized in the self, shines like the pure, steady and luminous flame of a lamp kept in a closed lantern

शुद्धा बुद्धिः—

शुद्धसत्त्वस्य या शुद्धा सत्या बुद्धिः प्रवर्तते ।
यया भिनत्त्यतिबलं महामोहमयं तमः ॥१६॥
सर्वभावस्वभावज्ञो यया भवति निःस्पृहः ।
योगं यया साधयते सांख्यः संपद्यते यया ॥१७॥
यया नोपैत्यहङ्कारं नोपास्ते कारणं यया ।
यया नालम्बते किंचित् सर्वं संन्यस्यते यया ॥१८॥
याति ब्रह्म यया नित्यमजरं शान्तमव्ययम् ।
विद्या सिद्धिर्मतिर्मेधा प्रज्ञा ज्ञानं च सा मता ॥१९॥

शुद्धसत्त्वस्य શુદ્ધ મનવાળા પુરુષની शुद्ध मनवाले पुरुषकी, या शुद्धा જે શુદ્ધ जो शुद्ध, सत्या સત્ય सत्य, बुद्धि પ્રજ્ઞા बुद्धि, प्रवर्तते પ્રવર્તે છે प्रवृत्त होती है, यया જેનાથી પુરુષ जिसके द्वारा पुरुष, अतिबलम् અતિ બળવાન अति बलवान, महामोहमयम् મહામોહમય महामोहमय, तमः અજ્ઞાનને अन्धकारको, भिनत्ति ભેદે છે भिन्न कर देता है, यया જેનાથી जिससे, सर्वभाव-સર્વ ભાવોના सब भावोंके, स्वभावज्ञ સ્વભાવને જાણનાર પુરુષ स्वभावको जाननेवाला पुरुष, निःस्पृह. નિઃસ્પૃહ निःस्पृह, भवति થાય છે हो जाता है, यया જેનાથી जिससे, योगम् યોગને योगको, साधयते સાધે છે साधना करता है, यया જેનાથી जिसके द्वारा, सांख्य તત્ત્વજ્ઞાની तत्त्वज्ञानी, संपद्यते થાય છે होता है, यया જેનાથી जिससे, अहङ्कारम् અહંકારને अहंकारको, न उपैति પામતો નથી प्राप्त नहीं होता, यया જેનાથી जिससे, कारणम् સુખદુઃખના કારણનું सुखदुःखके कारणका, न उपास्ते સેવન કરતો નથી सेवन नहीं करता, यया જેનાથી जिससे, किंचित् કશાનુ किसीका, न आलम्बते અવલંબન કરતો નથી अवलम्बन नहीं करता, यया જેનાથી जिससे, सर्वम् સર્વનો सब कुछ, संन्यस्यते ત્યાગ કરવામાં આવે છે त्याग दिया जाता है, यया અને જેનાથી और जिससे, नित्यम् નિત્ય नित्य, अजरम् અજર अजर, शान्तम् શાન્ત शान्त, अव्ययम् અને અવ્યય और अविनाशी, ब्रह्म બ્રહ્મને परब्रह्मको, याति પામે છે प्राप्त होता है, सा તેને वही, विद्या વિદ્યા विद्या, सिद्धि સિદ્ધિ सिद्धि, मति મતિ मति, मेधा મેધા मेधा, प्रज्ञा પ્રજ્ઞા प्रज्ञा, ज्ञानम् च અને જ્ઞાન और ज्ञान, मता માનેલ છે माना गया है ॥ १६-१९ ॥

16-19 That pure, true understanding, which accrues to the man of purified intellect, is variously understood as learning, achievement, judgement, genius, comprehension and knowledge By this, he breaks open the exceedingly strong citadel of the darkness of the geat illusion By this, realizing the true nature of all things, he becomes desireless, by this he masters yoga, by this he attains the knowledge of the categories, by this he stands clear of egoism, by this he does not come under the power

---

[१] अजरं शान्तमव्ययम्—अरजं शान्तमक्षरम् (थ घ प.)
,, अव्ययम्—अक्षरम् (घ च ड ज्ञ.)

of causation; by this he gives up taking refuge in anything; by this he renounces all; by this he finally attains Brahma, the eternal, the undecaying, the unagitated and the imperishable. That is regarded as the true science, attainment, psychic state, intelligence, knowledge and wisdom.

तस्या फलम्—

**लोके विततमात्मानं लोकं चात्मनि पश्यतः ।**
**परावरदृशः शान्तिर्ज्ञानमूला न नश्यति ॥२०॥**

आत्मानम् પોતાને अपनेको, लोके લોકમાં लोकमें, लोकम् च અને લોકને और लोकको, आत्मनि પોતામાં अपनेमें, विततम् વ્યાપી રહેલ व्याप्त, पश्यत જોનાર देखनेवाले, परावरदृशः પરમાત્મા અને પ્રવૃત્તિ વગેરેને જોનાર પુરુષની परमात्मा और प्रवृत्ति आदिको देखनेवाले पुरुषकी, ज्ञानमूला शान्ति. જ્ઞાનરૂપ મૂળવાળી શાંતિ ज्ञानमूलक शाति, न नश्यति નાશ પામતી નથી नष्ट नहीं होती ॥२०॥

20. He who sees himself as extended in all the world and all the world in himself, the peace of that surveyor of this (i e Spirit and matter) and the yonder, being rooted in knowledge, does not perish.

**पश्यतः सर्वभावान् हि सर्वावस्थासु सर्वदा ।**
**ब्रह्मभूतस्य संयोगो न शुद्धस्योपपद्यते ॥ २१ ॥**

हि કારણકે क्योंकि सर्वभावान् સર્વ ભાવોને सब भावोंको, सर्वदा સર્વદા सर्वदा, सर्वावस्थासु સર્વ અવસ્થાઓમાં सब अवस्थाओंमें, पश्यतः જોનાર देखनेवाले, शुद्धस्य અને શુદ્ધ સત્ત્વવાળા और शुद्ध सत्त्ववाले, ब्रह्मभूतस्य જીવન્મુક્ત પુરુષનો जीवन्मुक्त पुरुषका, संयोग. ધર્માદિક સાથે સયોગ शरीरजनक धर्मअधर्मके साथ सयोग, न उपपद्यते સભવતો નથી युक्त नहीं होता ॥२१॥

21. Witnessing all existences in all their conditions and at all times, he who has become Brahma, the pure one, cannot come into contact with anything.

मुक्तस्य लक्षणम्—

**नात्मनः करणाभावाल्लिङ्गमप्युपलभ्यते ।**
**स सर्वकरणायोगान्मुक्त इत्यभिधीयते ॥ २२ ॥**

करणाभावात् કરણના અભાવે करणके अभावसे, आत्मन. આત્માનું मुक्त आत्माका, लिङ्गम् अपि લક્ષણ પણ लक्षण भी, न उपलभ्यते જાણી શકાતુ નથી नहीं मिलता, सर्वकरण- સર્વ કરણના सब करणके, अयोगात् વિયોગથી अयोगसे, स તે वह, मुक्त इति મુક્ત એમ मुक्त ऐसा, अभिधीयते કહેવાય છે कहलाता है ॥ २२ ॥

22. In the absence of the cognising instruments, no characteristics can be observed in the self. Hence by the disjunction of all instruments, he is said to be liberated.

मुक्तेः पर्याया —

**विपापं विरजः शान्तं परमक्षरमव्ययम् ।**
**अमृतं ब्रह्म निर्वाणं पर्यायैः शान्तिरुच्यते ॥२३॥**

विपापम् વિપાપ (પાપ રહિત) विपाप (पापरहित), विरज વિરજ (રજોગુણરહિત) विरज (रजोगुणरहित), शान्तम् શાન્ત शान्त, परम् પર पर, अक्षरम् અક્ષર अक्षर, अव्ययम् ફેરફાર રહિત अव्यय, अमृतम् અમૃત अमृत ब्रह्म બ્રહ્મ ब्रह्म, निर्वाणम् અને નિર્વાણ और निर्वाण, इति એમ इन, पर्यायैः પર્યાયોથી पर्यायोंसे, शान्तिः મુક્તિને मुक्ति, उच्यते કહેવામાં આવે છે कही जाती है ॥ २३ ॥

23 The peace of the liberated is spoken of by such synonyms as sinlessness, passionlessness, tranquility, the supreme, the imperishable, the changeless, immortality, the Brahma and the final rest

२१. सर्वभावान् हि—सर्वभूतानि (च. श त)

२२ करणाभावात्—कारणाभावात् (ढ)

,, सर्वकरणायोगात्—सर्वकरणत्यागात् (क घ च. श त. थ द.)

**एतत्तत् सौम्य! विज्ञानं यज्ज्ञात्वा मुक्तसंशयाः।**
**मुनयः प्रशमं जग्मुर्वीतमोहरजःस्पृहाः ॥ २४ ॥**

**सौम्य** हे सौम्य! हे सौम्य!, **एतत् तत्** આ તે यह वह, **विज्ञानम्** વિજ્ઞાન છે विज्ञान है, **यत् ज्ञात्वा** જેને જાણીને जिसे जान कर, **मुक्तसंशया** સંશયમુક્ત संशयरहित, **मुनयः** મુનિઓ मुनिलोगोंने **वीत-मोह रज.-स्पृहा** મોહ-રજોગુણ અને સ્પૃહા જતાં રહેવાથી मोह-रज तथा स्पृहासे रहित होकर, **प्रशमम्** પરમ શાંતિને परम शान्ति, **जग्मु** પામ્યા છે प्राप्त की है ॥ २४ ॥

24 O, gentle one! this is that unique knowledge, having known which, the sages, freed from doubt, entered the great peace, having cast off delusion, passion and desire.

अध्यायोक्तविषयाः—

**तत्र श्लोकौ—**

**सप्रयोजनमुद्दिष्टं लोकस्य पुरुषस्य च ।**
**सामान्यं मूलमुत्पत्तौ निवृत्तौ मार्ग एव च ॥२५॥**

**तत्र श्लोकौ** તે વિષયમાં ઉપસંહારના બે શ્લોકો છે કે इस विषयमें उपसंहारके दो श्लोक है कि, **लोकस्य** લોકની लोककी, **पुरुषस्य च** અને પુરુષની और पुरुषकी, **सप्रयोजनम्** પ્રયોજનસહિત प्रयोजनसहित, **सामान्यम्** સમાનતા समानता, **उद्दिष्टम्** બતાવી છે बताई है, **उत्पत्तौ** તેમજ ઉત્પત્તિમાં एवं उत्पत्तिमें, **मूलम्** કારણ कारण **निवृत्तौ** અને નિવૃત્તિનો और निवृत्तिका, **मार्गः एव च** માર્ગ બતાવેલ છે मार्ग बताया है ॥ २५ ॥

Here are the two recapitulatory verses—

25 The unity of man and the universe, together with the utility of such knowledge, the origin of the soul's bondage and the means for release therefrom have been described

**शुद्धसत्त्वसमाधानं सत्या बुद्धिश्च नैष्ठिकी ।**
**विचये पुरुषस्योक्ता निष्ठा च परमर्षिणा ॥२६॥**

**शुद्धसत्त्व-** શુદ્ધ સત્ત્વનું शुद्ध सत्त्वका, **समाधानम्** સમાધાન समाधान, **नैष्ठिकी** મોક્ષસાધક मोक्षसाधक, **सत्या** સત્ય सत्य, **बुद्धि च** બુદ્ધિ बुद्धि, **निष्ठा च** અને મોક્ષ और मोक्ष, **पुरुषस्य विचये** પુરુષવિચય શારીર અધ્યાયમાં पुरुषविचय शारीर अध्यायमें, **उक्ता** બતાવ્યાં છે कहे है ॥ २६ ॥

26 The concentration of the pure mind, the true and absolute understanding, and the goal—all this has been taught by the great sage in this chapter on the "Analysis of Man"

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने पुरुषविचयशारीरं नाम पञ्चमोऽध्यायः ॥ ५ ॥**

**इति** આ પ્રમાણે इस प्रकार, **अग्निवेशकृते** અગ્નિવેશે રચેલા अग्निवेशसे बनाये, **चरकप्रतिसंस्कृते तन्त्रे** અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, **शारीरस्थाने** શારીરસ્થાન વિષે शारीरस्थानमें, **पुरुषविचयशारीरम्** 'પુરુષવિચયશારીર' 'पुरुषविचयशारीर', **नाम** નામનો नामका, **पञ्चमः** પાંચમો पाचवाँ, **अध्याय** અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ ५ ॥

5. Thus in the section on Human Embodiment in the treatise compiled by Agnivesa and revised by Caraka, the fifth chapter entitled "The Analysis of Man" is completed.

---

## षष्ठोऽध्यायः ।

## છઠ્ઠો અધ્યાય अध्याय छठा

## Chapter VI

शरीरविचयशारीरोपक्रमः—

**अथातः शरीरविचयं शारीरं व्याख्यास्यामः ॥१॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**अथ अतः** હવે અહીંથી अब आगे, **'शरीरविचयम् शारीरम्'** 'શરીરવિચય શારીર' નામના અધ્યાયનુ

4-(2) While feeling the patient's body, the following are the abnormalities to be noted.

तद्यथा—सततं स्पन्दमानानां शरीरदेशानामस्पन्दनं, नित्योष्मणां शीतीभावः, मृदूनां दारुणत्वं, श्लक्ष्णानां खरत्वं, सतामसद्भावः, सन्धीनां स्रंसभ्रंशच्यवनानि; मांसशोणितयोर्वीतीभावः, दारुणत्वं, स्वेदानुबन्धः, स्तम्भो वा; यच्चान्यदपि किञ्चिदीदृशं स्पर्शानां लक्षणं भृशविकृतमनिमित्तं स्यात्। इति लक्षणं स्पृश्यानां भावानामुक्तं समासेन ॥ ४ ॥

तद् यथा જેમકે जैसे कि, सततम् सतत निरंतर, स्पन्दमानानाम् ફરકતા स्पंदन करनेवाले, शरीरदेशानाम् શરીરના ભાગોનું शरीरके देशोंका, अस्पन्दनम् न ફરકવું स्पन्दन न होना, नित्योष्मणाम् નિત્ય ગરમ ભાગોનું नित्य गरम रहनेवाले भागोंका, शीतीभाव ઠંડુ પડી જવું ठंडा हो जाना, मृदूनाम् કોમળ ભાગોની मृदु स्थानोंका, दारुणत्वम् કઠોરતા कठोर हो जाना, श्लक्ष्णानाम् લીસા ભાગોનું श्लक्ष्ण अवयवोंका, खरत्वम् ખરબચડાપણું खर हो जाना, सताम् અસ્તિત્વ ધરાવતા ભાગોનું विद्यमानोंका, असद्भाव· न હોવું लोप हो जाना, सन्धीनाम् સાંધાઓની सन्धियोंकी, स्रंस- શિથિલતા शिथिलता, भ्रंश- તેઓનું ખસી જવું उनका भ्रंश, च्यवनानि છૂટા પડવું उनकी च्युति, मांसशोणितयोः માંસ અને રુધિરની मास और रुधिरकी, वीतीभाव- क्षीणता क्षीणता, दारुणत्वम् માંસ વગેરેની કઠિનતા मास आदिकी कठिनता, स्वेदानुबन्ध सतत પરસેવો આવવો अत्यन्त पसीना आना, स्तम्भः वा અથવા બિલકુલ ન આવવો अथवा बिलकुल न आना, यत् च અને જે और जो, अन्यत् अपि તે સિવાય બીજું પણ और भी, किञ्चित् કંઈ कुछ, ईदृशम् આવું इस प्रकारका, स्पर्शानाम् સ્પર્શનું स्पर्शोंका, भृश-विकृतम् ખૂબ વિકારવાળું बहुत विकृत, अनिमित्तम् અને કારણ વગર ઉત્પન્ન થયું હોય और कारणके बिना उत्पन्न हुआ हो, लक्षणम् તે મરણનું લક્ષણ वह मृत्युका लक्षण, स्यात् થાય છે होता है, इति આ પ્રમાણે इस प्रकार, स्पृश्यानाम् સ્પર્શ કરવા લાયક स्पर्शोंके, भावानाम् ભાવોનું भावोंका, समासेन સંક્ષેપમાં सक्षेपमें, लक्षणम् લક્ષણ लक्षण, उक्तम् કહ્યું છે कहा है ॥ ४ ॥

४. अस्पन्दन—स्तम्भ. (ह. द)
,, सताम्—स्थूलाना वृषणादीनाम् (ख. घ त ध.)
,, °च्यवनानि—°धावनानि (ख न.)
,, वीतीभावः—वीनभाव (च.)
,, किञ्चिदीदृश स्पर्शाना लक्षण भृशविकृतम्—किञ्चिदीदृग भृशविकृतम (क.)
,, लक्षण भृशविकृतमनिमित्त स्यात—लक्षणनिमित्त स्यात् (घ)
,, लक्षण स्पृश्याना भावानामुक्त समासेन—लक्षणाना सग्रह· स्पर्शानाम् (ख. घ त.)

4. They are—the absence of throbbing in those members of the body which are always throbbing, coldness of those parts which are always warm, rigidity of those parts which are always soft, roughness in those parts which are always smooth; the disappearance of those parts which should normally exist; the looseness, sagging or dislocation of joints; the paucity of flesh or blood, hardness, excessive perspiration; and rigidity, also whatever else that is abnormal and unaccountable. Thus we have declared in brief, the unfavourable prognostic signs observed by palpation

तद्व्यासतोऽनुव्याख्यास्यामः—तस्य चेत् परिमृश्यमानं पृथक्त्वेन पादजङ्घोरुस्फिगुदरपार्श्वपृष्ठपिकापाणिग्रीवाताल्वोष्ठललाटं स्विन्नं शीतं स्तब्धं दारुणं वीतमांसशोणितं वा स्यात्, परासुरयं पुरुषो न चिरात् कालं मरिष्यतीति विद्यात्।

तत् હવે તેનું अब उसको, व्यासतः વિસ્તારપૂર્વક विस्तारसे, अनुव्याख्यास्याम વ્યાખ્યાન કરશું कहेंगे, तस्य चेत् જો તેના यदि उस रोगीके, पाद- પગ पैर, जङ्घा- પિંડી जघा ऊरु- સાથળ ऊरु स्फिक्- નિતંબ स्फिक्,

५ स्तब्ध—प्रसुप्त (घ फ)
,, न चिरात् काल मरिष्यति—न चिरात्काल करिष्यति (फ)

उदर- ઉદર उदर, पार्श्व- પડખાં पार्श्व, पृष्ठेषिका- કરોડ पीठकी हड्डी, पाणि- હાથ हाथ, ग्रीवा- ડોક गरदन, तालु- તાળવું तालु, ओष्ठ- હોઠ होठ, ललाटम् અને લલાટને और ललाट, पृथक्त्वेन પૃથક્ પૃથક્ पृथक् पृथक्, परिमृश्यमानम् સ્પર્શ કરતાં छूनेसे, स्विन्नम् તે પસીનો આવેલાં वे पसीनासे युक्त, शीतम् શીતલ शीतल, स्तब्धम् જડ स्तब्ध, दारुणम् કઠોર कठिन, वीतमांस- કે ક્ષીણ માંસ या क्षीण मास, शोणितम् તથા ક્ષીણ રક્તવાળાં और क्षीण शोणितवाले, वा स्यात् હોય તો जान पड़े तो, परासुः આયુષ્યહીન गतायु, अयम् पुरुष. આ પુરુષ यह पुरुष, न चिरात् कालम् થોડા વખતમાં थोड़े ही समयमें, मरिष्यति મરી જશે मर जायगा, इति विद्यात् એમ જાણવું ऐसा जाने।

५-(१). The same, we shall now expound in extenso Thus, if the patient on being felt with the hand separately on the feet, calves, thighs, buttocks, belly, sides, back-bone, hands, neck, palate, lips and fore-head, is seen to perspire or be cold or rigid or hard or bereft of flesh and blood, then the physician should conclude that, that man is fey and will die at no distant future

तस्य चेत् परिमृश्यमानानि पृथक्त्वेन गुल्फजानुवङ्क्षणगुदवृषणमेढ्रनाभ्यंसस्तनमणिकपर्शुकाहनुनासिकाकर्णाक्षिभ्रूशङ्खादीनि स्रस्तानि व्यस्तानि च्युतानि स्थानेभ्यः स्कन्नानि वा स्युः, परासुरयं पुरुषोऽचिरात् कालं मरिष्यतीति विद्यात् ॥५॥

तस्य चेत् જો તેનાં यदि उसके, गुल्फ- ઘૂંટી गुल्फ, जानु- ઘૂંટણ घुटने, वङ्क्षण- વંક્ષણ वंक्षण, गुद- ગુદ गुदा, वृषण- વૃષણ वृषण, मेढ्र- શિશ્ન मेढ्र, नाभि- નાભિ नाभि, अंस- ખભા अंस, स्तन- સ્તન स्तन, मणिक- કાંડાં मणिक, पर्शुका- પાંસળી पर्शुका, हनु- જડબાં हनु, नासिका- નાક नाक, कर्ण- કાન कान, अक्षि- આંખ नेत्र, भ्रू- ભમર भौंह, शंखादीनि અને શંખ આદિને और शख आदि, पृथक्त्वेन પૃથક્ પૃથક્ पृथक् पृथक्, परिमृश्यमानानि સ્પર્શ કરતાં स्पर्श करने पर, स्रस्तानि તે શિથિલ થઈ ગયેલ वे शिथिल, व्यस्तानि છૂટાં પડેલાં अलग हुए, च्युतानि ખસી ગયેલાં भ्रष्ट, स्थानेभ्य. કે સ્થાનેથી या अपने स्थानसे, स्कन्नानि वा પડી ગયેલાં गिरे हुए, स्यु. चेत् હોય તો हो तो, परासुः આયુષ્યહીન गतायु, अयम् पुरुषः આ પુરુષ यह पुरुष, अचिरात् कालम् થોડા વખતમાં शीघ्र, मरिष्यति મરશે मृत्युको प्राप्त होगा, इति विद्यात् એમ જાણવું ऐसा जाने ॥५॥

5 If again, on being felt, each separately, the ankles, knees, groin, anus, testes, phallus, navel, shoulders, breasts, wrists, ribs, jaws, nose, ears, eyes, eye-brows, temples etc, are seen to be loose, out of position, displaced or sagging, then the physician should know that, that man is fey and will die in no distant future.

उच्छ्वास-मन्या-दन्त-पक्ष्म-चक्षुः-केश-लोमोदर-नखाङ्गुल्याश्रितं रिष्टम्—

तथाऽस्योच्छ्वासमन्यादन्तपक्ष्मचक्षुःकेशलोमोदरनखाङ्गुलीरालक्षयेत् ।

तथा अस्य તે પ્રમાણે એનાં उसी प्रकार इसके, उच्छ्वास- ઉચ્છ્વાસ उच्छ्वास, मन्या- મન્યા मन्या, दन्त- દાંત दात, पक्ष्म- પાંપણ पक्ष्म, चक्षु- આંખ चक्षु, केश- કેશ केश, लोम- રુંવાડાં लोम, उदर- પેટ उदर, नख- નખ नख, अङ्गुली અને આંગળીઓને और अङ्गुलियोंको आलक्षयेत् તપાસવાં જોઈએ देखे।

५ स्कन्नानि वा स्यु, परासुरय–स्कन्नानि, परासुरय (ख)
,, काल मरिष्यतीति–काल करिष्यतीति (ग ज थ ध फ.)

६ नखाङ्गुलीरालक्षयेत्–नखाङ्गुलिगणश्च लक्षयेत (क)
,, अङ्गुलीरालक्षयेत्–अङ्गुलिगणं च लक्षयेत् (ध, ज)
,, आलक्षयेत्–च लक्षयेत (च)

6-(1). Similarly the physician should examine the patient's respiration, the two sides of the neck, the teeth, the eye-lashes, the eyes, the hair of the head, the hair on other parts of the body, the stomach, the nails and the fingers.

तस्य चेदुच्छ्वासोऽतिदीर्घोऽतिह्रस्वो वा स्यात्, परासुरिति विद्यात्। तस्य चेन्मन्ये परिमृश्यमाने न स्पन्देयातां, परासुरिति विद्यात्। तस्य चेद्दन्ताः परिकीर्णाः श्वेता जातशर्कराः स्युः, परासुरिति विद्यात्। तस्य चेत् पक्ष्माणि जटाबद्धानि स्युः, परासुरिति विद्यात्। तस्य चेच्चक्षुषी प्रकृतिहीने, विकृतियुक्ते—अत्युत्पिण्डिते, अतिप्रविष्टे, अतिजिह्मे, अतिविषमे, अतिमुक्तबन्धने, अतिप्रस्रुते, सततोन्मिषिते, सततनिमिषिते, निमिषोन्मेषातिप्रवृत्ते, विभ्रान्तदृष्टिके, विपरीतदृष्टिके, हीनदृष्टिके, व्यस्तदृष्टिके, नकुलान्धे, कपोतान्धे, अलातवर्णे, कृष्णपीतनीलश्यावताम्रहरितहारिद्रशुक्लवैकारिकाणां वर्णानामन्यतमेनातिप्लुते वा स्यातां, तदा परासुरिति विद्यात्। अथास्य केशलोमान्यायच्छेत्, तस्य चेत् केशलोमान्यायम्यमानानि प्रलुच्येरन् न चेद्वेदयेयुस्त परासुरिति विद्यात्। तस्य चेदुदरे सिराः प्रकाशेरन् श्यावताम्रनीलहारिद्रशुक्ला वा स्युः, परासुरिति विद्यात्। तस्य चेन्नखा वीतमांसशोणिताः पक्वजाम्बववर्णाः स्युः, परासुरिति विद्यात्। अथास्याङ्गुलीरायच्छेत्; तस्य चेदङ्गुल्य आयम्यमाना न स्फुटेयुः, परासुरिति विद्यात् ॥६॥

तस्य चेत् જો તેનો जो उसका, उच्छ्वास ઉચ્છ્વાસ उच्छ्वास, अतिदीर्घ બહુ લાંબો बहुत लम्बा, अतिह्रस्व वा કે બહુ ટૂંકો या बहुत छोटा, स्यात् चेत् હોય તો हो तो, परासुः તે મરી જવાનો છે वह गतायु है, इति એમ ऐसा, विद्यात् જાણવુ जाने, तस्य તેની उसकी, मन्ये બન્ને મન્યા दोनों मन्यायें, परिमृश्यमाने સ્પર્શ કરતાં स्पर्श करने पर, न स्पन्देयाताम् चेत् ફરકતી ન હોય તો न फड़कती हों तो, परासु તે મરી જવાનો છે वह गतायु है. इति विद्यात् એમ જાણવું ऐसा जाने, तस्य તેના उसके, दन्ताः દાંત दात, परिकीर्णा મેલથી લિપ્ત मैले, श्वेता· શ્વેત श्वेत, जातशर्करा. અને (શર્કરા) પતરીયુકત और शर्करायुक्त, स्यु· चेत् થયેલા હોય તો हो तो, परासु· તે મરી જવાનો છે वह गतायु है, इति विद्यात् એમ જાણવુ ऐसा जाने, तस्य તેની उसकी, पक्ष्माणि પાપણો पलकें, जटाबद्धानि स्यु· चेत् જટાની માફક બધાઈ જાય તો जटाकी भांति बद्ध हों तो परासु તે મરણોન્મુખ છે वह परासु है, इति विद्यात् એમ જાણવુ ऐसा जाने, तस्य તેનાં उसकी, चक्षुषी ચક્ષુઓ आखे, प्रकृतिहीने સ્વાભાવિક સ્થિતિ વગરનાં प्रकृतिसे रहित, विकृतियुक्ते વિકૃતિયુક્ત विकृत, अत्युत्पिण्डिते બહુ બહાર નીકળેલાં बहुत बाहिर नीकली हुई, अतिप्रविष्टे અતિ ઊંડાં ઊતરી ગયેલ बहुत भीतर घुसी हुई, अतिजिह्मे અતિ વાંકાં अत्यन्त टेढी, अतिविषमे અતિ વિષમ अति विषम, अतिमुक्त- बन्धने અતિ શિથિલ બંધનવાળાં अति शिथिल बन्धनवाली, अतिप्रस्रुते અતિ સ્રાવયુક્ત अति स्रावयुक्त, सततोन्मिषिते સતત નિમેષરહિત सतत निमेषरहित, सततनिमिषिते સતત બંધ सतत बन्द, निमिष-उन्मेष-अति-प्रवृत्ते સતત મટકાં મારતાં अत्यन्त निमेष और उन्मेषवाली, विभ्रान्तदृष्टिके અસ્થિર દૃષ્ટિવાળાં विभ्रात दृष्टिवाली, विपरीत- दृष्टिके વિપરીત દૃષ્ટિવાળાં

६. परिकीर्णा —प्रविकीर्णा· (ग)
" " —प्रकीर्णाः (च)
" " —प्रतिकीर्णा· (ध द)
" प्रकृतिहीने, विकृतियुक्ते—अत्युत्पिण्डिते — प्रकृतियुक्तेऽत्युत्पिण्डिते घ)
" अतिमुक्तबन्धने—अतिविमुक्तबन्धने घ
" सततोन्मिषिते, सततनिमिषिते सततोन्मेषिने, सततनिमेषिने (ग)
" हीनदृष्टिके, व्यस्तदृष्टिके, नकुलान्धे—हीनदृष्टिके, नकुलान्धे (ख)
" व्यस्तदृष्टिके—व्यस्तदृष्टिके, विस्तृतदृष्टिमण्डले (घ)
, अतिप्लुते—अतिप्रप्लुते (क घ च छ ङ त)
, हरितहारिद्रशुक्ल°—हरितशुक्ल° (ख)
" तदा परासुरिति—परासुरिति (घ)
" चेद्वेदयेयुस्तम्—च वेदयेयु (घ)

६ प्रकाशेरन्—प्रहृष्येरन् (त.)

विपरीत दृष्टिसे युक्त, हीनदृष्टिके ક્ષીણ દૃષ્ટિવાળા क्षीण दृष्टिसे युक्त, व्यस्तदृष्टिके વિક્ષિપ્ત દૃષ્ટિવાળા विक्षिप्त दृष्टिसे युक्त, नकुलान्धे દિવસે બધુ શ્વેત દેખનાર नकुलान्ध, कपोतान्धे દિવસે બધુ કાળુ દેખનાર कपोतान्ध, अलातवर्णे અંગારા જેવા વર્ણવાળા अङ्गारेके समान वर्णवाली, कृष्ण- અથવા કાળા या काले, पीत- પીળા पीले, नील- નીલ नील, श्याव- શ્યાવ श्याव, ताम्र- તામ્ર ताम्र, हरित- લીલા हरे, हारिद्र- હળદરિયા हल्दीके सदृश पीले, शुक्ल અને શ્વેત और श्वेत, वैकारिकाणाम् એ વૈકારિક इन विकृत, वर्णानाम् વર્ણોમાંના वर्णोंमेंसे, अन्यतमेन કોઈ એકથી किसी एकसे, अतिप्लुते वा ખૂબ છવાઈ ગયાં अत्यत छाई हुई, स्याताम् चेत् હોય તો हों तो, परासु. તે આસન્નમરણ છે वह गतायु है, इति विद्यात् એમ જાણવું ऐसा जाने, अथ अस्य વળી એના और इसके, केशलोमानि કેશ અને રુવાડાં केश और लोमको, आयच्छेत् ખેચવાં खींचे, तस्य તેના उसके, केशलोमानि કેશ અને રુવાડાં केश तथा लोम, आयम्यमानानि ખેચવામાં આવતાં खींचने पर, प्रलुच्येरन् चेत् જો ઉખડી જાય यदि उखड़ आयें, न वेदयेयुः અને વેદના ન કરે तथा वेदना प्रतीत न हो, चेत् તો तो, तम् તે वह, परासुः મરી જવાનો છે गतायु है, इति विद्यात् એમ જાણવુ ऐसा जाने, तस्य જો તેના यदि उसके, उदरे ઉદર પર उदर पर, सिरा· શિરાઓ सिरायें, प्रकाशेरन् સ્પષ્ટ દેખાતી હોય स्पष्ट दीखती हों, श्याव અથવા ધ્રેટોડી अथवा श्याव, ताम्र- તામ્ર ताम्रवर्ण, नील- નીલ नीली, हारिद्र- હળદરિયા हल्दीके सदृश वर्णवाली, शुक्ला: वा કે શ્વેત વર્ણની वा श्वेत, स्युः चेत् હોય તો हों तो, परासु. તે આસન્નમરણ છે वह मुमूर्षु है, इति विद्यात् એમ જાણવુ ऐसा जाने, तस्य તેના उसके, नखाः નખો नख, वीतमांसशोणिताः ક્ષીણ માંસ અને ક્ષીણ રક્તવાળા मासरक्तहीन, पक्वजाम्बववर्णा. તથા પાકેલા જાબુના જેવા વર્ણવાળા और पके जामुनके सदृश वर्णवाले, स्युः चेत् હોય તો हों तो, परासु. તે મરણોન્મુખ છે वह गतायु है, इति विद्यात् એમ જાણવુ ऐसा जाने, अथ વળી और, अस्य अङ्गुली. એની આંગળીઓને इसकी अंगुलियोंको, आयच्छेत् ખેચવી खींचे, तस्य अङ्गुलय. તેની આંગળીઓના उसकी अगुलियोंको, आयम्यमाना ખેચતાં खींचने पर, न फुटेयु. चेत् ટચાકા બોલે નહિ તો स्फोटनशब्द न हो तो, परासु· તે આસન્નમરણ છે वह गतायु है, इति विद्यात् એમ સમજવુ ऐसा जाने ॥ ६ ॥

6 If the patient's respirations are either too long or too short, it is to be concluded that he is nigh unto death. If the two sides of the neck, on being felt, are observed not to pulsate, is to be concluded that he is nigh unto death. If the patient's teeth are coated all over with tartar, are abnormally white or covered with sugar-like particles, it is to be concluded that he is nigh unto death. If the patient's eye-lashes are clotted, it is to be known that he is nigh unto death. If the patient's eyes are not normal but evince abnormal tendencies that is to say if they are too protuberant, too sunken, too oblique, too asymmetrical, too loosened in their structure, too watery, either perpetually open, perpetually closed, or excessively winking, restlessly wandering, with abnormal visions, with deficient vision, have lost their keenness of vision or are wanting in perspective, are color-blind, either too white or too black, or are red like hot embers, or if the vision is suffused over-much with an unhealthy tinge of any one of the colors—black, yellow, blue, dark-brown, coppery, green, turmeric, yellow and white, then it should be concluded that the patient is at death's door. Thereafter let the physician take hold of a few hairs of the head or of the

body and tug at them; if being thus pulled, they come out with the roots without causing pain, then it is to be known that the patient is soon to depart from life If the veins in the abdominal region become conspicuous or if they appear dark brown, coppery, blue, yellow or whitish, it is to be understood that the patient is not going to survive. If the nails are drained of blood, and the flesh has receded from them and they look dark blue resembling the color of ripe fruits of the jambul tree, it is to be gathered that the patient's days are numbered Lastly, the physician should test the fingers of the patient If when jerked they do not crack, it should be known that it is all over with the patient.

अध्यायोक्तविषयाः—

तत्र श्लोकः—

एतान् स्पृश्यान् बहून् भावान् यः स्पृशन्नवबुध्यते।
आतुरे न स संमोहमायुर्ज्ञानस्य गच्छति ॥७॥

तत्र તે વિષયમાં उस विषयमें, श्लोकः ઉપસંહારનો શ્લોક છે કે उपसंहारका श्लोक है कि, यः જે વૈદ્ય जो वैद्य, एतान् આ इन, स्पृश्यान् સ્પર્શ કરવા લાયક स्पर्श करने योग्य, बहून् બહુ बहुतसे, भावान् ભાવોનો भावोंको, स्पृशन् સ્પર્શ કરતાં स्पर्श करके, अवबुध्यते અરિષ્ટ લક્ષણો જાણે છે अरिष्टके लक्षण जानता है, स તે वह, आतुरे રોગીનું रोगीके, आयुर्ज्ञानस्य આયુષ્ય જાણવામાં आयुको जाननेमें, संमोहम् મોહને मोहको, न गच्छति પામતો નથી प्राप्त नहीं होता ॥७॥

Here is the recapitulatory verse—

7 The physician who, by palpation, ascertains these various palpable signs, will never be confounded in the matter of prognostic knowledge of the life-span of a patient.

७. तत्र श्लोक.—भवति चात्र (क. ज. ब.)

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने परिमर्शनीयमिन्द्रियं नाम तृतीयोऽध्यायः ॥ ३ ॥

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा सस्कृत इस शास्त्रके, इन्द्रियस्थाने ઇન્દ્રિયસ્થાન વિષે इन्द्रियस्थानमें, परिमर्शनीयम् इन्द्रियम् 'પરિમર્શનીય ઇન્દ્રિય' 'परिमर्शनीय इन्द्रिय', नाम નામનો नामका, तृतीय ત્રીજો तीसरा, अध्यायः અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ ३ ॥

3 Thus in the section on Sensorial Prognosis in the treatise compiled by Agnivesa and revised by Caraka, the third chapter entitled "The sensorial prognosis through examination by palpation" is completed.

---

## चतुर्थोऽध्यायः ।

## ચોથો અધ્યાય अध्याय चौथा Chapter IV

इन्द्रियानीकेन्द्रियोपक्रमः—

अथात इन्द्रियानीकमिन्द्रियं व्याख्यास्यामः ॥१॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

अथ अत હવે અહીંથી अब आगे, इन्द्रियानीकम् इन्द्रियम् 'ઇન્દ્રિયાનીક ઇન્દ્રિય' નામના અધ્યાયનું 'इन्द्रियानीक इन्द्रिय' नामके अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥१॥

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥२॥

१. We shall now expound the chapter entitled "The *sensorial prognosis* through examination of the functions of all the senses"

2. Thus declared the worshipful Atreya.

इन्द्रियाणां परीक्षणोपायः—

**इन्द्रियाणि यथा जन्तोः परीक्षेत विशेषवित् ।**
**ज्ञातुमिच्छन् भिषग्ज्ञानमायुषस्तन्निबोधत ॥ ३॥**

**आयुषः** આયુષ્યનું आयुके, **मानम्** પ્રમાણ प्रमाणको, **ज्ञातुम्** જાણવા जाननेको, **इच्छन्** ઇચ્છતા इच्छावाले, **विशेषवित्** વિશેષજ્ઞ विशेषज्ञ, **भिषक्** વૈદ્ય वैद्यको, **यथा** જેવી રીતે जिस प्रकार, **जन्तोः** પ્રાણીની प्राणीकी, **इन्द्रियाणि** ઇન્દ્રિયોની इन्द्रियोंकी, **परीक्षेत** પરીક્ષા કરવી જોઈએ परीक्षा करनी चाहिए, **तत्** તે वह, **निबोधत** સાંભળો सुनो ॥ ३ ॥

3 Learn how the specialist who desires to ascertain the life-span, should examine all sense-faculties of the patient.

**अनुमानात् परीक्षेत दर्शनादीनि तत्त्वतः ।**
**अद्धा हि विदितं ज्ञानमिन्द्रियाणामतीन्द्रियम् ॥ ४॥**

**दर्शनादीनि** ચક્ષુ આદિ ઇન્દ્રિયોની चक्षु आदि इन्द्रियोंकी, **अनुमानात्** અનુમાનદ્વારા अनुमानद्वारा, **तत्त्वतः** તત્ત્વપૂર્વક तत्त્वपूर्वक, **परीक्षेत** પરીક્ષા કરવી જોઈએ परीक्षा करनी चाहिए **हि** કારણકે क्योंकि, **इन्द्रियाणाम्** ઇન્દ્રિયોના इन्द्रियोंके, **अतीन्द्रियम्** અતીન્દ્રિય अतीन्द्रिय, **ज्ञानम्** જ્ઞાનની ज्ञानकी, **विदितम्** અનુમાનથી જ પરીક્ષા अनुमानसे ही परीक्षा, **अद्धा** સત્ય છે सत्य है ॥ ४ ॥

३. यथा—सदा (ग)
,, ज्ञातुमिच्छन् भिषग्ज्ञानमायुषस्तन्निबोधत—आयुःप्रमाण जिज्ञासुर्भिषक् तन्मे निबोधत (ग. द. ध)
,, निबोधत—निबोध मे (घ छ)
४. विदितं—वितथं (घ.)

4. The senses of sight etc, are to be tested as regards their soundness by means of inference for it is only by inference that we have a knowledge of the sense-faculties which are ultra-sensual.

आतुरस्यानिमित्त इन्द्रियज्ञानविपर्यासो मरणलक्षणम्—

**स्वस्थेभ्यो विकृतं यस्य ज्ञानमिन्द्रियसंश्रयम् ।**
**आलक्ष्येतानिमित्तेन लक्षणं मरणस्य तत् ॥ ५॥**

**यस्य** જે રોગીનું जिसका, **इन्द्रियसंश्रयम्** ઇન્દ્રિયોને આશ્રિત इन्द्रियजन्य, **ज्ञानम्** જ્ઞાન ज्ञान, **स्वस्थेभ्यः** સ્વસ્થ ઇન્દ્રિયો થી स्वस्थ इन्द्रियोंसे, **अनिमित्तेन** અકારણ अकारण, **विकृतम्** વિકૃત विकृत, **आलक्ष्येत** દેખાય जान पड़े, **तत्** તે वह, **मरणस्य** મરણનું मरणका, **लक्षणम्** લક્ષણ છે लक्षण है ॥५॥

5 When you find that a patient's sense-experiences are aberrant from normality without any accountable cause, they are to be recognised as symptoms of approaching death

**इत्युक्तं लक्षणं सम्यगिन्द्रियेष्वशुभोदयम् ।**
**तदेव तु पुनर्भूयो विस्तरेण निबोधत ॥ ६॥**

**इति** આ પ્રમાણે इस प्रकार, **इन्द्रियेषु** ઇન્દ્રિયોમાં इन्द्रियोंमें, **अशुभोदयम्** અશુભસૂચક अशुभसूचक, **लक्षणम्** લક્ષણ लक्षण, **सम्यक्** યથાર્થ રીતે सम्यक् प्रकारसे, **उक्तम्** કહ્યું છે कह दिया है, **तत् एव** હવે તે જ उसीको, **तु पुनः** ફરીથી फिर, **भूयः विस्तरेण** અધિક વિસ્તારથી अधिक विस्तारसे, **निबोधत** સાંભળો सुनो ॥६॥

6 The signs occurring in the sense-faculties indicative of unfavourable prognosis have been thus stated correctly Now again listen to an elaborate account of the same.

अरिष्टभूता दर्शनेन्द्रियविकृतयः—

**घनीभूतमिवाकाशमाकाशमिव मेदिनीम् ।**

५. इन्द्रियसंश्रयम्—इन्द्रियसम्भवम् (क. च. झ. त. द. ध)

विगीतमुभयं ह्येतत् पश्यन् मरणमृच्छति ॥७॥

आकाशम् આકાશને आकाशको, घनीभूतम् इव પૃથ્વી જેવુ ઘન पृथ्वीकी तरह घन, मेदिनीम् અને પૃથ્વીને और पृथ्वीको आकाशम् इव આકાશ જેવી શૂન્ય आकाशकी तरह शून्य, एतत् उभयम् એમ આ બન્નેને इस प्रकार इन दोनोंको, विगीतम् વિપરીતપણે विपरीततासे, पश्यन् જોતો મનુષ્ય देखता हुआ मनुष्य, मरणम् મરણ मृत्युको, ऋच्छति हि પામે છે प्राप्त होता है ॥७॥

7. If a man sees space as if it were solid like the earth and the earth as if it were an emptiness like space, seeing either of these incongruous sights, he dies quickly.

यस्य दर्शनमायाति मारुतोऽम्बरगोचरः ।
अग्निर्नायाति चादीप्तस्तस्यायुःक्षयमादिशेत् ॥८॥

अम्बर- गोचर આકાશમાં સંચરતો आकाशमें विचरता हुआ, मारुत વાયુ वायु, यस्य જેને जिसको, दर्शनम् દૃષ્ટિગોચર दृष्टिगोचर, आयाति થાય છે होता है, आदीप्तः અને પ્રજ્વલિત और प्रदीप्त, अग्निः च અગ્નિ अग्नि, दर्शनम् દૃષ્ટિગોચર दृष्टिगोचर, न आयाति થતો નથી नहीं होती, तस्य તેનુ उसकी, आयुःक्षयम् આયુષ્ય ક્ષીણ થયું છે आयुका क्षय हुआ है, आदिशेत् એમ કહેવુ ऐसा कहना चाहिए ॥८॥

8 If a person is able to visualize the invisible wind in the sky or is unable to see blazing fire, he should be known to have his days numbered.

जले सुविमले जालमजालावततले नरः ।
स्थिते गच्छति वा दृष्ट्वा जीवितात् परिमुच्यते ॥९॥

अजालावतते જેમાં જાળ પાથરવામાં નથી આવી जिसमें जाल नही फैलाया गया, सुविमले એવા અત્યંત નિર્મળ ऐसे अत्यंत निर्मल, स्थिते સ્થિર स्थिर, गच्छति वा કે વહેતા या बहते हुए, जले જલમાં जलमें, जालम् જાળને जालको, दृष्ट्वा જોઈને देखकर, नरः મનુષ્ય मनुष्य, जीवितात् જીવતરથી आयुसे, परिमुच्यते મૂકાઈ જાય છે हीन होता है ॥९॥

9 One who sees clear crystalline waters which are either standing or moving, as if they are covered over with a net where there is no such net, will soon depart from life.

जाग्रत् पश्यति यः प्रेतान् रक्षांसि विविधानि च ।
अन्यद्वाऽप्यद्भुतं किञ्चिन्न स जीवितुमर्हति ॥१०॥

जाग्रत् यः જાગતાં છતાં જે जागता हुआ जो, प्रेतान् પ્રેતો प्रेतोंको, विविधानि વિવિધ પ્રકારના विविध प्रकारके, रक्षांसि च રાક્ષસો राक्षसोंको, अन्यत् અથવા બીજુ પણ या अन्य, किञ्चित् કેટલુંક कुछ, अद्भुतम् अपि वा અદ્ભુત પણ अद्भुत भी, पश्यति જુએ છે देखता है, स તે वह, जीवितुम् જીવવા जीने, न अर्हति યોગ્ય નથી योग्य नहीं है ॥१०॥

10 He who perceives, while waking, the shades and various kinds of demons or other strange things, cannot survive long.

योऽग्निं प्रकृतिवर्णस्थं नीलं पश्यति निष्प्रभम् ।
कृष्णं वा यदि वा शुक्लं निशां व्रजति सप्तमीम् ॥११॥

यः જે जो, प्रकृतिवर्णस्थम् સ્વાભાવિક વર્ણવાળા स्वाभाविक वर्णवाले, अग्निम् અગ્નિને अग्निको, नीलम् નીલ રંગનો नीला, निष्प्रभम् નિસ્તેજ प्रभारहित, कृष्णम् वा કાળો काला, यदि वा કે या, शुक्लम् ધોળો श्वेत, पश्यति દેખે देखता है, (सः તે वह), सप्तमीम् સાતમી सातवी. निशाम् રાત सुधी रात तक, व्रजति જીવે છે जीता है ॥११॥

९. नर –तथा (ख. घ)
,, स्थिते–स्थिरे (ग.)

१० न स जीवितुमर्हति–जीवितात्स विमुच्यते (क फ)
,, ,, –जीवितात्परिमुच्यते (द ध)
११ निशां व्रजति सप्तमीम्–सोऽग्नौ वसति सप्तमे (ड. थ)
,, निशाम्–सोऽग्नौ (द)

11. One who sees a normally blazing fire either to be blue, lustreless, black or white, dies after the seventh night.

**मरीचीनसतो मेघान्मेघान् वाऽप्यसतोऽम्बरे ।**
**विद्युतो वा विना मेघैः पश्यन् मरणमृच्छति ॥१२॥**

**असतः मेघात्** મેઘ ન હોવા છતાં પણ તેમાંથી ઉદય પામતી मेघ नहीं होते हुए भी उससे उदयको प्राप्त होती हुई, **मरीचीन्** મેઘજ્યોતિ मेघज्योतिको, **अम्बरे** અથવા આકાશમાં अथवा आकाशमें, **असतः अपि** નહિ હોવા છતાં પણ नहीं होते हुए भी, **मेघान् वा** મેઘોને बादलोंको, **मेघैः विना** અથવા મેઘ વગર अथवा बादलोंके बिना, **विद्युतः वा** વીજળીઓને बीजलियोंको, **पश्यन्** જોતો મનુષ્ય देखता हुआ मनुष्य, **मरणम्** મરણ मृत्युको, **ऋच्छति** પામે છે प्राप्त होता है ॥१२॥

12. He who perceives the light of clouds when there are no clouds or perceives clouds when there are none in the sky, or perceives lightning without clouds, dies quickly

**मृन्मयीमिव यः पात्रीं कृष्णाम्बरसमावृताम् ।**
**आदित्यमीक्षते शुद्धं चन्द्रं वा न स जीवति ॥१३॥**

**यः** જે जो, **शुद्धम्** અનાવૃત अनावृत, **आदित्यम्** સૂર્ય सूर्य, **चन्द्रम् वा** કે ચન્દ્રને वा चन्द्रको, **कृष्णाम्बर-** કાળાં વસ્ત્રથી कृष्ण वस्त्रसे, **समावृताम्** આચ્છાદિત आच्छादित, **मृन्मयीम्** માટીની मिट्टीकी, **पात्रीम् इव** થાળી જેવો थाली जैसा, **ईक्षते** જુએ છે देखता है, **सः** તે वह, **न जीवति** જીવતો નથી नहीं जीता ॥१३॥

13. He who perceives the clear (unclouded) sun or moon as it were an earthen pot covered with a black cloth, does not survive long.

**अपर्वणि यदा पश्येत् सूर्याचन्द्रमसोर्ग्रहम् ।**
**अव्याधितो व्याधितो वा तदन्तं तस्य जीवितम् ॥१४॥**

**अव्याधितः** નીરોગી नीरोग, **व्याधितः वा** કે રોગી वा रोगी, **यदा** જો यदि, **अपर्वणि** પર્વ સિવાયને દિવસે पर्वसे अतिरिक्त कालमें, **सूर्याचन्द्रमसो** સૂર્ય કે ચન્દ્રનું सूर्य या चन्द्रमाका, **ग्रहम्** ગ્રહણ ग्रहण, **पश्येत्** દેખે તો देखता है तो, **तस्य** તેની उसका, **जीवितम्** જિંદગી जीवन, **तदन्तम्** ગ્રહણનો અંત થાય ત્યાં સુધી રહે છે ग्रहणका अन्त हो वहीं तक रहता है ॥१४॥

14. If a person, whether diseased or healthy, sees the sun and the moon eclipsed when it is not the time for an eclipse, he dies with the ending of the illusion.

**नक्तं सूर्यमहश्चन्द्रमनग्नौ धूममुत्थितम् ।**
**अग्निं वा निष्प्रभं रात्रौ दृष्ट्वा मरणमृच्छति ॥१५॥**

**नक्तम्** રાત્રે रात्रिको, **सूर्यम्** સૂર્યને सूर्यको, **अहः** દિવસે दिनमें, **चन्द्रम्** ચન્દ્રને चन्द्रको, **अनग्नौ** અગ્નિ ન હોવા છતાં अग्नि न होने पर भी, **उत्थितम्** નીકળતા निकलते हुए, **धूमम्** ધૂમાડાને धूमको, **रात्रौ वा** અથવા રાત્રે या रात्रिमें, **अग्निम्** અગ્નિને अग्निको, **निष्प्रभम्** નિસ્તેજ निष्प्रभ, **दृष्ट्वा** જોઈ માણસ देखकर मनुष्य, **मरणम्** મરણ मृत्युको, **ऋच्छति** પામે છે प्राप्त होता है ॥१५॥

15 If a person sees the sun by night and the (shining) moon by day, and smoke arising without fire, or fire void of brilliance at night, he is destined to die.

**प्रभावतः प्रभाहीनान्निष्प्रभांश्च प्रभावतः ।**

---

१२. मेघैः—मेघाद (ग. च. त.)

,, पश्यन् मरणमृच्छति—यः पश्यति स नश्यति (च)

१३. पात्रीं कृष्णाम्बरसमावृताम्—पात्रीं कृष्णायोनागताम्रजां (प.)

१५. नक्तं सूर्यमहश्चन्द्रम्—नक्तं सूर्यसम चन्द्रम् (ट)

१६. निष्प्रभांश्च—निप्रभान् वा (च)

नरा विलिङ्गान् पश्यन्ति भावान् भावाञ्जिहासवः १६

भावान् प्राणोंको, जिहासवः छोडवानी तैयारीवाळा तुरन्तमें त्यागनेवाले. नराः पुरुषो मनुष्य प्रभावतः तेजस्वी पदार्थोने तेजस्वी चीजोंको, प्रभाहीनान् तेजहीन तेजहीन, निष्प्रभान् च अने तेजहीन पदार्थोने और तेजहीन चीजोंको, प्रभावतः तेजस्वी तेजस्वी. एवम् एम इस तरह. भावान् पदार्थोने चीजोंको, विलिङ्गान् विपरीत लक्षणवाळा विपरीत लक्षणवाली. पश्यन्ति जुवे छे देखते हैं ॥१६॥

16. Those that are about to die perceive dull and lustreless things as bright and shining, and bright things as dull, and all things in their contrary characteristics.

व्याकृतीनि विवर्णानि विसंख्योपगतानि च ।
विनिमित्तानि पश्यन्ति रूपाण्यायुःक्षये नराः ॥१७॥

आयुःक्षये आयुष्यनो क्षय थता आयुके क्षय होने पर. नराः मनुष्यो मनुष्य. रूपाणि रूपोने रूपोंको. विनिमित्तानि कारण वगर कारणके बिना, व्याकृतीनि विपरीत आकृतिवाळां विपरीत आकृतिवाले, विवर्णानि विपरीत वर्णवाळां विपरीत वर्णवाले विसंख्योपगतानि अने विपरीत संख्यावाळां और विपरीत संख्यावाले, पश्यन्ति देखे छे देखते हैं ॥१७॥

17. Those whose lives are coming to their end see abnormal shapes, abnormal colors, abnormal assemblage of members, without any rhyme or reason.

यश्च पश्यत्यदृश्यान् वै दृश्यान् यश्च न पश्यति ।
तावुभौ पश्यतः क्षिप्रं यमक्षयमसंशयम् ॥१८॥

यः च जे जो, अदृश्यान् वै अदृश्य पदार्थोने अदृश्य वस्तुओंको, पश्यति देखे छे देखता है, यः च अने जे और जो, दृश्यान् दृश्य पदार्थोने दृश्य वस्तुओंको, न पश्यति देखतो नथी नहीं देखता, तौ उभौ ते बन्ने वे दोनों. असंशयम् चोक्कस अवश्य, यमक्षयम् यमपुरीने यमपुरीको, क्षिप्रम् तरतमां शीघ्र, पश्यतः जुवे छे देखते हैं ॥१८॥

18. One who sees invisible things and one who fails to see perfectly visible things, both these are sure to proceed quickly to the abode of death.

अरिष्टभूता श्रोत्रेन्द्रियविकृतयः—

अशब्दस्य च यः श्रोता शब्दान् यश्च न बुध्यते ।
द्वावप्येतौ यथा प्रेतौ तथा ज्ञेयौ विजानता ॥१९॥

यः च जे जो, अशब्दस्य शब्द न होय त्यां शब्दके न होने पर, श्रोता सांभळे छे सुनता है, यः च अने जे और जो, शब्दान् शब्दने शब्दोंको न बुध्यते सांभळतो नथी नहीं सुनता, एतौ ए इन, द्वौ अपि बन्नेयने दोनोंको भी, विजानता समजुकारे विज्ञ वैद्यने. यथा प्रेतौ तथा जेवा प्रेत होय तेवा प्रेततुल्य, ज्ञेयौ समजवा जानना चाहिए ॥१९॥

19. He who hears voices where none exist (acousma), and he who does not hear what is said to him (accoustagnosis), both of them are to be regarded as already dead by the wise man.

संवृत्याङ्गुलिभिः कर्णौ ज्वालाशब्दं य आतुरः ।
न शृणोति गतासुं तं बुद्धिमान् परिवर्जयेत् ॥२०॥

यः आतुरः जे रोगी जो रोगी, अङ्गुलिभिः आंगळीओथी अंगुलियोंसे, कर्णौ बन्ने कान दोनों कान, संवृत्य बंध करीने बन्द कर, ज्वालाशब्दम् ज्वाळाना

१६. भावाञ्जिहासव—प्राणाञ्जिहासव (व च. स ह. त द. श.)
१७. विनिमित्तानि—विनिर्मितानि (द.)
१८. तावुभौ पश्यतः क्षिप्रं यमक्षयमसंशयम्—द्वावप्येतौ यथा प्रेतौ तथा ज्ञेयौ विजानता (श.)
,, यमक्षयम्—यमालयम् (क. श. ह. क.)
१९. द्वावप्येतौ यथा प्रेतौ तथा ज्ञेयौ विजानता—तावुभौ पश्यतः क्षिप्रं यमक्षयमसंशयम् (श.)

शબ્દ જેવો શબ્દ ज्वालागब्द जैसे शब्दको, न शृणोति સાંભળતો નથી नही सुनता, तम् गतासुम् ते આયુષ્ય-હીનને उस गतायुको, बुद्धिमान् બુદ્ધિમાન વૈદ્ય बुद्धिमान वैद्य, परिवर्जयेत तજી દેવો छोड देवे ॥२०॥

20. If an ailing man, closing his ears with the fingers does not hear the internal (jwala) sound as that of a burning fire, him should the wise man give up as one from whom life has fled.

अरिष्टभूता घ्राणेन्द्रियविकृतयः—

**विपर्ययेण यो विद्याद्गन्धानां साध्वसाधुताम् ।**
**न वा तान् सर्वशो विद्यात्तं विद्याद्विगतायुषम् ॥२१॥**

यः જે जो, गन्धानाम् ગન્ધોનું गन्धोंकी, साधुअसाधुताम् શુભાશુભપણું साधुता और असाधुताको, विपर्ययेण વિપરીતપણે विपरीततासे, विद्यात જાણે છે जानता है, तान् वा અથવા તેઓને अथवा उनको, सर्वशः બિલકુલ विलकुल, न विद्यात જાણતો નથી नहीं जानता, तम् તેને उसे, विगतायुषम् આયુષ્યહીન आयुहीन, विद्यात् જાણવો जाने ॥२१॥

21. He who perceives odours in contrary manner, knowing good as bad and vice versa, or does not perceive any odour at all, is to be regarded as one whom life has left

अरिष्टभूता रसेनेन्द्रियविकृतय —

**यो रसान्न विजानाति न वा जानाति तत्त्वतः ।**
**मुखपाकादृते पक्वं तमाहुः कुशला नरम् ॥२२॥**

यः જે जो, मुखपाकात् મુખપાક વગેરે મુખના રોગો मुखपाक आदि मुखरोगोंके, ऋते વિના પણ बिना भी, रसान् રસોને रसोंको, न विजानाति પારખતો નથી नहीं पहिचानता, तत्त्वत અથવા ખરા સ્વરૂપમાં अथवा तत्त्वसे, न जानाति वा જાણતો નથી नहीं जानता, तम् नरम् તે મનુષ્યને उस मनुष्यको, कुशला કુશળ વૈદ્યો कुशल वैद्य, पक्वम् પાકી ગયેલો कालपक्व, आहु કહે છે कहते है ॥२२॥

22 He who does not perceive the tastes at all or fails to perceive their true nature, without having any disease of the mouth, is to be regarded by the wise as ripe for death

अरिष्टभूता स्पर्शनेन्द्रियविकृतय —

**उष्णाञ्छीतान् खराञ्छ्लक्ष्णान्मृदूनपि च दारुणान् ।**
**स्पृश्यान् स्पृष्ट्वा ततोऽन्यत्वं मुमूर्षुस्तेषु मन्यते ॥२३॥**

मुमूर्षु મુમૂર્ષુ પુરુષ मुमूर्षु पुरुष, उष्णान् ઉષ્ણ उष्ण, शीतान् શીત शीत, खरान् કઠોર खर, श्लक्ष्णान् લીસા श्लक्ष्ण, मृदून् કોમળ मृदु, दारुणान् च अपि અને દારુણ और कठिन, स्पृश्यान् स्पृष्ट्वा સ્પર્શ કરવાના પદાર્થોને સ્પર્શ કરીને स्पृश्योंको स्पर्श करके, तेषु તેઓમાં उनमें, तत अन्यत्वम् તેઓનાથી વિપરીતતા उनसे विपरीतताको, मन्यते માને છે अनुभव करता है ॥२३॥

23 He who feels hot things to be cold, rough things to be smooth and soft things to be hard or having touched things, feels them to be other than what they are, is to be regarded as approaching his death.

अरिष्टभूता सर्वेन्द्रियविकृतय —

**अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम् ।**
**इन्द्रियैरधिकं पश्यन् पञ्चत्वमधिगच्छति ॥२४॥**

तीव्रम् તીવ્ર तीव्र, तप. તપ तप, विधिपूर्वकम् કે વિધિપૂર્વક या विधिपूर्वक, योगम् वा યોગ योगके, अन्तरेण વગર विना, इन्द्रियै ઇન્દ્રિયો વડે इन्द्रियोंसे, अधिकम् અધિક अधिक, पश्यन् દેખનાર देखनेवाला, पञ्चत्वम् પંચત્વ पंचत्वको, अधिगच्छति પામે છે प्राप्त होता है ॥२४॥

२१. न वा तान्–न वै तान् (च ‍‍ग)

२३ तेषु–तेन (ग)

24. If a man perceives subtle things that transcend the ordinary senses without having done either severe austerity or a systematic practice of yoga, he soon gives up the ghost

**इन्द्रियाणामृते दृष्टेरिन्द्रियार्थानदोषजान् ।**
**नरः पश्यति यः कश्चिदिन्द्रियैर्न स जीवति ॥२५॥**

**अदोषजान्** દોષથી ઉત્પન્ન નહિ થયેલા दोषसे न उत्पन्न हुए, **इन्द्रियार्थान्** ઇન્દ્રિયોના વિષયોને इन्द्रियोंके विषयोंको, **इन्द्रियाणाम्** ઇન્દ્રિયોની इन्द्रियोंकी, **दृष्टेः ऋते** જ્ઞાનશક્તિ વિના ज्ञानशक्तिके विना, **यः कश्चित्** જે કોઈ जो कोई, **नरः** મનુષ્ય पुरुष, **इन्द्रियैः** ઇન્દ્રિયોથી इन्द्रियोंसे, **पश्यति** જુએ છે देखता है **स** તે वह, **न जीवति** જીવતો નથી जीवित नहीं रहता ॥ २५ ॥

25 He who perceives the objects of sense-experience without his senses coming into actual contact with them and whose perceptions are like in one whose senses are not vitiated by morbidity, does not survive long.

**स्वस्थाः प्रज्ञाविपर्यासैरिन्द्रियार्थेषु वैकृतम् ।**
**पश्यन्ति येऽसद्बहुशस्तेषां मरणमादिशेत् ॥२६॥**

**ये** જે जो, **स्वस्थाः** સ્વસ્થ મનુષ્યો स्वस्थ पुरुष, **प्रज्ञाविपर्यासैः** પ્રજ્ઞાપરાધને લઈ प्रज्ञापराधसे, **इन्द्रियार्थेषु** ઇન્દ્રિયોના વિષયોમાં इन्द्रियोंके विषयोंमें, **असत्** અસત્ अवास्तविक, **वैकृतम्** વિકૃતિને विकारको, **बहुशः** ઘણીવાર बहुशः, **पश्यन्ति** જુએ છે देखते है **तेषाम्** તેઓનુ उनका, **मरणम्** તુરત મરણ થશે तुरन्त मरण होगा, **आदिशेत्** એમ કહેવુ ऐसा कहना चाहिए ॥२६॥

२५ दृष्टेरिन्द्रियार्थानदोषजान्–दृष्टेरिन्द्रियार्थान् पश्यति (क ध)
„ अदोषजान्–न पश्यति (क ग च ढ ढ ध)
„ नरः पश्यति यः कश्चिदिन्द्रियैर्न स जीवति–विपर्ययेण यो विद्यात्त विद्याद्विगतायुषम् (क. व. ध.)
२६. येऽसद्बहुशः–येषुबहुशस्तेषां (ध.)

26 Those who being in normal health perceive the sense-objects in distorted and unreal manner repeatedly owing to the impairment of their understanding, are to be regarded as approaching their end

अध्यायोक्तार्थसंग्रह —

**तत्र श्लोकः—**

**एतदिन्द्रियविज्ञानं यः पश्यति यथातथम् ।**
**मरणं जीवितं चैव स भिषक् ज्ञातुमर्हति ॥२७॥**

**तत्र** તે વિષયમાં उस विषयमें, **श्लोकः** ઉપસંહારનો શ્લોક છે કે उपसंहारका श्लोक है कि, **यः** જે जो, **एतत्** આ इस, **इन्द्रियविज्ञानम्** ઇન્દ્રિયવિજ્ઞાનને इन्द्रियविज्ञानको, **यथातथम्** સત્ય સ્વરૂપમાં सम्यक् रूपसे, **पश्यति** જુએ છે जानता है, **सः** તે वह, **भिषक्** વૈદ્ય वैद्य, **मरणम्** મરણ मृत्यु, **जीवितम् च** અને જીવનને और जीवनको, **ज्ञातुम्** જાણવાને जाननेमें, **अर्हति** શક્તિમાન છે समर्थ है ॥२७॥

Here is the recapitulatory verse—

27. The physician who perceives these foreboding symptoms of the sense faculties in their right nature knows the death or survival (of a patient)

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने इन्द्रियानीकमिन्द्रियं नाम चतुर्थोऽध्यायः ॥ ४ ॥**

**इति** આ પ્રમાણે इस प्रकार, **अग्निवेशकृते** અગ્નિવેશે રચેલા अग्निवेशसे बनाये, **चरकप्रतिसंस्कृते तन्त्रे** અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, **इन्द्रियस्थाने** ઇન્દ્રિયસ્થાન વિષે इन्द्रियस्थानमें, **इन्द्रियानीकम् इन्द्रियम्** 'ઇન્દ્રિયાનીક ઇન્દ્રિય' 'इन्द्रियानीक इन्द्रिय', **नाम** નામનો नामका, **चतुर्थ** ચોથો चौथा, **अध्याय.** અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ ४ ॥

Thus in the section on the Sensorial Prognosis of the treatise compiled by Agnivesa and revised by Caraka, the fourth chapter entitled 'The sensorial prognosis through examination of the functions of all the senses' is completed.

---

## पञ्चमोऽध्यायः ।

## પાંચમો અધ્યાય अध्याय पांचवाँ

## Chapter V

पूर्वरूपीयेन्द्रियोपक्रमः—

**अथातः पूर्वरूपीयमिन्द्रियं व्याख्यास्यामः ॥१॥**
**इति ह स्माह भगवानात्रेयः ॥२॥**

**अथ अत** હવે અહીંથી अब आगे, **पूर्वरूपीयम् इन्द्रियम्** પૂર્વરૂપીય ઇન્દ્રિય નામના અધ્યાયનું पूर्वरूपीय इन्द्रिय नामके अध्यायका **व्याख्यास्याम.** વ્યાખ્યાન કરશુ व्याख्यान करेंगे ॥१॥

**भगवान्** ભગવાન भगवान, **आत्रेय** આત્રેયે आत्रेयने, **इति ह** આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, **आह स** કહેલુ છે कहा है ॥२॥

1. We shall now expound the chapter entitled "The sensorial prognosis by the examination of premonitory symptoms."

2. Thus declared the worshipful Atreya.

उत्तराणामन्येषां च व्याधीनामरिष्टभूतपूर्वरूपाणि—

**पूर्वरूपाण्यसाध्यानां विकाराणां पृथक् पृथक् ।**
**भिन्नाभिन्नानि वक्ष्यामो भिषजां ज्ञानवृद्धये ॥ ३ ॥**

**भिषजाम्** વૈદ્યોના वैद्योंके, **ज्ञानवृद्धये** જ્ઞાનની વૃદ્ધિ માટે ज्ञानको बढ़ानेके लिए, **असाध्यानाम्** અસાધ્ય असाध्य, **विकाराणाम्** વિકારોના रोगोंके, **भिन्नाभिन्नानि** એક એક અને સમૂહગત एक एक और समूहगत, **पूर्वरूपाणि** પૂર્વરૂપો पूर्वरूप, **पृथक् पृथक्** જુદાં જુદાં पृथक् पृथक्, **वक्ष्यामः** કહેશું कहेंगे ॥ ३ ॥

3. We shall declare for the increase of the knowledge of the physicians, the premonitory symptoms, general and particular, of irremediable diseases, one by one.

**पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया ।**
**य विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः ॥४॥**

**ज्वरोक्तानि** જ્વરનિદાનમાં કહેલાં ज्वरनिदानमें कहे हुए **सर्वाणि** સર્વ सब, **पूर्वरूपाणि** પૂર્વરૂપો पूर्वरूप, **यम्** જેનામાં जिसमें, **अतिमात्रया** અતિ પ્રમાણમાં अति प्रबलतासे, **विशन्ति** પ્રવેશ કરે છે आविष्ट होते है, **एनम्** તેનામાં उस पुरुषमें, **ज्वर-पुरःसरः** જ્વરને પુરોગામી કરી ज्वरको पुरोगामी करके, **मृत्युः** મૃત્યુ मृत्यु, **विशति** પ્રવેશ કરે છે प्रविष्ट होती है ॥४॥

4 If all the premonitory symptoms of fever as have been already spoken of are seen in a man with excessive intensity, then surely death makes its entry into him preceded by fever.

**अन्यस्यापि च रोगस्य पूर्वरूपाणि यं नरम् ।**
**विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम् ॥५॥**

**अन्यस्य** બીજા अन्य, **रोगस्य** વ્યાધિના रोगके, **च अपि** પણ भी, **पूर्वरूपाणि** પૂર્વરૂપ पूर्वरूप, **अनेन कल्पेन** આ રીતે इस प्रकार, **यम् नरम्** જે પુરુષમાં जिस पुरुषमें, **विशन्ति** પ્રવેશ કરે છે प्रविष्ट होते है, **तस्य अपि** તેનુ પણ उसका भी, **मरणम्** મરણ मरण, **ध्रुवम्** ચોક્કસ છે निश्चित है ॥ ५ ॥

5 If all the premonitory symptoms of any other disease find a place in a man, similarly with excessive intensity

death is certain to befall him consequent upon that particular disease

राजयक्ष्मण अरिष्टभूतानि पूर्वरूपाणि—

**पूर्वरूपैकदेशांस्तु वक्ष्यामोऽन्यान् सुदारुणान् ।**
**ये रोगाननुबध्नन्ति मृत्युर्यैरनुबध्यते ॥ ६ ॥**

अन्यान् બીજા અન્ય सुदारुणान् સારી રીતે દારુણ અત્યંત दारुण, पूर्वरूपैकदेशान् પૂર્વરૂપના એક એક ભાગ पूर्वरूपके एक एक भागको, तु वक्ष्याम હવે કહેશુ कहेंगे, ये रोगान् अनुबध्नन्ति જે પરિણામે રોગને ઉત્પન્ન કરે છે जो पश्चात् भावी रोगोको उत्पन्न करते हैं, यै અને જે રોગોનો और जिन रोगोंकी. मृत्यु. મૃત્યુ मृत्यु. अनुबध्यते અનુબંધ થાય છે अनुबन्ध होती है ॥६॥

6. We shall now declare some of the most serious premonitory symptoms which are followed by diseases which in turn, are followed by death.

**बलं च हीयते यस्य प्रतिश्यायश्च वर्धते ।**
**तस्य नारीप्रसक्तस्य शोषोऽन्तायोपजायते ॥ ७ ॥**

यस्य જેનું जिसका, बलम् च બળ बल, हीयते ક્ષીણ થતું હોય છે क्षीण हो रहा है, यस्य અને જેનું और जिसका, प्रतिश्याय च સળેખમ प्रतिश्याय, वर्धते વધતું હોય છે बढ रहा है, तस्य તે उस, नारीप्रसक्तस्य સ્ત્રીમાં આસક્ત પુરુષનો स्त्रीप्रसक्त पुरुषका, शोष ક્ષય રોગ क्षय रोग, अन्ताय અન્ત કરનારો मृत्युके लिए, उपजायते બને છે होता है ॥७॥

7. Consumption in a person whose strength is waning, whose catarrhal condition is aggravated and who passionately is addicted to women, will hasten him to his death.

**श्वभिरुष्ट्रैः खरैर्वाऽपि याति यो दक्षिणां दिशम् ।**
**स्वप्ने यक्ष्माणमासाद्य जीवितं स विमुञ्चति ॥ ८ ॥**

स्वप्ने સ્વપ્નામાં स्वप्नमें, श्वभि. કુતરા कुत्तों, उष्ट्रै ઊંટ ऊंटों, खरै वा अपि કે ગધેડા પર બેસીને या गदहो पर सवार हो कर, यः જે जो, दक्षिणाम् દક્ષિણ दक्षिण, दिशम् દિશા તરફ दिशामें, याति જાય છે जाता है स તે वह, यक्ष्माणम् યક્ષ્મા રોગ यक्ष्मा रोगको, आसाद्य પ્રાપ્ત કરીને प्राप्त करके, जीवितम् જીવન जीवनको, विमुञ्चति છોડે છે त्याग करता है ॥८॥

8. The person that in his dreams travels south mounted on dogs, camels, or asses, will depart from life soon, being afflicted with consumption.

ज्वरस्य अरिष्टभूतानि पूर्वरूपाणि—

**प्रेतैः सह पिबेन्मद्यं स्वप्ने यः कृष्यते शुना ।**
**सुघोरं ज्वरमासाद्य जीवितं स विमुञ्चति ॥९॥**

यः જે जो, स्वप्ने સ્વપ્નમાં स्वप्नमें, प्रेतैः सह પ્રેતો સાથે प्रेतोंके साथ, मद्यम् पिबेत् મદ્ય પીએ છે शराब पीता है, य અને જે और जो, शुना કુતરાથી कुत्ते द्वारा, कृष्यते ઢસેડાય છે घसीटा जाता है, सः તે वह, सुघोरम् અતિશય ભયકર अति दारुण, ज्वरम् જ્વર ज्वरको, आसाद्य પ્રાપ્ત કરીને प्राप्त हो कर, जीवितम् જીવન जीवन, विमुञ्चति છોડે છે त्याग देता है ॥९॥

9 He who drinks intoxicating drinks in the company of shades or is dragged by dogs in his dreams, dies getting an attack of the most severe type of fever

रक्तपित्तस्य अरिष्टभूतानि पूर्वरूपाणि—

**लाक्षारक्ताम्बराभं यः पश्यत्यम्बरमन्तिकात् ।**

---

६. अनुबध्यते- एव बुध्यते (द)

„ मृत्युर्यैरनुबध्यते—मृत्युर्यैरवबुध्यते (ध.)

७. उपजायते—उपपद्यते (ग)

८ स्वप्ने यक्ष्माणमासाद्य जीवित स विमुञ्चति—स्वप्ने यक्ष्माणमाविश्य न जीवन्नवसृज्यते ))ब

९. सुघोर—स घोर (द)

„ जीवित स विमुञ्चति-स जीवनमवसृज्यते (ब.)

स रक्तपित्तमासाद्य तेनैवान्ताय नीयते ॥१०॥

**य** જે जो, **अन्तिकात्** નજીકમાં समीपसे, **अम्बरम्** આકાશને आकाशको, **लाक्षारक्त-** લાખના રંગથી રંગેલ **लाक्षाके** रंगसे रंगे, **अम्बराभम्** વસ્ત્ર જેવુ वस्त्रके सदृश, **पश्यति** જુએ છે देखता है, **स** તે वह, **रक्तपित्तम्** રક્તપિત્ત रक्तपित्तको, **आसाद्य** પ્રાપ્ત કરીને प्राप्त हो कर, **तेन एव** તેનાથી જ उससे ही, **अन्ताय** મૃત્યુ मृत्युको, **नीयते** પામે છે प्राप्त करता है ॥१०॥

10. He who sees the sky nearby like a lac-colored cloth, will suffer from hemothermia and die

रक्तस्रग्रक्तसर्वाङ्गो रक्तवासा मुहुर्हसन् ।
यः स्वप्ने ह्रियते नार्या स रक्तं प्राप्य सीदति ॥११॥

**स्वप्ने** સ્વપ્નમાં स्वप्नमें, **रक्तस्रक्** રાતી માળાવાળો लाल माला धारण किये हुए, **रक्तसर्वाङ्गः** સર્વ રાતાં અંગવાળો सब लाल अंगोंवाला, **रक्तवासाः** રાતાં વસ્ત્રવાળો लाल वस्त्र धारण किये हुए, **मुहुः हसन्** અને વારંવાર હસતો और बारबार हसता हुआ, **य** જે जो, **नार्या** સ્ત્રીથી स्त्रीके द्वारा, **ह्रियते** ખેંચી જવાય છે खींचा जाता है, **स** તે वह, **रक्तम्** રક્તપિત્ત रक्तपित्तको, **प्राप्य** પ્રાપ્ત કરીને प्राप्त हो कर, **सीदति** મરણ પામે છે मर जाता है ॥११॥

11. He who finds himself in his dreams wearing red garlands and his whole body tinted red and is clad in red garments and while in a fit of laughter, finds himself being dragged by a woman, dies afflicted with hemothermia.

गुल्मस्य अरिष्टभूतानि पूर्वरूपाणि—

शूलाटोपान्त्रकूजाश्च दौर्बल्यं चातिमात्रया ।
नखादिषु च वैवर्ण्यं गुल्मेनान्तकरो ग्रहः ॥१२॥

**शूल-** શૂલ शूल, **आटोप** આટોપ आटोप, **अन्त्रकूजाः च** આંતરડાનો અવાજ अन्त्रकूजन **अतिमात्रया** અતિશય अत्यंत, **दौर्बल्यम् च** દુર્બળતા दुर्बलता, **नखादिषु** અને નખાદિકમાં और नखादियोंमें, **वैवर्ण्यम् च** વિવર્ણતા विवर्णता, **ग्रह.** એ લક્ષણ यह लक्षण, **गुल्मेन** ગુલ્મથી गुल्मसे, **अन्तकरः** મૃત્યુ કરનાર છે मृत्युकारक है ॥१२॥

12 Colicky pain, meteorism and intestinal gurgling, excessive debility and discoloration of the nails—these are the premonitory symptoms of gulma that terminates fatally

लता कण्टकिनी यस्य दारुणा हृदि जायते ।
स्वप्ने गुल्मस्तमन्ताय क्रूरो विशति मानवम् ॥१३॥

**स्वप्ने** સ્વપ્નમાં स्वप्नमें, **दारुणा** દારુણ दारुण, **कण्टकिनी** કાંટાળી काटोंवाली, **लता** લતા लता, **यस्य हृदि** જેના હૃદયભાગ પર जिसके हृदयदेश पर **जायते** ઉત્પન્ન થાય उत्पन्न होती है, **तम्** તે उस, **मानवम्** મનુષ્યમાં पुरुषमें, **क्रूर** ક્રૂર क्रूर **गुल्म** ગુલ્મ गुल्म, **अन्ताय** મૃત્યુ કરવા માટે मृत्युके लिए, **विशति** પ્રવેશ કરે છે प्रविष्ट होता है ॥१३॥

13. He in whose dreams, a vicious thorny creeper is seen to spring from his cardiac region, dies affected by a severe type of gulma which ends fatally.

कुष्ठस्य अरिष्टभूतानि पूर्वरूपाणि—

कायेऽल्पमपि संस्पृष्टं सुभृशं यस्य दीर्यते ।
क्षतानि च न रोहन्ति कुष्ठैर्मृत्युर्हिनस्ति तम् ॥१४॥

**काये** શરીરે शरीरमें, **अल्पम् अपि** જરા પણ थोडा भी, **संस्पृष्टम्** લાગતાં छूये जाने पर, **यस्य** જેની ચામડી जिसकी त्वचा, **सुभृशम्** સારી પેઠે अत्यन्त, **दीर्यते** ફાટી જાય છે फट जाती है, **क्षतानि च** અને ઘારાંઓ और घाव, **न रोहन्ति** રુઝાતાં નથી नहीं भरते, **मृत्यु** તો મૃત્યુ तो मृत्यु, **तम्** તેને उसको, **कुष्ठैः** કુષ્ઠથી कुष्ठोंद्वारा, **हिनस्ति** મારી નાખે છે मार डालती है ॥१४॥

---

११ ह्रियते–नीयते (द ध.)
,, ,, –क्रीडते (प.)

14. The man on whose body even a small bruise breaks open into a big wound and in whose body cuts and scratches do not heal, him does death overtake preceded by dermatosis

नग्नस्याज्यावसिक्तस्य जुह्वतोऽग्निमनर्चिषम् ।
पद्मान्युरसि जायन्ते स्वप्ने कुष्ठैर्मरिष्यतः ॥१५॥

स्वप्ने સ્વપ્નમાં स्वप्नमें, नग्नस्य નગ્ન नगे, आज्यावसिक्तस्य ઘીથી લિપ્ત घी चुपड़े हुए, अनर्चिषम् અને જ્વાલારહિત और ज्वालारहित, अग्निम् અગ્નિમાં अग्निमें, जुह्वत. હોમ કરતા होम करते हुए, कुष्ठै मरिष्यत. કુષ્ઠ રોગથી મરવાવાળા પુરુષની कुष्ठोंद्वारा मरनेवाले पुरुषकी, उरसि છાતી પર छाती पर, पद्मानि પદ્મો पद्म, जायन्ते ઉત્પન્ન થાય છે उत्पन्न होते है ॥१५॥

15 He who sees himself in his dreams naked and besmeared over with ghee and pouring libation on a flame less fire, or who dreams of lotuses growing from his chest, dies affected with dermatosis.

प्रमेहस्य अरिष्टभूतानि पूर्वरूपाणि—

स्नातानुलिप्तगात्रेऽपि यस्मिन् गृध्नन्ति मक्षिकाः ।
स प्रमेहेण संस्पर्शं प्राप्य तेनैव हन्यते ॥१६॥

स्नातानुलिप्तगात्रे अपि નાહીને ગાત્રો પર લેપન કર્યું હોય છતાં પણ स्नान करके लेपन कियेहुए शरीरवाले भी, यस्मिन् જેના પર जिसपर मक्षिका' માખીઓ मक्खियाँ, गृध्नन्ति લોભાઈને આવે चिपट जाती है, स' તે वह, प्रमेहेण પ્રમેહને प्रमेहसे, संस्पर्शम् प्राप्य પ્રાપ્ત કરીને आक्रान्त हो कर, तेन एव તેનાથી જ उसीके द्वारा, हन्यते હણાય છે मारा जाता है ॥ १६ ॥

16 He, on whose body flies swarm though he has bathed and painted his limbs with fragrant substances, will be affected with urinary disorder and will perish of that very disease.

स्नेहं बहुविधं स्वप्ने चण्डालैः सह यः पिबेत् ।
बध्यते स प्रमेहेण स्पृश्यतेऽन्ताय मानवः ॥१७॥

स्वप्ने સ્વપ્નમાં स्वप्नमें, चण्डालैः सह ચડાલો સાથે चण्डालोंके साथ, य જે जो पुरुष, बहुविधम् બહુ પ્રકારના बहुत प्रकारके, स्नेहम् સ્નેહનું स्नेहको, पिबेत् પાન કરે છે पीता है, स मानव' તે મનુષ્યને वह मनुष्य, प्रमेहेण પ્રમેહ प्रमेहसे, बध्यते લાગુ પડે છે युक्त होता है, अन्ताय स्पृश्यते અને તે પ્રમેહનું લાગુ પડવું તેના અંત માટે થાય છે और उस प्रमेहसे युक्त होना उसके मरणके लिए होता है ॥१७॥

17. He, who in his dreams drinks various kinds of unctuous preparations in the company of chandalas (the untouchaple class of people) will be affected with urinary disorder which will lead to his end.

उन्मादस्य अरिष्टभूतानि पूर्वरूपाणि—

ध्यानायासौ तथोद्वेगो मोहश्चास्थानसंभवः ।
अरतिर्बलहानिश्च मृत्युरुन्मादपूर्वकः ॥ १८ ॥

ध्यानायासौ ચિંતા-શ્રમ ध्यान-आयास, तथा તથા तथा, उद्वेगः ઉદ્વેગ उद्वेग, अस्थान-संभव मोहः च અને અસ્થાને ઉત્પન્ન થયેલો મોહ और अकारण मोह, अरतिः બેચેની अरति, बलहानिः च અને નિર્બળતા આ પૂર્વરૂપો થતાં और बलहानि इन पूर्वरूपोंके होने पर, उन्मादपूर्वक. ઉન્માદ ઉત્પન્ન થઈને उन्माद हो कर, मृत्युः મૃત્યુ થાય છે मृत्यु होती है ॥ १८ ॥

18 Reverie, weariness, inopportune excitement and delusion, indifference to things and loss of strength—these are the premonitory symptoms of insanity which is to end fatally.

१६. यस्मिन् गृध्नन्ति मक्षिका.—यस्मिन् गृध्यन्ति मक्षिका (ख)

१७ ५ पिबेत्—य पिबन् (ख थ)
,, बध्यते—बुध्यते (ड.)

**आहारद्वेषिणं पश्यन् लुप्तचित्तमुदर्दितम् ।**
**विद्याद्धीरो मुमूर्षुं तमुन्मादेनातिपातिना ॥१९॥**

**आहारद्वेषिणम्** આહારનો દ્વેષ કરનાર आहारके द्वेषी, **लुप्तचित्तम्** જેની વિજ્ઞાનશક્તિ લોપ પામી હોય એવા जिसकी विज्ञानशक्ति लुप्त हो गई हो ऐसे, **उदर्दितम्** અને ઉદર્દવાળા પુરુષને और उदर्दसे युक्त पुरुषको, **पश्यन्** જોઈ देख कर, **धीरः धीर** વૈદ્ય बुद्धिमान वैद्य, **अतिपातिना** જોરથી આવી પડતા विनाशक, **उन्मादेन** ઉન્માદથી उन्मादके द्वारा, **तम्** તેને उसको, **मुमूर्षुम्** મરણોન્મુખ मरणोन्मुख, **विद्यात्** જાણવો जाने ॥१९॥

19. Seeing a man, who has detestation for food, who has lost his wits and is affected with urticaria, the wise physician should recognise him as destined to die by a violent attack of insanity.

**क्रोधनं त्रासबहुलं सकृत्प्रहसिताननम् ।**
**मूर्च्छापिपासाबहुलं हन्त्युन्मादः शरीरिणम् ॥२०॥**

**क्रोधनम्** ક્રોધી क्रोधशील, **त्रासबहुलम्** બહુ ત્રાસ આપનાર अति त्रासदायक, **सकृत्** સહસા सहसा, **प्रहसिताननम्** હસતા મોઢાવાળા हंसमुखे, **मूर्च्छापिपासा-** અને મૂર્ચ્છા તથા તરસની और मूर्च्छा तथा प्यासकी, **बहुलम्** બહુલતાવાળા अतिशयतावाले, **शरीरिणम्** શરીરધારીને मनुष्यको, **उन्माद** ઉન્માદ उन्माद, **हन्ति** મારી નાખે છે मार डालता है ॥ २० ॥

20. The man who suffers from extreme irritability, great terror, sudden smiles and who often faints and feels great thirst, him does insanity seize and destroy

**नृत्यन् रक्षोगणैः सार्कं यः स्वप्नेऽम्भसि सीदति ।**
**स प्राप्य भृशमुन्मादं याति लोकमतः परम् ॥२१॥**

**स्वप्ने** સ્વપ્નમાં स्वप्नमें, **रक्षोगणैः** રાક્ષસોના સમૂહ राक्षसों के गणोंके, **साकम्** સાથે साथ, **नृत्यन्** નાચતાં नृत्य करता हुआ, **यः** જે जो, **अम्भसि** જલમાં जलमें **सीदति** ડૂબી જાય છે डूब जाता है, **सः ते** वह, **भृशम् उन्मादम्** ખૂબ ઉન્માદ पुष्कल उन्मादको, **प्राप्य** પ્રાપ્ત કરીને प्राप्त हो कर, **अतः** અહીંથી इस लोकसे, **परम् लोकम्** પરલોકમાં परलोकमें, **याति** જાય છે जाता है ॥ २१ ॥

21 He who, dancing in his dreams with crowds of demons gets drowned in water will be affected with violent insanity and dies

अपस्मारस्य अरिष्टभूतानि पूर्वरूपाणि—

**असत्तमः पश्यति यः शृणोत्यप्यसतः स्वनान् ।**
**बहून् बहुविधान् जाग्रत् सोऽपस्मारेण वध्यते ॥२२॥**

**जाग्रत्** જાગૃત અવસ્થામાં जागृत अवस्थामें, **यः** જે जो, **असत् तम** નહિ હોનાર અંધકારને मिथ्या अन्धकार, **पश्यति** જુએ છે देखता है, **असतः अपि** અને ન હોવા છતાં પણ और नहीं होते हुए भी, **बहुविधान्** બહુ પ્રકારના नाना प्रकारके, **बहून्** બહુ बहुतसे, **स्वनान्** અવાજો स्वरोंको, **शृणोति** સાંભળે છે सुनता है, **स** તે वह, **अपस्मारेण** અપસ્મારથી अपस्मारसे, **वध्यते** હણાય છે मारा जाता है ॥ २२ ॥

22. The man, who, when fully awake, perceives darkness which does not exist, and hears many and varied noises that are non-existent, dies afflicted with epilepsy

**मत्तं नृत्यन्तमाविध्य प्रेतो हरति यं नरम् ।**
**स्वप्ने हरति तं मृत्युरपस्मारपुरःसरः ॥ २३ ॥**

**स्वप्ने** સ્વપ્નમાં स्वप्नमें, **मत्तम्** મત્ત થઈને मत्त हो कर, **नृत्यन्तम्** નાચતા नाचते हुए, **यम् नरम्** જે પુરુષને जिस मनुष्यको, **प्रेत.** પ્રેત प्रेत, **आविध्य** ઊંધે માથે કરી उलटा उठा कर, **हरति** હરી જાય છે ले जाता है, **तम्** તેને उसको, **अपस्मार-पुर.सरः** અપસ્મારપુરસ્સર अपस्मारपूर्वक, **मृत्यु** મૃત્યુ मृत्यु, **हरति** હરી જાય છે ले जाती है ॥२३॥

२१. सीदति–सज्जति (ध)

extreme opposition to the stony element Accordingly its use is prohibited as being incompatible with mineral pitch which is a stone-exudate Milks, butter-milk, meat-juices, gruels, waters, cow's urine and various kinds of decoctions are recommended for mixing with mineral pitch. These should be made use of as required by the occasion There is no curable disease on earth which mineral pitch cannot perforce subdue. When administered at right time, well prepared and in the right manner, it will secure for the healthy subject the optimum measure of vitality Thus has been described 'The procedure of vitalization by means of Mineral Pitch'

तृतीयरसायनपादोक्तविषया —

तत्र श्लोकः—

करप्रचितिके पादे दश षट् च महर्षिणा ।
रसायनानां सिद्धानां संयोगाः समुदाहृता· ॥६६॥

तत्र તે વિષયમા उस विषयमें, श्लोक ઉપસંહારનો શ્લોક છે કે उपसंहारका श्लोक है कि, महर्षिणा મહર્ષિએ महर्षिने, करप्रचितिके पादे 'કરપ્રચિતીય' નામના પાદમા 'करप्रचितीय' नामके पादमें, सिद्धानाम् સિદ્ધ सिद्ध रसायनानाम् રસાયનોના रसायनोंके दश षट् च સોળ सोलह, संयोगा પ્રયોગો प्रयोग समुदाहृता. સારી રીતે વર્ણવ્યા છે अच्छी तरहसे कहे है ॥ ६६ ॥

Here is the recapitulatory verse—

66 In this quarter entitled 'Culled with the hand' the great sage has given out the formulas of sixteen tried procedures of vitalization.

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सास्थाने रसायनाध्याये करप्रचितीयो नाम रसायनपादस्तृतीयः ॥१-(३)॥

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમા और चरकके द्वारा संस्कृत इस शास्त्रके, चिकित्सास्थाने ચિકિત્સાસ્થાન વિષે चिकित्सास्थानमें, रसायनाध्याये રસાયનાધ્યાયમાં रसायनाध्यायमें, करप्रचितीय 'કરપ્રચિતીય' 'करप्रचितीय', नाम નામનો नामका, तृतीय. ત્રીજો तीसरा, रसायनपाद રસાયનપાદ સંપૂર્ણ થયો रसायनपाद समाप्त हुआ ॥ १-(३) ॥

1-(3) Thus in the Section on Therapeutics, in the treatise compiled by Agnivesa and revised by Caraka, the third quarter entitled 'Culled with the hand' of the first chapter on vitalization, is completed.

---

## रसायनाध्याये चतुर्थः पादः

રસાયનાધ્યાયમાં ચોથો પાદ रसायनाध्यायमें चौथा पाद

### The fourth quarter of the chapter on Vitalization

आयुर्वेदसमुत्थानीयरसायनपादोपक्रम· —

अथात आयुर्वेदसमुत्थानीयं रसायनपादं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

अथ अतः હવે અહીંથી अब आगे, आयुर्वेदसमुत्थानीयम् 'આયુર્વેદસમુત્થાનીય' નામના 'आयुर्वेदसमुत्थानीय' नामके रसायनपादम् ચોથા રસાયનપાદનું चौथे रसायनपादका, व्याख्यास्याम વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન્ भगवान, आत्रेय આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥ २ ॥

1. We shall now expound the fourth quarter entitled 'The Advent of the Science of Life' of the chapter on vitalization.

2. Thus declared the worshipful Atreya.

रसायनज्ञानार्थमृषीणामिन्द्रसमीपे गमनम्—

**ऋषयः खलु कदाचिच्छालीना यायावराश्च ग्राम्यौषध्याहाराः सन्तः सांपन्निका मन्दचेष्टा नातिकल्याश्च प्रायेण बभूवुः ।**

कदाचित् કોઈ વખત किसी समय, शालीना. ઘરમાં સ્થિર થઈ રહેનારા गृहोंमें स्थिर हो कर रहेनेवाले, यायावराः च तथा એક સ્થળેથી બીજે સ્થળે ભ્રમણ કરનારા तथा एक स्थलसे दूसरे स्थल पर भ्रमण करनेवाले, ऋषय खलु ઋષિઓ ऋषि लोग, ग्राम्य-ओषधिआहारा सन्त નગરવાસી મનુષ્યોને યોગ્ય આહારનો ઉપયોગ કરનાર થઈ नगरवासी मनुष्योंके योग्य आहारका उपयोग करनेवाले हो कर, सांपन्निकाः ધનવાન મનુષ્યો જેવા धनी मनुष्योंके सदृश, मन्दचेष्टाः આળસુ आलसी, प्रायेण અને ઘણુંખરું और प्राय., न अनिकल्या च અતિ સ્વસ્થતાથી રહિત अति स्वस्थतामे रहित, बभूवु થઈ ગયા હતા हो गये थे।

3-(1). It came about that in the course of time the rishis, both the cloistered and the peripatetic, became by taking to an urbanized dietary and drugs, luxurious and leisurely in their habits, and for the most part deficient in health.

**ते सर्वासामितिकर्तव्यतानामसमर्थाः सन्तो ग्राम्यवासकृतमात्मदोषं मत्वा पूर्वनिवासमपगतग्राम्यदोषं शिवं पुण्यमुदारं मेध्यमगम्यमसुकृतिभिर्गङ्गाप्रभवममरगन्धर्वकिन्नरानुचरितमनेकरत्ननिचयमचिन्त्याद्भुतप्रभावं ब्रह्मर्षिसिद्धचारणानुचरितं दिव्यतीर्थौषधिप्रभवमतिशरण्यं हिमवन्तममराधिपतिगुप्तं जग्मुर्भृग्वङ्गिरोऽत्रिवसिष्ठकश्यपागस्त्यपुलस्त्यवामदेवासितगौतमप्रभृतयो महर्षयः ॥ ३ ॥**

ते ते वे, भृगु- ભૃગુ भृगु, अङ्गिर- અંગિરા अंगिरा, अत्रि-वसिष्ठ- અત્રિ- વસિષ્ઠ अत्रि- वसिष्ठ, कश्यप-अगस्त्य- કશ્યપ- અગસ્ત્ય कश्यप- अगस्त्य, पुलस्त्य- પુલસ્ત્ય पुलस्त्य, वामदेव- વામદેવ वामदेव, असित- અસિત असित, गौतम- ગૌતમ गौतम, प्रभृतय વગેરે आदि, महर्षय મહર્ષિઓ महर्षि, सर्वासाम् સર્વે सब, इतिकर्तव्यतानाम् કર્તવ્ય કાર્યોમાં कर्तव्य कार्योंमें, असमर्था. અસમર્થ असमर्थ, सन्त. થવાને લીધે होनेसे, ग्राम्यवासकृतम् ગ્રામવાસથી થયેલા ग्रामवासके कारण उत्पन्न, आत्मदोषम् પોતાના દોષને अपने दोषको, मत्वा જાણીને जान कर, अपगतग्राम्यदोषम् ગ્રામ્ય દોષથી રહિત ग्राम्य दोषसे रहित, शिवम् કલ્યાણકારક कल्याणकारक, पुण्यम् પુણ્ય पुण्य, उदारम् ઉદાર उदार, मेध्यम् પવિત્ર पवित्र, असुकृतिभिः પુણ્યરહિત પુરુષોથી पुण्यरहित पुरुषोंसे, अगम्यम् પ્રવેશ ન કરી શકાય એવા अगम्य, गङ्गाप्रभवम् ગંગાના ઉત્પત્તિસ્થાનરૂપ गंगाके उत्पत्तिस्थान, अमर गन्धर्व- દેવ, ગન્ધર્વ देवता, गन्धर्व, किन्नरानुचरितम् અને કિન્નરના સંચારવાળા और किन्नरोंसे सेवित, अनेकरत्न- અનેક રત્નોના अनेक रत्नोंके, निचयम् સમૂહવાળા समूहवाले, अचिन्त्य-अद्भुत- અચિંત્ય અને અદ્ભુત कल्पनासे पर तथा अद्भुत, प्रभावम् પ્રભાવવાળા प्रभाववाले, ब्रह्मर्षि-सिद्ध- બ્રહ્મર્ષિ, સિદ્ધ ब्रह्मर्षि, सिद्ध, चारणानुचरितम् અને ચારણોના સંચારવાળા और चारणोंसे सेवित, दिव्यतीर्थ- દિવ્ય તીર્થો दिव्य तीर्थ ओषधिप्रभवम् અને ઔષધિઓના ઉત્પત્તિસ્થાનરૂપ तथा ओषधिके उत्पत्तिस्थान, अतिशरण्यम् શરણાગતને અત્યંત આશ્રય આપનાર शरणागतको अत्यन्त आश्रय देनेवाले, अमराधिपतिगुप्तम् ઇન્દ્રથી રક્ષાયેલા इन्द्रसे रक्षित, पूर्वनिवासम् પોતાના પૂર્વ નિવાસસ્થાનરૂપ अपने पूर्व निवासस्थान, हिमवन्तम् હિમાલયમાં हिमालयमें, जग्मु ગયા गये ॥३॥

३. सापन्निका—सापत्तिका (प.)
,, गन्धर्वकिन्नर—गन्धर्वयक्षकिन्नर (ग द)

३. अतिशरण्य—अभिशरण्य (ध.)
,, अमराधिपतिगुप्त—अमराधिपाभिगुप्त (ध.)

3. Finding themselves, in consequence, unequal to the observance of the code of obligations which their order entailed, and realising that the blame lay with their urban residence, these rishis, headed by Bhrigu, Angiras, Atri, Vasishtha, Kasyapa, Agastya, Pulastya, Vamadeva, Asita, Gautama and others returned to their original dwelling, remote from the evils of city life, namely the Himalayas, which are auspicious, holy, majestic, pure, inaccessible to any but the righteous, which are the source of the Ganges frequented by the Gods, the Gandharvas and Kinnaras; the store house of various kinds of gems possessed of inconceivably wonderful virtues; frequented by the divine sages, adepts and panegyrists; the birth-place of divine streams and medicinal plants; and the holiest of sanctuaries, being under the protection of the Lord of Immortals himself.

तान् प्रतीन्द्रस्योपदेशः —

तानिन्द्रः सहस्रदृगमरगुरुरब्रवीत्—स्वागतं ब्रह्मविदां ज्ञानतपोधनानां ब्रह्मर्षीणाम्। अस्ति ननु वो ग्लानिरप्रभावत्वं वैस्वर्यं वैवर्ण्यं च ग्राम्यवासकृतमसुखमसुखानुबन्धं च; ग्राम्यो हि वासो मूलमशस्तानां, तत् कृतः पुण्यकृद्भिरनुग्रहः प्रजानां, स्वशरीरमवेक्षितुं कालः कालश्चायमायुर्वेदोपदेशस्य ब्रह्मर्षीणाम्; आत्मनः प्रजानां चानुग्रहार्थमायुर्वेदमश्विनौ मह्यं प्रायच्छतां, प्रजापतिरश्विभ्यां, प्रजापतये ब्रह्मा, प्रजानामल्पमायुर्जराव्याधिबहुलमसुखमसुखानुबन्धमल्पत्वादल्पतपोदमनियमदानाध्ययनसंचयं मत्वा पुण्यतममायुःप्रकर्षकरं जराव्याधिप्रशमनमूर्जस्करममृतं शिवं शरण्यमुदारं भवन्तो मत्तः श्रोतुमर्हन्त्यथोपधारयितुं प्रकाशयितुं च प्रजानुग्रहार्थमार्षं ब्रह्म च प्रति मैत्रीं कारुण्यमात्मनश्चानुत्तमं पुण्यमुदारं ब्राह्ममक्षयं कर्मेति ॥ ४ ॥

सहस्रदृक् હજાર આંખવાળા हजार आखोंवाले, अमरगुरु દેવશ્રેષ્ઠ अमरश्रेष्ठ, इन्द्र ઇન્દ્રે इन्द्रने, तान् તે ઋષિઓને उन ऋषिओंको, अब्रवीत् કહ્યુ कहा, ज्ञानतपोधनानाम् જ્ઞાન અને તપ જેનું ધન છે એવા ज्ञान और तप जिनका धन है ऐसे, ब्रह्मविदाम् બ્રહ્મવેત્તા ब्रह्मवेत्ता, ब्रह्मर्षीणाम् આપ બ્રહ્મર્ષિઓનુ आप ब्रह्मर्षियोंका, स्वागतम् સ્વાગત હો स्वागत हो, ग्लानि ગ્લાનિ ग्लानि, अप्रभावत्वम् તેજહીનતા तेजहीनता, वैस्वर्यम् સ્વરવિકૃતિ वैस्वर्य, वैवर्ण्यम् च વિવર્ણતા विवर्णता, ग्राम्यवास-कृतम् શહેરમાં વસવાથી થયેલુ नगरवासमेंसे उत्पन्न हुआ, असुख-अनुबन्धम् દુઃખોના અનુબંધવાળુ दुखोंके अनुबन्धवाला, असुखम् અનારોગ્ય अनारोग्य, वः આપમાં आपमें, अस्ति ननु જોવામાં આવે છે देखा जाता है, हि કારણ કે क्योंकि, ग्राम्यः ગ્રામ્ય ग्राम्य, वास વાસ वास, अशस्तानाम् સર્વ અમંગળનુ सब अशुभका, मूलम् કારણ છે कारण है, तत् તેથી इस लिए, पुण्यकृद्भिः આપ પુણ્ય કર્મવાળાઓએ आप पुण्य करनेवालोंने, प्रजानाम् આરોગ્યના સાધનભૂત ધર્મોપદેશદ્વારા પ્રજા પર आरोग्यके साधनभूत धर्मोपदेशसे प्रजा पर, अनुग्रहः અનુગ્રહ उपकार, कृत કર્યો છે किया है, स्वशरीरम् પોતાના શરીરની अपने शरीर पर, अवेक्षितुम् સંભાળ રાખવાનો ध्यान रखनेका, काल આ સમય છે यह समय है, ब्रह्मर्षीणाम् અને આપ બ્રહ્મર્ષિઓને और आप ब्रह्मर्षियोंको, आयुर्वेदोपदेशस्य च આયુર્વેદના ઉપદેશનો પણ आयुर्वेदके उपदेशका भी, अयम् આ यही, काल સમય છે समय है, अश्विनौ અશ્વિનીકુમારોએ अश्विनीकुमारोंने, आत्मन. પોતાના अपने, प्रजानाम् च તથા પ્રજાના तथा प्रजाके, अनुग्रहार्थम्

४ अमरगुरुरब्रवीत्—अमरगुरुवरोऽब्रवीत् (ब.)
,, ननु वो ग्लानि°—अस्ति मनोग्लानि° (ब.)
,, स्वशरीरमवेक्षितुम्—स्वशरीरमरक्षिभिः (क ख, द. ब.)

४ उदार भवन्तो मत्तः—उदार मत्त (क.)
,, ब्रह्म च—ब्रह्मचर्य (ब.)

અનુગ્રહ માટે अनुग्रहके लिए, मह्यम् મને मुझे, आयुर्वेदम् આયુર્વેદનો ઉપદેશ आयुर्वेदका उपदेश, प्रायच्छताम् કર્યો હતો दिया था, प्रजापतिः પ્રજાપતિએ प्रजापतिने, अश्विभ्याम् અશ્વિનીકુમારોને આયુર્વેદનો ઉપદેશ કર્યો હતો अश्विनीकुमारोंको आयुर्वेदका उपदेश दिया था, ब्रह्मा અને બ્રહ્માએ और ब्रह्माने, प्रजापतये પ્રજાપતિને આયુર્વેદનો ઉપદેશ કર્યો હતો प्रजापतिको आयुर्वेदका उपदेश दिया था, प्रजानाम् પ્રજાનું प्रजाके, आयु આયુષ્યને आयुको, अल्पम् અલ્પ अल्प, जरा- व्याधि- बहुलम् વૃદ્ધાવસ્થા તથા વ્યાધિની અધિકતાવાળું वृद्धावस्था तथा व्याधियोंकी अधिकतावाली, असुखम् આરોગ્યરહિત आरोग्यसे रहित, असुखानुबन्धम् દુઃખના અનુબંધવાળું दुःखके अनुबन्धवाली, अल्पत्वात् અને અલ્પ હોવાથી और अल्प होनेसे, अल्प- થોડાં थोडे, तपः- તપ तप, दम- દમ दम, नियम- નિયમ नियम, अध्ययन- તથા અધ્યયનના तथा अध्ययनके, सचयम् સંચયવાળું संचयवाली, मत्वा માની मान कर, मैत्रीम् બ્રહ્માએ મૈત્રી ब्रह्माने मैत्री कारुण्यम् કરુણા करुणा, आत्मनः અને પોતાના और अपने, ब्राह्मम् બ્રહ્મા- પણાને લગતા ब्रह्मात्वके सम्बन्धी, अनुत्तमम् અત્યંત ઉત્તમ अत्यंत उत्तम, पुण्यम् પવિત્ર पवित्र, उदारम् ઉદાર उदार, अक्षयम् તેમજ અખૂટ एवं क्षीण न होनेवाले, कर्म કર્મને कर्मका, प्रति ઉદ્દેશી उद्देश रख कर, पुण्यतमम् પ્રજાપતિને જેનો ઉપદેશ કર્યો હતો તે અત્યંત પવિત્ર प्रजापतिको जिसका उपदेश दिया था उस अत्यन्त पवित्र, आयु - प्रकर्षकरम् આયુષ્યની અધિકતા કરનારા आयुकी अधिकता करनेवाले, जरा- વૃદ્ધાવસ્થા वृद्धावस्था, व्याधि- તથા વ્યાધિને तथा व्याधिको, प्रशमनम् શાંત કરનારા शांत करनेवाले, ऊर्जस्करम् ઉત્સાહ આપનારા उत्साह देनेवाले, अमृतम् અમૃતરૂપ अमृतरूप, शिवम् કલ્યાણકારક कल्याणकारक, शरण्यम् શરણાગતને આશ્રય આપનાર शरणागतको आश्रय देनेवाले, उदारम् અને ઉદાર આયુર્વેદને और उदार आयुर्वेदको, मत्त મારી પાસે मुझसे, श्रोतुम् સાંભળવા सुननेके लिए, अथ उपधारयितुम् સાંભળ્યા પછી તેનું ધારણ કરવા सुननेके बाद उसको धारण करनेके लिए, प्रजा- अनुग्रहार्थम् અને પ્રજાના અનુગ્રહ માટે और प्रजाके अनुग्रहके लिए, आर्षम् આયુર્વેદોક્ત आयुर्वेदोक्त, ब्रह्म च જ્ઞાનનો ज्ञानका प्रकाशयितुम् च પ્રકાશ કરવા प्रकाश करनेके लिए, भवन्त આપ आप, अर्हन्ति इति યોગ્ય છો योग्य हैं ॥ ४ ॥

4. Addressing them, the myriad-eyed chief of the gods said 'Welcome to you, O. knowers of Brahma, rich in understanding and spiritual endeavour, seers of the Brahmic order ! I see, you are afflicted with weariness and loss of lustre and have suffered impairment in voice and complexion These are the evils resulting from living in towns and its unhappy consequences. Town-dwelling is indeed the source of all evils. Therefore, by coming here you, who are doers of good, have conferred a boon on humanity. The time has come for Brahmic sages to protect their own health and for the imparting of the Science of Life. The Aswins imparted to me the Science of Life for my own and the people's benefit Prajapati has given it to them and Brahma to Prajapati The life of human beings is indeed short and that, too, full of infirmities and afflictions, of unhappiness and unhappy consequences Having regard to the fact, that life being short, the store of merit which one may gather by spiritual endeavour, sense control, discipline, alms-giving and study, is limited, it behoves you to learn from me, as also to retain and to publish for the benefit of humanity, the knowledge of this most sacred Science of Life, which

makes for the plentitude of life, the alleviation of infirmity and disease, the increase of vitality, and which is immortal, beneficient, which accords protection and is lofty This work is befitting sages and seers and calls for good-will, compassion, the highest virtue nobility, brahmic and imperishable quality."

तच्छ्रुत्वा विबुधपतिवचनमृषयः सर्वे एवामरवरमृग्भिस्तुष्टुवुः, प्रहृष्टाश्च तद्वचनमभिननन्दुश्चेति ॥ ५ ॥

सर्वे एव સઘળા सब, ऋषय ઋષિઓએ ऋषियोंने, तत् તે उस, विबुधपति-वचनम् દેવેન્દ્રનુ વચન देवश्रेष्ठके वचनको, श्रुत्वा સાંભળીને सुन कर, अमरवरम् ઇન્દ્રની इन्द्रकी ऋग्भिः ઋચાઓ વડે ऋचाओंसे, तुष्टुवु સ્તુતિ કરી स्तुति की, प्रहृष्टाः च અને પ્રસન્ન થઈને और प्रसन्न हो कर, तत्-वचनम् તેના ઉપદેશને उसके उपदेशको, अभिननन्दु च इति અભિનંદન આપ્યુ अभिनन्दन किया ॥ ५ ॥

5· Hearing these words of the chief of the gods, all the assembled sages felicitated the foremost of the immortals with praise-psalms and being delighted, applauded his words.

इन्द्रोक्त रसायनम्—

अथेन्द्रस्तदायुर्वेदामृतमृषिभ्यः संक्रम्योवाच—एतत् सर्वमनुष्ठेयम्, अयं च शिवः कालो रसायनानां, दिव्याश्चौषधयो हिमवत्प्रभवाः प्राप्तवीर्याः, तद्यथा—ऐन्द्री, ब्राह्मी, पयस्या, क्षीरपुष्पी, श्रावणी, महाश्रावणी, शतावरी, विदारी, जीवन्ती, पुनर्नवा, नागबला, स्थिरा, वचा, छत्रा, अतिच्छत्रा, मेदा, महामेदा, जीवनीयाश्चान्याः पयसा प्रयुक्ताः षण्मासात् परमायुर्वयश्च तरुणमनामयत्वं स्वरवर्णसंपदमुपचयं मेधां स्मृतिमुत्तमबलमिष्टांश्चापरान् भावानावहन्ति सिद्धाः ॥ ६ ॥ (इतीन्द्रोक्तं रसायनम्।)

अथ ત્યાર પછી उसके बाद, इन्द्रः ઇન્દ્રે इन्द्रने, तत् તે उस, आयुर्वेद-अमृतम् આયુર્વેદરૂપ અમૃત आयुर्वेदरूप अमृतको ऋषिभ्य ઋષિઓને ऋषियोंको, संक्रम्य સંપૂર્ણપણે આપીને सपूर्णरूपसे दे कर, उवाच કહ્યુ कहा, एतत् આ यह, सर्वम् બધુ सब, अनुष्ठेयम् કરવા યોગ્ય છે करना चाहिए, रसायनानाम् રસાયનોને માટે रसायनके लिए, अयम् च આ यह, शिव શુભ शुभ, कालः કાળ છે काल है, हिमवत्-प्रभवाः હિમાલયમાં ઊગેલી हिमालयसे उत्पन्न, दिव्याः દિવ્ય दिव्य, ओषधय च ઓષધિઓ ओषधिया, प्राप्तवीर्या વીર્યસંપન્ન છે वीर्यसंपन्न है, तद्यथा જેમ કે जैसे, ऐन्द्री ઐન્દ્રી ऐन्द्री, ब्राह्मी બ્રાહ્મી ब्राह्मी, पयस्या ફગિયો बिलाई कन्द, क्षीरपुष्पी ક્ષીરપુષ્પી क्षीरपुष्पी, श्रावणी શ્રાવણી श्रावणी, महाश्रावणी મોટી ગોરખમુંડી बड़ी मुंडी, शतावरी શતાવરી शतावर, विदारी વિદારી विदारी, जीवन्ती ડોડી जीवन्ती, पुनर्नवा સાટોડી गदहपुरना, नागबला ગંગેટી गंगेरन, स्थिरा શાલવણ सरीवन, वचा વજ वचा, छत्रा છત્રા छत्रा, अतिच्छत्रा અતિચ્છત્રા अतिच्छत्रा, मेदा મેદા मेदा, महामेदा મહામેદા महामेदा, अन्या च અને બીજી और अन्य, जीवनीया. જીવનીય ઓષધિઓનો जीवनीय ओषधियोंका, षट्-मासात् છ માસ સુધી छः मास तक, पयसा सह દૂધની સાથે दूधके साथ, प्रयुक्ताः પ્રયોગ કરવાથી प्रयोग करनेसे, सिद्धा તેઓ સિદ્ધ થઈને वे सिद्ध हो कर, परम् શ્રેષ્ઠ श्रेष्ठ, आयु આયુષ્ય आयु, तरुणम् वय. च યુવાવસ્થા युवावस्था, अनामयत्वम् આરોગ્ય आरोग्य, स्वर वर्ण- संपदम् સ્વર અને વર્ણની સંપત્તિ स्वर और वर्णकी सपत्ति, उपचयम् શરીરની વૃદ્ધિ शरीरकी वृद्धि, मेधाम् બુદ્ધિ बुद्धि, स्मृतिम् સ્મૃતિ स्मृति, उत्तमबलम् ઉત્તમ બળ उत्तम बल, अपरान् च અને બીજા और अन्य, इष्टान् ઇષ્ટ प्रिय, भावान् પદાર્થો पदार्थोंको, आवहन्ति આપે છે देती है ॥ ६ ॥ (इति આ यह, इन्द्रोक्तम् रसायनम् ઇન્દ્રોક્ત રસાયન છે इन्द्रोक्त रसायन है।)

---

५. तुष्टुवु—तमूचु (थ.)

६ अय च शिव काल.—अय च कालः (थ)

,, हिमवत्प्रभवाः—हिमवत प्रभावात् (थ.)

6 Then Indra, coming over to the sages, imparted to them the immortal Science of Life. He concluded the initiation with the following injunctions: 'All this must you do. This is the propitious time for carrying out the vitalizing therapy. Sovereign herbs, growing in the Himalayas, are ripe with potency. Such for instance as aindri, brahmi, milky yam, kshirapushpi, sravani, east indian globe thistle, climbing asparagus, white yam, cork swallow-wort, hog's weed, gingo fruit, ticktrefoil, sweet flag, wild dill, wild fennel, meda, mahameda—these and such other life-promoting drugs of proved virtue taken in conjunction with cow's milk, secure for their user, after a course of six months optimum length of life, youthful age, immunity from disease, excellence of voice and complexion, full physical growth, intelligence, memory, the highest kind of power, and all other desirable qualities' Thus has been described the vitalization procedure taught by Indra

द्रोणीप्रावेशिकरसायनम्—

**ब्रह्मसुवर्चला नामौषधिर्या हिरण्यक्षीरा पुष्करसदृशपत्रा, आदित्यपर्णी नामौषधिर्या 'सूर्यकान्ता' इति विज्ञायते सुवर्णक्षीरा सूर्यमण्डलाकारपुष्पा च, नारी नामौषधिः 'अश्वबला' इति विज्ञायते या बल्वजसदृशपत्रा, काष्ठगोधा नामौषधिर्गोधाकारा, सर्पा नामौषधिः सर्पाकारा, सोमो नामौषधिराजः पञ्चदशपर्वा स सोम इव हीयते वर्धते च, पद्मा नामौषधिः पद्माकारा पद्मरक्ता पद्मगन्धा च, अजा नामौषधिः 'अजश्रृङ्गी' इति विज्ञायते, नीला नामौषधिस्तु नीलक्षीरा नीलपुष्पा लताप्रतानबहुलेति;**

या જે જો, हिरण्यक्षीरा સુવર્ણ જેવા પીળા દૂધવાળી सुवर्ण जैसे पीले दूधवाली, पुष्करसदृशपत्रा તથા કમળ સમાન પાંદડાંવાળી હોય છે तथा कमल जैसे पत्रवाली होती है, ब्रह्मसुवर्चला તે 'બ્રહ્મસુવર્ચલા' वह 'ब्रह्मसुवर्चला', नाम નામની नामकी, ओषधि· ઔષધિ છે ओषधि है, या જેને जो, 'सूर्यकान्ता' इति 'સૂર્યકાન્તા' એ નામથી 'सूर्यकान्ता' इस नामसे, विज्ञायते જાણવામાં આવે છે जानी जाती है, सुवर्णक्षीरा સુવર્ણ જેવા દૂધવાળી सुवर्ण जैसा क्षीरवाली, सूर्यमण्डलाकार- તથા સૂર્યમંડલ જેવા આકારના तथा सूर्य जैसे गोल आकारके, पुष्पा च પુષ્પવાળી હોય છે पुष्पोंवाली होती है, आदित्यपर्णी તે 'આદિત્યપર્ણી' वह 'आदित्यपर्णी', नाम નામની नामकी, ओषधि· ઔષધિ છે ओषधि है, या જેને जो, 'अश्वबला' इति 'અશ્વબલા' એ નામથી 'अश्वबला' इस नामसे, विज्ञायते જાણવામાં આવે છે जानी जाती है, बल्वसदृश- તથા જે બલ્વજ જેવાં तथा जो बल्वजके समान, पत्रा પાનવાળી હોય છે पत्रोंवाली होती है, नारी તે 'નારી' वह 'नारी', नाम નામની नामकी, ओषधिः ઔષધિ છે ओषधि है, गोधाकारा જે ઘોના આકારવાળી હોય છે जो गोहके आकारकी होती है, काष्ठगोधा તે 'કાષ્ઠગોધા' वह 'काष्ठगोधा', नाम નામની नामकी, ओषधि ઔષધિ છે ओषधि है, सर्पाकारा જે સર્પના આકારવાળી હોય છે जो सर्पके आकारकी होती है, सर्पा તે 'સર્પા' वह 'सर्पा', नाम નામની नामकी, ओषधि ઔષધિ છે ओषधि है, पञ्चदशपर्वा જે ઔષધિ પંદર પર્વવાળી હોય છે जो ओषधि पन्द्रह पर्ववाली होती है, सोमः તે 'સોમ' वह 'सोम', नाम નામનો नामका, ओषधिराज ઔષધિઓનો રાજા છે ओषधिओंका राजा है, स· તે ઔષધિ वह ओषधि, सोमः ચંદ્રની चन्द्रके, इव पेठे समान, हीयते

७ सुवर्णक्षीरा—सुपर्णवर्णक्षीरा (ङ.)

,, बल्वजसदृशपत्रा—पुनरजसदृशपत्रा (द. ब.)

७ पञ्चदशपर्वा—पञ्चदशपर्णः (ध. फ.)

,, नीलक्षीरा नीलपुष्पा—नीलक्षीरपुष्पी (ख.)

ક્ષીણ થાય છે घटती है, वर्धते च તથા વૃદ્ધિ પામે છે तथा बढ़ती है, पद्माकारा જે કમળના જેવા આકારવાળી जो कमलके आकारकी, पद्मरक्ता કમળના જેવી લાલ कमल जैसी लाल, पद्मगन्धा च અને કમળ જેવા ગંધવાળી હોય છે और कमलके समान गन्धवाली होती है, पद्मा તે પદ્મા' वह 'पद्मा', नाम નામની नामकी, ओषधि: ઓષધિ છે ओषधि है, 'अजशृङ्गी' इति જેને 'અજશૃંગી' એ નામથી जो 'अजशृङ्गी' इस नामसे, विज्ञायते જાણવામાં આવે છે जानी जाती है, अजा તે 'અજા' वह 'अजा', नाम નામની नामकी ओषधिः ઓષધિ છે ओषधि है, नीलक्षीरा જે નીલા દૂધવાળી जो नीला दूधवाली, नीलपुष्पा નીલા પુષ્પવાળી नीले पुष्पवाली, लताप्रतानबहुला તથા વેલાના બહુ વિસ્તારવાળી હોય છે तथा बहुत लताप्रतानसे युक्त होती है, तु તે તો वह तो, नीला 'नीला' 'नीला', नाम નામની नामकी, ओषधि ઓષધિ છે ओषधि है,

7-(1). There is a herb by the name of Brahma-suvarchala which exudes a golden colored sap, and the leaves resembling those of white lotus The herb which is called 'Aditya-parni' ('Sun-leaved') is also known by the name of 'Surya-kanta' it also exudes a golden colored sap and has flowers of the shape of the disk of the sun. The herb called 'Nari' which is also known by the name of 'Aswabala' has petals resembling those of the Balvaja The herb called 'Kashtha-godha' is shaped like the iguana; while the herb called 'Sarpa' has a form resembling the snakes. The sovereign herb which is known by the name of 'Soma' has fifteen joints for knots; it wanes and waxes like the moon. The herb called 'Padma' is similar in shape to a lotus, is red like a lotus and smells too like a lotus. The herb called 'Aja' is also spoken of as 'Ajasringi'. The herb known as 'Nila' has blue sap and blue flowers. It is a creeper with luxuriant growth.

आसामोषधीनां यां यामेवोपलभेत तस्यास्तस्याः स्वरसस्य सौहित्यं गत्वा स्नेहभावितायामार्द्रपलाशद्रोण्यां सपिधानायां दिग्वासाः शयीत, तत्र प्रलीयते, षण्मासेन पुनः संभवति, तस्याजं पय प्रत्यवस्थापनं, षण्मासेन देवतानुकारी भवति वयोवर्णस्वराकृतिवलप्रभाभिः स्वयं चास्य सर्ववाचोगतानि प्रादुर्भवन्ति, दिव्यं चास्य चक्षुः श्रोत्रं च भवति, गतिर्योजनसहस्रं, दशवर्षसहस्राण्यायुरनुपद्रवं चेति ॥ ७ ॥

आसाम् આ इन, ओषधीनाम् ઓષધિઓમાંથી ओषधियोंमेंसे, याम् જે जिस, याम् एव જે ઓષધિને जिस ओषधिको, उपलभेत મેળવે प्राप्त कर सके, तस्या· તેના उस, तस्या તેના उसके, स्वरसस्य સ્વરસનું स्वरसको, सौहित्यम् તૃપ્તિ પર્યન્ત तृप्ति पर्यन्त, गत्वा પાન કરીને पी कर, स्नेहभावितायाम् સ્નેહ ચોપડેલી स्नेहसे स्निग्ध की हुई, सपिधानायाम् ઢાંકણાવાળી ढकनवाली, आर्द्रपलाश લીલા ખાખરાની नीले ढाककी, द्रोण्याम् દ્રોણીમાં द्रोणीमें, दिग्वासाः નગ્ન થઈ नग्न हो कर, शयीत શયન કરવું सोवे, तत्र તેમાં इसमें, प्रलीयते તે લય પામી જાય છે विलीन हो जाता है, षण्मासेन અને ૭ મહિના પછી और फिर छः मासके पीछे, पुनः પુન પુન, संभवति ઉત્પન્ન થાય છે उत्पन्न होता है, आजम् બકરીના बकरीके, पयः દૂધથી दूधसे, तस्य તેને उसे, प्रत्यवस्थापनम् પૂર્વ સ્થિતિમાં લાવવો पूर्व स्थितिमें लाये, वयो वर्ण-स्वराकृति- વય- વર્ણ- સ્વર- આકૃતિ उम्र वर्ण स्वर-आकार, बलप्रभाभिः બળ તથા પ્રભાવડે बल तथा प्रभामें, षण्मासेन ૭ મહિના પછી छ मासके बाद, देवतानुकारी દેવના જેવો देवतुल्य, भवति થાય છે होता है, सर्व-वाचोगतानि च અને બધી વાણીની શ્રેષ્ઠતા और सब वाणीकी विशिष्टता, अस्य આ પુરુષને इसको, स्वयम् સ્વય स्वय ही, प्रादुर्भवन्ति પ્રાપ્ત થાય છે प्राप्त होती है, अस्य च વળી આ પુરુષનાં फिर इस

पुरुषके, चक्षुः નેત્રો नेत्र, श्रोत्रम् च તથા કાન और कान, दिव्यम् દિવ્ય दिव्य, भवति થાય છે होते हैं, योजनसहस्रम् તેને એક હજાર યોજન उसको एक हजार योजन तक, गतिः ચાલવાની શક્તિ પ્રાપ્ત થાય છે चलनेकी शक्ति प्राप्त होती है, आयु અને તેનું આયુષ્ય और उसकी आयु, दशवर्षसहस्राणि દશ હજાર વર્ષનું दस हजार बरसकी, अनुपद्रवम् च इति तथा ઉપદ્રવરહિત થાય છે तथा उपद्रवसे रहित होती है ॥७॥

7. Out of the above-mentioned herbs, one should drink to one's fill, the juices of such as are available; he should then lie down naked in a vat furnished with a lid, made of green bengal kino wood and saturated with ghee. Living like this, one's body will dwindle down to nothing, in the course of six months he rises with a reformed body. His only sustenance shall be goat's milk. On completing the course of six months, he becomes like gods in the matter of youth, complexion, voice, form, strength and lustre To him all excellences of speech come of their own accord. He becomes endowed with clairvoyance and clairaudience. He will be able to cover a thousand yojanas at one stretch and will live for a period of ten thousand years without any ailment

भवन्ति चात्र—

दिव्यानामोषधीनां यः प्रभावः स भवद्विधैः ।
शक्यः सोढुमशक्यस्तु स्यात् सोढुमकृतात्मभिः ॥८॥

अत्र च આ વિષયમાં इस विषयमें, भवन्ति શ્લોકો છે કે श्लोक है कि, यः જે जो, दिव्यानाम् દિવ્ય दिव्य, ओषधीनाम् ઔષધિઓના ओषधियोंका, प्रभाव પ્રભાવ છે प्रभाव है, स તે वह, भवद्विधैः આપ જેવા મહર્ષિઓથી आप जैसे महर्षियोंसे, सोढुम् शक्यः સહન કરી શકાય છે सहा जा सकता है, अकृतात्मभिः અકૃતાત્મા-ઓથી असयनात्मावालोंसे, तु તો तो, सोढुम् अशक्यः स्यात સહન કરી શકાતો નથી नहीं सहा जा सकता ॥८॥

Here are verses again—

8 Only persons like you will be able to tolerate the strength of these sovereign herbs; un-self-controlled persons will be unable to bear it.

ओषधीनां प्रभावेण तिष्ठतां स्वे च कर्मणि ।
भवतां निखिलं श्रेयः सर्वमेवोपपत्स्यते ॥९॥

स्वे च પોતાનાં अपने, कर्मणि કર્મમાં कार्योंमें, तिष्ठताम् લાગ્યા રહેતા लगे रहते हुए, भवताम् આપ લોકોને आप लोगोंको, ओषधीनाम् ઓષધિઓના ओषधियोंके, प्रभावेण પ્રભાવથી प्रभावसे, निखिलम् સમ્પૂર્ણ सम्पूर्ण, सर्वम् સર્વ सब, श्रेयः કલ્યાણ कल्याण, उपपत्स्यते પ્રાપ્ત થશે प्राप्त होगा ॥ ९ ॥

9 By the virtues of the herbs and by devotion to your duties, all the auspicious results will accrue to you.

वानप्रस्थैर्गृहस्थैश्च प्रयतैर्नियतात्मभिः ।
शक्या ओषधयो ह्येताः सेवितुं विषयाभिजाः ॥१०॥

प्रयतै પવિત્ર पवित्र, नियतात्मभिः તથા મનને વશ કરનારા तथा मनको वशमें रखनेवाले, वानप्रस्थैः વાનપ્રસ્થ वानप्रस्थ, गृहस्थै च तथा ગૃહસ્થાશ્રમીઓથી तथा गृहस्थोंसे, विषय- अभिजाः પોતાના પુણ્ય દેશમાં ઉત્પન્ન થયેલી अपने पुण्य देशमें पैदा हुई, एता આ इन, ओषधयः ઓષધિઓનું ओषधियोंका, सेवितुम् शक्या. हि સેવન કરી શકાય છે सेवन किया जा सकता है ॥ १० ॥

10. It is only the hermits and house holders that are pious and of disciplined natures, that are competent to make use of these herbs born in this divine clime.

९. सर्वमेनोपपत्स्यते–सर्वथैवोपपत्स्यते (च.)

**यास्तु क्षेत्रगुणैस्तेषां मध्यमेन च कर्मणा ।**
**मृदुवीर्यतरास्तासां विधिर्ज्ञेयः स एव तु ॥११॥**

या. तु જે ઓષધિઓ जो ओषधियां, क्षेत्रगुणै. ભૂમિના ગુણોથી भूमिके गुणोंसे, तेषाम् તથા તે વાનપ્રસ્થ ગૃહસ્થ વગેરેના तथा उन वानप्रस्थ गृहस्थ आदिके, मध्यमेन મધ્યમ પ્રકારના मध्यम प्रकारके, कर्मणा च અદષ્ટથી अदृष्टसे, मृदुवीर्यतरा અત્યન્ત મૃદુ વીર્યવાળી હોય છે अत्यन्त मृदु वीर्यवाली होती हैं, तासाम् તેના उनके, विधि· तु સેવનની વિધિ सेवनकी विधि, सः एव જે ઉપર કહી છે તે જ जो पूर्वमें कही है वही, ज्ञेय· જાણવી जाननी चाहिए ॥११॥

11\. As regards those herbs too, which, in the matter of habitat and virtues, are of a middling order and thus inferior to the Himalayan herbs in respect of potency, the mode of administration is the same

**पर्येष्टुं ताः प्रयोक्तुं वा येऽसमर्थाः सुखार्थिनः ।**
**रसायनविधिस्तेषामयमन्यः प्रशस्यते ॥ १२ ॥**

सुखार्थिन· સુખની ઇચ્છાવાળા सुखकी इच्छावाले, ये જે મનુષ્યો जो मनुष्य, ताः તે દિવ્ય ઓષધિઓને इन दिव्य ओषधियोंको, पर्येष्टुम् શોધવા ढूंढनेमें, प्रयोक्तुम् वा કે તેનો પ્રયોગ કરવા अथवा उनके प्रयोग करनेमें, असमर्थाः અસમર્થ હોય છે असमर्थ होते है, तेषाम् તેઓને માટે उनके लिए, अयम् આ यह, अन्य બીજી दूसरी, रसायनविधिः રસાયન વિધિ रसायनविधि, प्रशस्यते પ્રશસ્ત છે प्रशस्त है ॥ १२ ॥

12 For the benefit of those who, while unable either to procure or tolerate the Himalayan herbs, seek, nevertheless, the blessings of vitalization, we recommend the following separate procedure.

११. यास्तु–तासु (प त थ भ)

अपरमिन्द्रोक्तरसायनम्—

**बल्यानां जीवनीयानां बृंहणीयाश्च या दश ।**
**वयस स्थापनानां च खदिरस्यासनस्य च ॥१३॥**
**खर्जूराणां मधूकानां मुस्तानामुत्पलस्य च ।**
**मृद्वीकानां विडङ्गानां वचायाश्चित्रकस्य च ॥१४॥**
**शतावर्याः पयस्यायाः पिप्पल्या जोङ्गकस्य च ।**
**ऋद्ध्या नागबलायाश्च द्वारदाया धवस्य च ॥१५॥**
**त्रिफलाकण्टकार्योश्च विदार्याश्चन्दनस्य च ।**
**इक्षूणां शरमूलानां श्रीपर्ण्यास्तिनिशस्य च ॥१६॥**
**रसाः पृथक् पृथग्ग्राह्या पलाशक्षार एव च ।**
**एषां पलोन्मितान् भागान् पयो गव्यं चतुर्गुणम् ॥१७॥**
**द्वे पात्रे तिलतैलस्य द्वे च गव्यस्य सर्पिषः ।**
**तत् साध्य सर्वमेकत्र सुसिद्धं स्नेहमुद्धरेत् ॥१८॥**
**तत्रामलकचूर्णानामाढकं शतभावितम् ।**
**स्वरसेनैव दातव्यं क्षौद्रस्याभिनवस्य च ॥१९॥**
**शर्कराचूर्णपात्रं च प्रस्थमेक प्रदापयेत् ।**
**तुगाक्षीर्या· सपिप्पल्याः स्थाप्यं संमूर्च्छितं च तत् ॥**
**सुचोक्षे मार्तिके कुम्भे मासार्ध घृतभाविते ।**
**मात्रामग्निसमां तस्य तत ऊर्ध्व प्रयोजयेत् ॥२१॥**
**हेमताम्रप्रवालानामयसः स्फटिकस्य च ।**
**मुक्तावैदूर्यशङ्खानां चूर्णानां रजतस्य च ॥२२॥**
**प्रक्षिप्य षोडशीं मात्रां विहायायासमैथुनम् ।**
**जीर्णे जीर्णे च भुञ्जीत षष्टिक क्षीरसर्पिषा ॥२३॥**

बल्यानाम् બલ્ય ગણની દશ ઓષધિઓ बल्य गणकी दस ओषधिया, जीवनीयानाम् જીવનીય ગણની દશ ઓષધિઓ जीवनीय गणकी दस ओषधिया, बृंहणीयाः च બૃંહણીય ગણની દશ ઓષધિઓ बृंहणीय गणकी दस ओषधिया, वयस स्थापनानाम् च અને વયઃસ્થાપન ગણની और वय स्थापन गणकी, दश દશ ઓષધિઓ दस ओषधिया, खदिरस्य ખેર खैर कथ्था, असनस्य च અસન खाज, खर्जूराणाम् ખજૂર खजूर, मधूकानाम् મહુડાં महुवा, मुस्तानाम् મોથ मोथ,

१५ द्वारदाया–हरिद्राया (ग न द)
१७ पलोन्मितान्–पात्रोन्मितान् (प)
२३. विहायायासमैथुनम्–विरतायासमैथुन (प)

उत्पलस्य च નીલ કમળ नीलोफर, मृद्वीकानाम् દ્રાક્ષ द्राक्षा, विडङ्गनाम् વાવડિંગ वायविडंग, वचायाः વજ वच, चित्रकस्य च ચિત્રક चित्रक, शतावर्याः શતાવરી शतावर, पयस्यायाः દુગ્ધિકા बिलाईकन्द, पिप्पल्याः પીપર पीप्पली, अगुरुकस्य च અગર अगर, ऋद्ध्याः ઋદ્ધિ ऋद्धि, नागबलायाः च ગંગેટી गंगेरन, द्वारदाया· સાગ सागवन, धवस्य च ધાવડો धौ, त्रिफला- ત્રિફલા त्रिफला, कण्टकार्योः च મોટી ભોરીંગણી कटेरी, विदार्याः દુગ્ધિકા बिलाईकन्द, चन्दनस्य च ચન્દન चन्दन, इक्षूणाम् શેરડી ईख, शर-मूलानाम् બરુનાં મૂળ शरमूल, श्रीपर्ण्याः શીવણુ खमार, तिनिशस्य च અને તણુછ और तिनिस, रसा એઓના રસો इनके रस, पलाशक्षार· एव च તથા ખાખરાનો ક્ષાર तथा पलाशके क्षारको, पृथक् पृथक् જુદા જુદા भिन्न भिन्न, ग्राह्या· લેવા लेना चाहिए, एषाम् એમાંના પ્રત્યેકના इनमेंसे प्रत्येकका, पलोन्मितान् भागान् ચાર તોલા पलमात्र, गव्यस्य ગાયનુ गायका, पय· દૂધ दूध, चतुर्गुणम् ૧૬ તોલા चौगुना, तिलतैलस्य તલનું તેલ तिलतैल, द्वे पात्रे ૫૧૨ તોલા दो आढक, तत् એ इन, सर्वम् સઘળાં सबको, एकत्र એકત્ર કરીને एकत्र करके, साध्यम् પકાવવાં પડાયે, सुसिद्धम् જ્યારે પાકી રહે ત્યારે जब अच्छी तरह पक जाय तब, स्नेहम् સ્નેહને स्नेहको, उद्धरेत् ઉતારવો उतार लेवे, तत्र ગાળી લઈ તેમાં छान कर इसमें, स्वरसेन एव સ્વરસથી स्वरससे, शतभावितम् સો વાર ભાવના આપેલુ सौ वार भावित, आमलकचूर्णानाम् આમળાંનુ ચૂર્ણ आंवलोंका चूर्ण, आढकम् ૨૫૬ तोला एक आढक, अभिनवस्य નવુ नया, क्षौद्रस्य મધ मधु, सपिप्पल्याः પીપર पीप्पली, तुगाक्षीर्याः च તેમજ વંશલોચન एवं वंशलोचन, एकम् प्रस्थम् ૬૪ તોલા एक प्रस्थ, शर्कराचूर्णपात्रम् च અને સાકરનુ ભૂરૂ ૨૫૬ તોલા और सक्करके चूर्णका एक आढक, प्रदापयेत् નાખવુ मिलावे, संमूर्च्छितम् બધુ એકત્ર કરીને सबको एकत्र करके, तत् તેને उसको, सुधौते અત્યંત નિર્મળ अत्यन्त निर्मल, घृतभाविते ઘી ચોપડેલા घृत-लिप्त, मार्त्तिके માટીના मिट्टीके, कुम्भे ઘડામાં घडेमें, मासार्धम् ૫ંદર દિવસ સુધી पंद्रह दिन तक, स्थाप्यम् રાખી મૂકવું रक्खे, तत· ऊर्ध्वम् તે પછી उसके बाद, हेम-ताम्र- સુવર્ણ, તામ્ર सुवर्ण, ताम्र, प्रवालानाम् પ્રવાલ प्रवाल, अयसः લોહ लोहा, स्फटिकस्य च સ્ફટિક स्फटिक, मुक्ता-वैडूर्य- મોતી, વિદુરમણિ मोती, वैडूर्य, शङ्खानाम् શંખ शंख, रजतस्य च અને ચાંદી એઓ-માંના પ્રત્યેકનુ और चांदी इनमेंसे प्रत्येकका, चूर्णानाम् ચૂર્ણ चूर्ण, षोडशीम् मात्राम् ચાર તોલા एक पल, प्रक्षिप्य મેળવીને मिला कर, आयास- પરિશ્રમ परिश्रम, मैथुनम् તથા મૈથુનના तथा मैथुनका, विहाय त्याग કરી त्याग करके, तस्य તેનો उसका, अग्निसमाम् જઠ-રાગ્નિના બળને અનુસરી अग्निबलके अनुसार, मात्राम् માત્રામાં मात्रामें, प्रयोजयेत् પ્રયોગ કરવો प्रयोग करे, जीर्णे जीर्णे च જ્યારે ઔષધ પચી જાય ત્યારે जब औषध जीर्ण हो जाय तब, क्षीरसर्पिषा દૂધ તથા ઘીથી दूध तथा घृतसे, षष्टिकम् સાઠી ચોખાનો साठी चाव-लका सुशीत આહાર કરવો आहार करे ॥ १३-२३ ॥

13-23 Collect separately the juice of each of the following drugs, the decade of each of the four groups—tonics, life-promotives, roborants and rejuvenators as also of catechu, feather foil, date mahwa, nut-grass, blue lotus, grape, embelia, sweet-flag, white-flowered lead wort climbing asparagus, milky yam, long pepper, eagle-wood, riddhi, gingo fruit plant, indian teak-tree, crane-tree, the three myrobalans, indian night-shade, white yam, sandal wood, sugar-cane, roots of reed grass, white teak and cojein. These juices as also palasa-alkali should be taken in the measure of four tolas each and combined This mixture should be further combined with four times its quantity of cow's milk and 512 tolas each of the oil of til and of cow's ghee All this should be cooked in one vessel and the unctuous portion taken out Add to the unctuous

portion thus obtained 256 tolas of the pulvis of emblic myrobalans which has been impregnated a hundred times in the fresh juice of the emblic myrobalans, 256 tolas of very fresh honey, 256 tolas of the powder of sugar-candy, and 64 tolas each of bamboo manna and long pepper Mixing the whole thing well, allow it to mature for a fortnight in a perfectly clean earthen vessel which has been saturated previously with ghee. It should then be used in the dose commensurate with the digestive power of the person concerned This linctus should be mixed with one-sixteenth its quantity of the powders of gold, copper, coral, iron, crystal, pearls, cat's-eye gem, conch-shell and silver The user should avoid during the course of treatment all strain and sexual activity. On digestion of the medicine, he should eat a meal consisting of shashtika rice with milk and ghee

सर्वरोगप्रशमनं वृष्यमायुष्यमुत्तमम् ।
सत्त्वस्मृतिशरीराग्निबुद्धीन्द्रियबलप्रदम् ॥ २४ ॥
परमूर्जस्करं चैव वर्णस्वरकरं तथा ।
विषालक्ष्मीप्रशमनं सर्ववाचोगतप्रदम् ॥ २५ ॥
सिद्धार्थतां चाभिनवं वयश्च
प्रजाप्रियत्वं च यशश्च लोके ।
प्रयोज्यमिच्छद्भिरिदं यथाव-
द्रसायनं ब्राह्ममुदारवीर्यम् ॥ २६ ॥
(इतीन्द्रोक्तरसायनमपरम् ।)

सिद्धार्थताम् च કામનાસિદ્ધિ कामनासिद्धि, अभिनवम् તરુણ तरुण, वयः च વય वय, प्रजाप्रियत्वम् च લોકપ્રિયતા लोकप्रियता, लोके यशः च तथा લોકમાં કીર્તિની तथा लोकमें यशकी, इच्छद्भिः ઇચ્છાવાળાઓએ इच्छावाले, सर्वरोगप्रशमनम् સર્વ રોગોને શાંત કરનાર सब रोगोंको शान्त करनेवाले, वृष्यम् વૃષ્ય वीर्यवर्धक उत्तमम् ઉત્તમ उत्तम, आयुष्यम् આયુષ્યવર્ધક आयु बढानेवाले, सत्त्व-स्मृति- મન- સ્મૃતિ मन- स्मृति, शरीर-अग्नि-શરીર જઠરાગ્નિ शरीर-अग्नि, बुद्धि इन्द्रिय- બુદ્ધિ તથા ઇન્દ્રિયોને बुद्धि एवं इन्द्रियोंको, बलप्रदम् બળ આપનારું बल देनेवाले, परम् અત્યંત अत्यंत, ऊर्जस्करम् च एव ઉત્સાહ વધારનારું उत्साहवर्धक, तथा वर्णस्वरकरम् વર્ણ તથા સ્વરને આપનારું वर्ण एवं स्वरको करनेवाले, विष-अलक्ष्मी- વિષ તથા દરિદ્રતાનો विष तथा दरिद्रताका, प्रशमनम् નાશ કરનારું नाश करनेवाले, सर्व-वाचोगत-प्रदम् સર્વ વાણીની શ્રેષ્ઠતા આપનાર सब वाणीकी श्रेष्ठता देनेवाले, इदम् આ इस, उदारवीर्यम् બહુ વીર્યવાળા अत्यन्त वीर्यवाले, ब्राह्मम् બ્રાહ્મ ब्राह्म, रसायनम् રસાયનનો रसायनका, यथावत् વિધિ પ્રમાણે यथावत्, प्रयोज्यम् પ્રયોગ કરવો કોઈએ प्रयोग करे ॥ २४-२६ ॥ (इति આ यह, अपरम् બીજું दूसरा, इन्द्रोक्तरसायनम् ઇન્દ્રોક્ત રસાયન છે इन्द्रोक्तरसायन है।)

24-26. This is a panacea, a virilific and the bes tpromoter of longevity. It also promotes intelligence, memory digestive power, under-standing and acuity of the sense. It is, moreover, an excellent vitalizer and a promoter of complexion and voice. It is a talisman against poison and ill-luck and a giver of all blessings that speech can give. This Brahmic vitalizer, of mighty potency, should be systematically used by those who seek success in enterprise, new youth, popularity and renown in the world. Thus has been described 'The Second Vitalizer revealed by Indra'

केषां कुटीप्रावेशिकः केषां च वातातपिको विधिर्हितः—
समर्थानामरोगाणां धीमतां नियतात्मनाम् ।

**कुटीप्रवेशः क्षणिनां परिच्छदवतां हितः ॥२७॥**

समर्थानाम् शक्तिवाळा शक्तिवाले, अरोगाणाम् नीरोग नीरोग, धीमताम् बुद्धिमान बुद्धिमान, नियतात्मनाम् संयमी सयमी, क्षणिनाम् काम करवामां स्वतंत्र कार्य करनेमें स्वतन्त्र, परिच्छदवताम् तथा साधनसंपन्न मनुष्यो माटे तथा धनजनादिसे सपन्न मनुष्योंके लिए, कुटीप्रवेशः कुटीप्रावेशिक प्रयोग कुटीप्रावेशिक प्रयोग, हित. हितकारी छे हितकर है ॥२७॥

27. The mode of immurement in a retreat is indicated in the case of those who are fit, diseaseless, strong-willed, self-controlled, leisured and endowed with means.

**अतोऽन्यथा तु ये तेषां सौर्यमारुतिको विधिः ।**
**तयोः श्रेष्ठतरः पूर्वो विधिः स तु सुदुष्करः ॥२८॥**

ये तु पण जेओ परन्तु जो, अतः एओथी इनसे, अन्यथा विपरीत स्थितिवाळा होय छे विपरीत स्थितिवाले होते है, तेषाम् तेओने उनके लिए, सौर्यमारुतिक. तडका तथा पवन संबंधी आतप तथा वात सम्बन्धी, विधि विधि हितकर है, तयो. आ बन्ने विधिओमां इन दोनोंमें, पूर्वः प्रथमनी पहली, विधिः विधि विधि, श्रेष्ठतर वधारे श्रेष्ठ छे अधिक श्रेष्ठ है, स. तु पण ते विधि किंतु वह विधि, दुष्कर दुष्कर छे अत्यंत कठिन है ॥२८॥

28. For those who are differently circumstanced, the mode laid down is that of exposure to sun and wind. The first mode of the procedure—immure ment in a retreat, is no doubt the more excellent of them two, but is indeed very difficult.

रसायनविधिभ्रंशे कर्तव्यम्—

**रसायनविधिभ्रंशाज्जायेरन् व्याधयो यदि ।**
**यथास्वमौषधं तेषां कार्यं मुक्त्वा रसायनम् ॥२९॥**

रसायनविधि- रसायनना विधिमां रसायनविधिके, भ्रंशात् भूल थवाथी अपायसे, यदि जो यदि, व्याधयः रोगो व्याधिया, जायेरन् उत्पन्न थाय तो हो जाय तो, रसायनम् रसायनने रसायनको, मुक्त्वा पडतुं मूकीने छोड कर, तेषाम् यथास्वम् ते रोगोनी पोतानी उन व्याधियोंकी अपनी, औषधम् चिकित्सा चिकित्सा, कार्यम् करवी करनी चाहिए ॥ २९ ॥

29 If disease supervenes as the result of incorrect application of the vitalizing procedure, the procedure should be forthwith suspended and the disorders duly treated.

आचाररसायनम्—

**सत्यवादिनमक्रोधं निवृत्तं मद्यमैथुनात् ।**
**अहिंसकमनायासं प्रशान्तं प्रियवादिनम् ॥३०॥**
**जपशौचपरं धीरं दाननित्यं तपस्विनम् ।**
**देवगोब्राह्मणाचार्यगुरुवृद्धार्चने रतम् ॥ ३१ ॥**
**आनृशंस्यपरं नित्यं नित्यं करुणवेदिनम् ।**
**समजागरणस्वप्नं नित्यं क्षीरघृताशिनम् ॥ ३२ ॥**
**देशकालप्रमाणज्ञं युक्तिज्ञमनहङ्कृतम् ।**
**शस्ताचारमसंकीर्णमध्यात्मप्रवणेन्द्रियम् ॥ ३३ ॥**
**उपासितारं वृद्धानामास्तिकानां जितात्मनाम् ।**
**धर्मशास्त्रपरं विद्यान्नरं नित्यरसायनम् ॥ ३४ ॥**
**गुणैरेतैः समुदितैः प्रयुङ्क्ते यो रसायनम् ।**
**रसायनगुणान् सर्वान् यथोक्तान् स समश्नुते ॥३५॥**

**(इत्याचाररसायनम् ।)**

सत्यवादिनम् सत्यवादी सत्यभाषी, अक्रोधम् क्रोधरहित अक्रोधी, मद्यमैथुनात् मद्य तथा मैथुनथी मद्य तथा मैथुनसे, निवृत्तम् निवृत्त थयेला निवृत्त,

२७. क्षणिनाम्—क्षमिणाम् (ष थ. घ)
२८. तयोः—ताभ्याम् (ब.)
,, सुदुष्कर.—सुदु-मह (प.)
२९. व्याधयः—व्यापद. (ग
३१. जपशौचपर—याज्यशौचपर (ख)
३२ करुणवेदिनम्—कारुण्यवेदिनम् (ङ. त. घ)
३३ °प्रवणेन्द्रियम्—°प्रवलेन्द्रियम् (प)
३५ समुदितै —समुदित (ङ)

**अहिंसकम्** અહિંસક अहिंसक, **अनायासम्** શ્રમરહિત श्रम रहित, **प्रशान्तम्** પ્રશાન્ત अत्यन्त शान्त, **प्रियवादिनम्** પ્રિયભાષી प्रियभाषी, **जप-शौच- परम्** જપ તથા પવિત્રતા-પરાયણ जप तथा पवित्रतापरायण, **धीरम्** ધીર धीर, **दाननित्यम्** હમેશાં દાનશીલ नित्य दान करनेवाले, **तपस्विनम्** તપસ્વી तपस्वी, **देव-गो-ब्राह्मण-** દેવ- ગાય-બ્રાહ્મણ देव- गो- ब्राह्मण, **आचार्य गुरु-** આચાર્ય- ગુરુ आचार्य-गुरु, **वृद्धार्चने** તથા વૃદ્ધની પૂજામાં तथा वृद्धकी पूजामें, **रतम्** પ્રીતિ રાખનારા रत, **नित्यम्** હમેશા नित्य, **आनृशंस्यपरम्** ક્રૂરતારહિત अक्रूर, **नित्यम्** સદા सदा, **करुण-वेदिनम्** પ્રાણીઓ પર દયાદૃષ્ટિ રાખનારા प्राणियों पर दयादृष्टि रखनेवाले, **समजागरण-** સમાન જાગરણ समान जागरण, **स्वप्नम्** તથા નિદ્રાવાળા एवं निद्रावाले, **नित्यम्** હમેશાં हमेशां, **क्षीरघृताशिनम्** દૂધ તથા ઘીનુ ભોજન કરનારા दूध और घीका भोजन करनेवाले, **देशकालप्रमाणज्ञम्** દેશ, કાલ તથા માત્રાને જાણનાર देश-काल तथा मात्राके जाननेवाले, **युक्तिज्ञम्** યુકિતને જાણનાર युक्तिके जाननेवाले, **अनहङ्कृतम्** અહંકારરહિત निरहंकार, **शस्ताचारम्** શ્રેષ્ઠ આચાર-વાળા उत्तम आचारवाले, **असंकीर्णम्** પથ્ય ભોજન કરનારા पथ्यभोजी, **अध्यात्मप्रवणेन्द्रियम्** ઇન્દ્રિયોને અધ્યાત્મ વિષય તરફ લગાડનારા अध्यात्म विषयमें इन्द्रियोंको लगानेवाले, **आस्तिकानाम्** આસ્તિક आस्तिक, **जितात्मनाम्** સંયમી जितात्मा, **वृद्धानाम्** તથા વૃદ્ધોની तथा वृद्धोंके, **उपासितारम्** સેવા કરનાર उपासक, **धर्म-शास्त्रपरम्** અને ધર્મશાસ્ત્રપરાયણ और धर्मशास्त्रपरायण, **नरम्** પુરુષને पुरुषको, **नित्यरसायनम्** નિત્ય રસાયનનુ સેવન કરનાર જ नित्य रसायनका सेवन करनेवाला ही, **विद्यात्** જાણવો समझना चाहिए, **य.** જે जो पुरुष, **एतैः** આ इन, **समुदितैः** સઘળા सब, **गुणै.** ગુણોથી યુક્ત થઈ गुणोंसे युक्त हो कर, **रसायनम्** રસાયનનો रसायनका, **प्रयुङ्क्ते** પ્રયોગ કરે છે प्रयोग करता है, **सः** તે वह, **यथोक्तानाम्** પૂર્વે કહેલા पूर्वोक्त, **सर्वान्** સર્વ सब, **रसायन- गुणान्** રસાયનના ગુણોને रसायनके गुणोंको, **समश्नुते** પ્રાપ્ત કરે છે प्राप्त करता है ॥ ३०-३५ ॥

(**इति** આ यह. **आचाररसायनम्** આચારરસાયન છે आचाररसायन है।)

30-35. One who speaks the truth, who is free from anger, who abstains from alcohol and sexual congress, hurts no one, avoids overstrain, is tranquil of heart, fair-spoken, is devoted to repetition of holy chants and to cleanliness, is endowed with understanding, given to alms-giving, diligent in spiritual endeavour, delights in reverencing the gods, cows, brahmanas, teachers, seniors and elders, is attached to non-violence, and is always compassionate, moderate and balanced in his waking and sleeping, is given to regular taking of milk and ghee, is conversant with the science of clime, season and dosage, is versed in propriety, devoid of egotism, blameless of conduct, given to wholesome eating, spiritual in temperament, and attached to elders and men who are believers and self-controlled and devoted to scriptural texts; such a one should be known as enjoying the benefits of vitalization therapy constantly If one who is endowed with all these qualities makes use of vitalization therapy, that man will reap all the benefits of vitalization which have been described above Thus has been described 'The vitalization procedure through conduct'

मन शरीरशुद्धानामेव रसायनसिद्धिर्भवति—

यथास्थूलमनिर्वाह्य दोषाञ्छारीरमानसान् ।
रसायनगुणैर्जन्तुर्युज्यते न कदाचन ॥ ३६ ॥

**जन्तुः** મનુષ્ય मनुष्य, **शारीरमानसान्** શરીર તથા મનના शारीरिक तथा मानसिक, **दोषान्** દોષોને दोषोंको, **यथास्थूलम्** સ્થૂલ- સૂક્ષ્મના ક્રમથી स्थूल सूक्ष्मके क्रमसे, **अनिर्वाह्य** દૂર કર્યા વિના बिना निकाले, **रसायनगुणै॰**

રસાયનના ગુણોથી रसायनके गुणोंसे, कदाचन કદી कमी, न युज्यते યુક્ત થતો નથી युक्त नहीं होता ॥३६॥

36. No man who has not rid himself of the evils, both of mind and body, beginning with the gross ones, can ever expect to come by the benefits resulting from vitalization.

**योगा ह्यायुःप्रकर्षार्था जरारोगनिवर्हणाः ।**
**मनःशरीरशुद्धानां सिध्यन्ति प्रयतात्मनाम् ॥३७॥**

आयुः-प्रकर्ष-अर्थाः આયુષ્યની વૃદ્ધિરૂપ પ્રયોજનવાળા आयुकी वृद्धिरूप प्रयोजनवाले, जरारोगनिवर्हणा તેમજ જરા અને રોગનો નાશ કરનારા एवं जरा तथा रोगोंके निवारण करनेवाले, योगाः યોગો रसायनयोग, मन - शरीर-शुद्धानाम् નિર્મળ મન તથા શરીરવાળા निर्मल मन तथा शरीरवाले, प्रयतात्मनाम् સંયમીઓને सयमी पुरुषोंमें, सिध्यन्ति हि ફળ આપનારા થાય છે सिद्ध होते है ॥३७॥

37. These procedures, which are laid down for prolonging life and removing old age and disease, prove effective only in the case of those who are pure in body and mind and are self-controlled.

**तदेतन्न भवेद्वाच्यं सर्वमेव हतात्मसु ।**
**अरुजेभ्योऽद्विजातिभ्यः शुश्रूषा येषु नास्ति च ॥३८॥**

तत् एतत् આ यह, सर्वम् एव સઘળું રસાયન सब रसायन, हतात्मसु મન્દ ભાગ્યવાળા લોકોને हतभागियोंको, न वाच्यम् भवेत् કહેવું ન જોઈએ कहना नहीं चाहिए, अरुजेभ्य તેમજ રોગરહિત एवं स्वस्थ, अद्विजातिभ्यः શૂદ્ર शूद्र, येषु च અને જેઓને और जिनको, शुश्रूषा સાંભળવાની ઇચ્છા सुननेकी इच्छा, न अस्ति ન હોય તેઓને કહેવું ન જોઈએ न हो उनको कहना नहीं चाहिए ॥ ३८ ॥

38. No part of this knowledge should ever be imparted to those whose natures are depraved, who are free from disease, who are outside the fold of the twice-born and those who have no eagerness to learn

३८ अरुजेभ्योऽद्विजातिभ्य –अरजाभ्यो द्विजातिभ्य (च ध)
,, अरुजेभ्य.–अजरेभ्य (च.)

मर्त्यैर्भिषजोऽवश्यं पूजनीयाः—

**ये रसायनसंयोगा वृष्ययोगाश्च ये मताः ।**
**यच्चौषधं विकाराणां सर्वं तद्वैद्यसंश्रयम् ॥ ३९ ॥**

ये જે जो, रसायनयोगाः રસાયનના પ્રયોગો रसायनके प्रयोग, ये च અને જે और जो, वृष्ययोगाः વાજીકરણના પ્રયોગો वाजीकरणके प्रयोग, मताः કહ્યા છે कहे गये हैं, यत् च તથા જે तथा जो, विकाराणाम् રોગોનું रोगोंका, औषधम् ઔષધ કહ્યું છે औषध कहा है, तत् તે वे, सर्वम् બધાં सब, वैद्यसंश्रयम् વૈદ્ય પર નિર્ભર છે वैद्यके ही आश्रित है ॥ ३९ ॥

39. All vitalization procedures, all procedures of virilification and all medicine for the alleviation of disease —all this is dependent on the physician

**प्राणाचार्यं बुधस्तस्माद्धीमन्तं वेदपारगम् ।**
**अश्विनाविव देवेन्द्रः पूजयेदतिशक्तितः ॥४०॥**

तस्मात् માટે इस लिए, बुध ડાહ્યા માણસે बुद्धिमान मनुष्य, धीमन्तम् બુદ્ધિમાન बुद्धिमान, वेदपारगम् વેદના પારને પામેલા आयुर्वेदपारंगत, प्राणाचार्यम् વૈદ્યની वैद्यकी, देवेन्द्रः દેવેન્દ્રે देवेन्द्रने, अश्विनौ इव જેવી અશ્વિનીકુમારની પૂજા કરી હતી તેવી जैसी अश्विनी-कुमारोंकी पूजा की थी वैसी, अतिशक्तित પોતાની શક્તિથી પણ વધારે अपनी शक्तिसे भी अधिक, पूजयेत् પૂજા કરવી જોઈએ पूजा करे ॥ ४० ॥

40 Therefore the intelligent man should revere, to the best of his ability, the physician who is the master of life, who is wise and has mastered the vedas, just as Indra cherishes the Aswin Twins.

अश्विनौ देवभिषजौ यज्ञवाहाविति स्मृतौ ।
यज्ञस्य हि शिरश्छिन्नं पुनस्ताभ्यां समाहितम् ॥४१॥
प्रशीर्णा दशनाः पूष्णो नेत्रे नष्टे भगस्य च ।
वज्रिणश्च भुजस्तम्भस्ताभ्यामेव चिकित्सितः ॥४२॥
चिकित्सितश्च शीतांशुर्गृहीतो राजयक्ष्मणा ।
सोमाभिपतितश्चन्द्रः कृतस्ताभ्यां पुनः सुखी ॥४३॥
भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः ।
वीतवर्णस्वरोपेतः कृतस्ताभ्यां पुनर्युवा ॥४४॥
एतैश्चान्यैश्च बहुभिः कर्मभिर्भिषगुत्तमौ ।
बभूवतुर्भृशं पूज्याविन्द्रादीनां महात्मनाम् ॥४५॥

देवभिषजौ દેવતાઓના વૈદ્ય देवोंके वैद्य, अश्विनौ અશ્વિનીકુમારોને अश्विनीकुमार, यज्ञवाहौ इति યજ્ઞવાહ यज्ञवाह, स्मृतौ માનવામાં આવે છે माने जाते हैं, हि કેમકે क्योंकि, यज्ञस्य યજ્ઞનું यज्ञके, छिन्नम् કપાયેલું कटे हुए, शिर મસ્તક सिरको, ताभ्याम् તેઓએ उन्होंने, समाहितम् સાંધ્યું હતું पुनः जोड़ा था, प्रशीर्णा પડી ગયેલા गिरे हुए, पूष्णः પૂષાના पूषाके, दशना દાંત दातकी, भगस्य ભગના भगके, नष्टे નષ્ટ થયેલાં नष्ट हुए, नेत्रे च નેત્ર नेत्रकी, वज्रिण च અને ઇન્દ્રના और इन्द्रके, भुजस्तम्भ च સ્તબ્ધ થયેલા હાથની भुजस्तम्भकी, ताभ्याम् તેઓએ इन्होंने, एव જ ही, चिकित्सित ચિકિત્સા કરી હતી चिकित्सा की थी, राजयक्ष्मणा રાજ્યક્ષ્માથી क्षयसे, गृहीतः ઘેરાયેલા पीड़ित, शीतांशुः શીતળ કિરણોવાળા शीतल किरणोंवाले, चन्द्र ચન્દ્રની चन्द्रमाकी, ताभ्याम् તેઓએ इन्होंने, चिकित्सित ચિકિત્સા કરી હતી चिकित्सा की थी, सोमाभिपतितः સૌમ્યભાવ નષ્ટ થઈ જતાં सौम्यभाव नष्ट हो जाने पर, चन्द्र. ચન્દ્રમાને चन्द्रमाको, ताभ्याम् તેઓએ इन्होंने, पुनः ફરીથી फिरसे, सुखीकृत સુખી કર્યો હતો सुखी किया था, भार्गव ભૃગુપુત્ર भृगुपुत्र, च्यवन. ચ્યવન च्यवन, वृद्ध सन् વૃદ્ધ હોવા છતાં वृद्ध होने पर भी, कामी કામી બનવાથી कामी बननेसे, वीतवर्णस्वरोपेत નાશ પામેલા વર્ણ તથા સ્વરવાળા થઈ वर्ण तथा स्वरके नष्ट हो जाने पर, विकृतिम् गत વિકૃતિને પામ્યા હતા विकृतिको प्राप्त हो गये थे, ताभ्याम् ते બન્નેએ इन्होंने, पुनर्युवा તેને ફરી યુવાન उनको पुनः जवान, कृत બનાવ્યા હતા किया था, भिषगुत्तमौ વૈદ્યોમાં શ્રેષ્ઠ અશ્વિનીકુમારો वैद्योंमें श्रेष्ठ अश्विनीकुमार, एतैः આ इन, अन्यैः च અને બીજા और दूसरे, बहुभिः ઘણાં बहुत, कर्मभिः કર્મોથી कर्मोंके कारण, इन्द्रादीनाम् ઇન્દ્રાદિ इन्द्रादि, महात्मनाम् મહાત્માઓના महात्माओंके, भृशम् અત્યન્ત अत्यन्त, पूज्यौ પૂજ્ય पूज्य, बभूवतु થયા હતા हुए थे ॥ ४१-४५ ॥

41-45 The Aswins who are the physicians of the gods are celebrated as the re-suscitators of Sacrifice, for it is they that reunited the severed head of Sacrifice. It is these two, again, that successfully treated Pushan when his teeth had become loosened, Bhaga when he had lost his eye-sight and Indra when his arm had become stiffened These two, moreover, cured Soma—the Moon-God, of consumption and restored him to his happiness when he had fallen from his state of good health When Chyavana, the son of Bhrigu, had become decrepit with loss of voice and body-lustre as the result of old age, but hankered still for sense-pleasures, it is the Aswin pair that made him young once again. On account of these and many other miracles of healing, these two, the greatest of physicians, came to be regarded with honour by great personages such as Indra and others.

ग्रहाः स्तोत्राणि मन्त्राणि तथा नानाहवींषि च ।
धूम्राश्च पशवस्ताभ्यां प्रकल्प्यन्ते द्विजातिभिः ॥४६॥

---

४३. सोमाभिपतितः—सोमात्रिपतित (त.)
४४. वीतवर्णस्वरोपेत.—वीर्यवर्णस्वरोपेत (च.)
४६ तथा नानाहवींषि च—तथाऽन्यानि हवींषि च (च. ब ग.)
,, धूम्राश्च—धूम्राश्च (ग. घ.)

प्रातश्च सवने सोमं शक्रोऽश्विभ्यां सहाश्नुते ।
सौत्रामण्यां च भगवानश्विभ्यां सह मोदते ॥४७॥
इन्द्राग्नी चाश्विनौ चैव स्तूयन्ते प्रायशो द्विजैः ।
स्तूयन्ते वेदवाक्येषु न तथाऽन्या हि देवताः ॥४८॥
अजरैरमरैस्तावद्विबुधैः साधिपैर्ध्रुवैः ।
पूज्येते प्रयतैरेवमश्विनौ भिषजाविति ॥ ४९ ॥
मृत्युव्याधिजरावश्यैर्दुःखप्रायैः सुखार्थिभिः ।
किं पुनर्भिषजो मर्त्यैः पूज्याः स्युर्नातिशक्तितः ॥५०॥

,, द्विजातिभिः બ્રાહ્મણોથી ब्राह्मणोंसे, ताभ्याम् તેઓને, अर्थे इनको, ग्रहा સોમપાન કરવાનાં પાત્રો सोमपात्र, स्तोत्राणि સ્તોત્રો स्तोत्र, मन्त्राणि મંત્રો मंत्र, तथा તથા तथा, नाना- વિવિધ પ્રકારનાં नाना प्रकारके, हवींषि च બલિદાનો बलि, धूम्रा તથા ધૂસર રંગના तथा धूसर, पशव. च પશુઓ पशु, प्रकल्प्यन्ते યજ્ઞમાં આપવામાં આવે એ यज्ञमें दिये जाते है, भगवान् ભગવાન भगवान, शक्र: ઇન્દ્ર इन्द्र, प्रात.सवने પ્રાતઃસવનમાં प्रात सवनमें, अश्विभ्याम् અશ્વિનીકુમારોની अश्विनीकुमारोंके, सह સાથે साथ, सोमम् સોમરસનુ सोमको, अश्नुते च પાન કરે છે पीना है, सौत्रामण्याम् સૌત્રામણી નામના યજ્ઞમાં सौत्रामणी नामके यज्ञमें, अश्विभ्याम् અશ્વિનીકુમારોની अश्विनीकुमारोंके, सह સાથે साथ, मोदते च આનંદ પામે છે प्रसन्न होता है, द्विजै. બ્રાહ્મણોથી ब्राह्मणोंसे, प्रायश ઘણુ ખરુ प्राय, इन्द्राग्नी ઇન્દ્ર-અગ્નિ इन्द्र-अग्नि, अश्विनौ च અને અશ્વિનીકુમારોની और अश्विनीकुमारोंका, स्तूयन्ते સ્તુતિ કરાય છે स्तवन किया जाता है, वेदवाक्येषु च અને વેદવાક્યોમાં और वेदवाक्योंमें, तथा અશ્વિનીકુમારના જેવી अश्विनीकुमारकी तरह, अन्या બીજા अन्य, देवता દેવતાઓની देवताओंका, न स्तूयन्ते हि સ્તુતિ કરવામાં આવતી નથી स्तवन नहीं किया जाता, साधिपैः ઇન્દ્રસહિત अपने राजा इन्द्रके साथ, अजरैः જરારહિત अजर, अमरैः મૃત્યુથી રહિત अमर, ध्रुवैः ચિરસ્થાયી शाश्वत, प्रयतै તથા જિતાત્મા तथा संयतात्मा, विबुधैः દેવતાઓથી देवताओंसे, एवम् આ પ્રમાણે इस तरह, अश्विनौ જો અશ્વિનીકુમારો यदि अश्विनीकुमार, भिषजौ વૈદ્યો છે वैद्य हैं, इति એ હેતુથી इस हेतुसे, पूज्येते પૂજાય છે पूजे जाते हैं, मृत्यु-व्याधि- તો મૃત્યુ-વ્યાધિ तो मृत्यु-व्याधि, जरावश्यैः તથા જરાને વશ जगके वशीभूत, दुःखप्रायै દુ.ખની અધિકતાવાળા दुःखकी अधिकतावाले, सुखार्थिभि तथा સુખની ઇચ્છાવાળા तथा सुखकी इच्छावाले, मर्त्यैः મનુષ્યોથી मनुष्योंसे, भिषज વૈદ્યોનુ वैद्योंका, अतिशक्तित પોતાની શક્તિથી પણ વિશેષ अपनी शक्तिसे भी अधिक, किं पुन. શા માટે क्यों, पूज्याः न स्यु પૂજન ન કરવામાં આવે? पूजन न किया जाय? ॥ ४६-५० ॥

46-50. Cups of soma, psalms, hymns, various kinds of burnt offerings and smoke-colored cattle are offered in sacrifice by the priests in honour of these two In the morning Indra drinks the libatory soma along with these two in the sacrificial place. It is again in their company that the great God rejoices in the 'Sautramani sacrifice'. Indra, Agni and the two Aswins—these are the four deities that are the most commonly invoked by the priests. No gods are praised in the vedic hymns to the same extent as these four. If the Aswin twins, in virtue of their office as healers, are thus held in honour by the very gods, including their chief, all of whom are unaging, immortal, changeless and self-controlled, what need then, is there to say, that physicians can never be honoured too much by mere mortals, who are subject to death, disease and old age and are for the most part miserable and who hunger for happiness?

४७. अश्विभ्या सहाश्नुते–सोम पिवति साश्विन (थ)
५०. दुःखप्रायै:–दुःखपातैः (थ)

प्राणाचार्यप्रशंसा—

**शीलवान्मतिमान् युक्तो द्विजातिः शास्त्रपारगः ।**
**प्राणिभिर्गुरुवत् पूज्यः प्राणाचार्यः स हि स्मृतः ॥५१॥**

प्राणिभि प्राणीओએ प्राणियोंको, शीलवान् सदाचार-सम्पन्न शीलवान, मतिमान् बुद्धिमान बुद्धिमान, युक्त युक्ति समजनार योजना जाननेवाला, शास्त्रपारग अने शास्त्रना पारने पामेला और शास्त्रपारंगत, द्विजाति ब्राह्मण वैद्यनी ब्राह्मण वैद्य, गुरुवत् गुरुनी पेठे गुरुकी तरह, पूज्य पूजा करवी जोईए पूजनीय है, हि कारण के क्योंकि, स ते वह, प्राणाचार्य प्राणाचार्य प्राणाचार्य, स्मृत गणाय छे कहलाता है ॥ ५१ ॥

51. The twice-born physician, who is endowed with character, intelligence and reason and has mastered the science of healing, deserves to be reverenced as a mentor by all men He indeed is regarded 'Life's Guardian'

**विद्यासमाप्तौ भिषजो द्वितीया जातिरुच्यते ।**
**अश्नुते वैद्यशब्दं हि न वैद्यः पूर्वजन्मना ॥५२॥**

विद्या-समाप्तौ विद्यानी समाप्ति थवाथी विद्या समाप्त होने पर, भिषज वैद्यनो वैद्यका, द्वितीया बीजो दूसरा, जाति. जन्म थयो जन्म हुआ, उच्यते एम कहेवाय छे ऐसा कहा जाता है, वैद्य वैद्य वैद्य, पूर्व-जन्मना पहेला जन्मथी पहले जन्मसे, वैद्य- शब्दम् 'वैद्य' ए नामने 'वैद्य' इस संज्ञाको, न अश्नुते पामतो नथी प्राप्त नहीं करता ॥ ५२ ॥

52 On the completion of his studies, the physician is said to be 're-born' and acquires the title of 'physician'. For no one is a physician by right of birth.

**विद्यासमाप्तौ ब्राह्मं वा सत्त्वमार्षमथापि वा ।**
**ध्रुवमाविशति ज्ञानात्तस्माद्वैद्यो द्विजः स्मृतः ॥५३॥**

विद्यासमाप्तौ आयुर्वेदविद्यानी समाप्ति थतां आयुर्वेदविद्याकी समाप्ति होने पर, ज्ञानात् ज्ञानने लीधे ज्ञानके कारण, ब्राह्मम् वा ब्राह्म ब्राह्म, अथ अपि वा के या, आर्षम् आर्ष आर्ष, सत्त्वम् सत्त्वनो सत्त्व, ध्रुवम् खरेखर निश्चयसे ही, आविशति प्रवेश थाय छे आ बसता है, तस्मात् तेथी इस लिए, वैद्य वैद्य वैद्य, द्विज द्विज द्विज, स्मृत कहेवाय छे कहाता है ॥५३॥

53. On the completion of his studies, the spirit of revelation or of inspiration of the truth descends into the student. It is by reason of this initiation, then, that a physician is called a 'Dwija or a twice-born one'.

**नाभिध्यायेन्न चाक्रोशेदहितं न समाचरेत् ।**
**प्राणाचार्यं बुध· कश्चिदिच्छन्नायुरनिस्वरम् ॥५४॥**

कश्चित् कोई पण कोई भी, बुधः डाह्या मनुष्ये बुद्धिमान पुरुष, अनित्वरम् दीर्घ दीर्घ, आयु आयुष्यनी आयुकी, इच्छन् इच्छा राखतां इच्छा करते हुए, प्राणाचार्यम् वैद्यनो वैद्यका, न अभिध्यायेत् द्रोह न करवो द्रोह न करे, न च आक्रोशेत् तेनी निन्दा न करवी न उसकी निन्दा करे, अहितम् तथा तेनुं अहित और उसका अहित भी, न न न, समाचरेत् करवु करे ॥५४॥

54 No thoughtful man, therefore, who seeks enduring life, should ever covet the possessions of the 'Guardian of Life' or revile him, or do any harm.

भिषज प्रत्यातुरस्य कर्तव्यम्—

**चिकित्सितस्तु संश्रुत्य यो वाऽसंश्रुत्य मानवः ।**
**नोपाकरोति वैद्याय नास्ति तस्येह निष्कृतिः ॥५५॥**

य मानव. जे पुरुष जो पुरुष, चिकित्सितः चिकित्सा थया पछी चिकित्सा हो जाने पर, संश्रुत्य धन आदि उपकार करवानुं कबूल करी धन आदि उपकारकी प्रतिज्ञा करके, असंश्रुत्य वा के नहि करी अथवा न करके भी, वैद्याय वैद्यनो वैद्यका, न उपाकरोति

५१. द्विजाति –त्रिजाति (घ फ)
५२. द्वितीया–तृतीया (त ध प)
५३. द्विजः–भिज. (त ध.)

५५. नोपाकरोति वैद्याय–वैद्याय नोपकुरुते (ग. घ.)

ઉપકારનો બદલો વાળતો નથી प्रत्युपकार नहीं करता, तस्य તેનો उसका, इह જગતમાં संसारमें, निष्कृतिः છુટકારો छुटकारा, न अस्ति થતો નથી नहीं है ॥५५॥

55. Whoever, having been treated by a physician, does not recompense him, whether or not there be a previous understanding for remuneration, that man, is beyond redemption.

वैद्यः स्वसुतानिवातुरान् चिकित्सेत —

**भिषगप्यातुरान् सर्वान् स्वसुतानिव यत्नवान् ।**
**आबाधेभ्यो हि संरक्षेदिच्छन् धर्ममनुत्तमम् ॥५६॥**

अनुत्तमम् અતિ ઉત્તમ अत्युत्तम, धर्मम् ધર્મની धर्मकी, इच्छन् ઇચ્છા કરતા इच्छा करता हुआ, भिषक् વૈદ્ય वैद्य, अपि પણ भी, यत्नवान् યત્નવાન થઈ यत्नवान हो कर, सर्वान् સઘળા सब, आतुरान् રોગીઓની रोगियोंकी, स्वसुतान् પોતાના પુત્રોની अपने पुत्र, इव પેઠે जैसी, आबाधेभ्यः રોગોમાંથી रोगोंसे, संरक्षेत् રક્ષા કરવી જોઈએ रक्षा करे ॥ ५६ ॥

56. For his part, the physician, too, should regard all his patients as if they were his own children and vigilantly guard them from all harm, considering this to be his highest religion

आयुर्वेदोपदेशो महर्षीणां धर्मार्थमेव—

**धर्मार्थं चार्थकामार्थमायुर्वेदो महर्षिभिः ।**
**प्रकाशितो धर्मपरैरिच्छद्भिः स्थानमक्षरम् ॥५७॥**

अक्षरम् स्थानम् મોક્ષની मोक्षकी, इच्छद्भिः ઇચ્છા રાખનારા इच्छा करनेवाले, धर्मपरैः ધર્મપરાયણ धर्मपरायण, महर्षिभिः મહર્ષિઓએ महर्षियोंने, धर्मार्थम् ધર્મ માટે धर्मके लिए, अर्थकामार्थम् च તેમજ અર્થ તથા કામને માટે एवं अर्थ तथा कामके लिए, आयुर्वेदः આયુર્વેદનો आयुर्वेदको, प्रकाशित પ્રકાશ કર્યો છે प्रकाश किया है ॥५७॥

57. With the object of righteousness, wealth and sense-satisfaction, the great sages devoted to righteousness and to seeking the indestructible state, promulgated the science of life

**नार्थार्थं नापि कामार्थमथ भूतदयां प्रति ।**
**वर्तते यश्चिकित्सायां स सर्वमतिवर्तते ॥५८॥**

यः જે जो, न अर्थार्थम् અર્થને માટે નહિ अर्थप्राप्तिके लिए नहीं, न अपि कामार्थम् તેમજ કામને માટે પણ નહિ कामप्राप्तिके लिए भी नहीं, अथ પણ किन्तु, भूतदयाम् ભૂતદયાને भूतदयाके, प्रति લક્ષ્ય કરીને उद्देशसे, चिकित्सायाम् ચિકિત્સામાં चिकित्सामें, वर्तते પ્રવૃત્તિ કરે છે प्रवृत्त होता है, सः તે વૈદ્ય वह वैद्य, सर्वम् સર્વથી सबसे, अतिवर्तते શ્રેષ્ઠ બને છે श्रेष्ठ होता है ॥ ५८ ॥

58 He who practises medicine neither for gain nor for gratification of the senses, but moved by compassion for creatures, surpasses all.

**कुर्वते ये तु वृत्त्यर्थं चिकित्सापण्यविक्रयम् ।**
**ते हित्वा काञ्चनं राशिं पांशुराशिमुपासते ॥५९॥**

ये तु પણ જે किन्तु जो, वृत्त्यर्थम् જીવનનિર્વાહને માટે जीवननिर्वाहके लिए, चिकित्सा-पण्यविक्रयम् ચિકિત્સાને વેંચવાની વસ્તુ ગણી તેનો વિક્રય चिकित्साको विक्रय-द्रव्य समझ कर उसका विक्रय, कुर्वते કરે છે करते है, ते તેઓ वे, काञ्चनम् સુવર્ણના सुवर्णके, राशिम् ઢગલાને ढेरको, हित्वा છોડીને छोड़ कर, पांशुराशिम् ધૂળના ઢગલાને. धूलिके ढेरको उपासते મેળવે છે पाता है ॥ ५९ ॥

59. Those who, for the sake of a living, make merchandise of medicine,

५६. धर्ममनुत्तमम्—आयुरनुत्तमम् (द)
५७ धर्मार्थ—नातमार्थ (त)
,, चार्थकामार्थम्—नार्थकामार्थम् (ष फ)
,, ,, —मोक्षकामार्थम् (प)

bargain for a dust-heap, letting go a heap of gold.

जीवितदातुर्भिषजः प्रशंसा—

**दारुणैः कृष्यमाणानां गदैर्वैवस्वतक्षयम् ।**
**छित्त्वा वैवस्वतान् पाशान् जीवितं यः प्रयच्छति ॥६०॥**

**धर्मार्थदाता सदृशस्तस्य नेहोपलभ्यते ।**
**न हि जीवितदानाद्धि दानमन्यद्विशिष्यते ॥६१॥**

दारुणै ભયંકર दारुण, गदै રોગોથી रोगोंसे वैवस्वतक्षयम् યમમંદિર તરફ यमगृहकी ओर, कृष्यमाणानाम् ખેંચાતાં પ્રાણીઓના खीचे जाते हुए प्राणियोंके, वैवस्वतान् पाशान् યમપાશોને यमपाशोंको, छित्त्वा કાપીને काट कर, य જે जो वैद्य, जीवितम् જીવનનું जीवन, प्रयच्छति દાન કરે છે देता है, तस्य તેના उसके, सदृश જેવો जैसा, धर्मार्थदाता ધર્મ તથા અર્થનું દાન કરનારો धर्म और अर्थका दान करनेवाला, इह આ જગતમાં इस ससारमें, न उपलभ्यते મળી શકતો નથી नहीं मिल सकता, हि કારણ કે क्योंकि, जीवितदानात् જીવનના દાન કરતાં जीवनदानसे, अन्यत् બીજું કોઈ अन्य कोई, दानम् દાન दान, न हि विशिष्यते શ્રેષ્ઠ નથી श्रेष्ठ नहीं है ॥६०-६१॥

60-61 There is no benefactor, either moral or material, comparable to those physician who regains those who are being dragged away by fierce diseases towards the abode of death, back to life, by severing the noose of death. For there is no other gift greater than that of life

**परो भूतदया धर्म इति मत्वा चिकित्सया ।**
**वर्तते य. स सिद्धार्थ· सुखमत्यन्तमश्नुते ॥६२॥**

यः જે વૈદ્ય जो वैद्य, भूतदया ભૂતદયા भूतदया, पर. પરમ परम, धर्मः ધર્મ છે धर्म है, इति એમ ऐसा, मत्वा સમજીને समझ कर, चिकित्सया ચિકિત્સામાં चिकित्सामें, वर्तते પ્રવૃત્તિ કરે છે प्रवृत्त होता है, स. તે वह, सिद्धार्थ· કૃતકૃત્ય થઈને कृतार्थ हो कर, अत्यन्तम् અત્યન્ત अत्यन्त, सुखम् સુખ सुखको, अश्नुते પ્રાપ્ત કરે છે पाता है ॥६२॥

62 He who practises medicine, holding compassion for creatures as the highest religion, is a man who has fulfilled his mission and attains supreme happiness.

चतुर्थपादोक्तविषयाः—

**तत्र श्लोकौ—**

**आयुर्वेदसमुत्थानं दिव्यौषधिविधिं शुभम् ।**
**अमृताल्पान्तरगुणं सिद्धं रत्नरसायनम् ॥६३॥**

**सिद्धेभ्यो ब्रह्मचारिभ्यो यदुवाचामरेश्वरः ।**
**आयुर्वेदसमुत्थाने तत् सर्वं संप्रकाशितम् ॥६४॥**

तत्र તે વિષયમાં उस विषयमें, श्लोकौ ઉપસંહારના બે શ્લોકો છે કે उपसहारके दो श्लोक है कि, आयुर्वेद- આયુર્વેદની आयुर्वेदका, समुत्थानम् ઉત્પત્તિ समुत्थान, शुभम् શુભ मंगलकारी, दिव्यौषधि- દિવ્ય ઓષધિઓની दिव्य ओषधियोंकी, विधिम् વિધિ विधि, अमृताल्पान्तर- અમૃત કરતાં થોડા ઓછા अमृतसे थोड़ा कम, गुणम् ગુણવાળુ गुणवाला, सिद्धम् સિદ્ધ सिद्ध, रत्नरसायनम् રત્નરસાયન (ઇંદ્રોક્ત રસાયન) વગેરે रत्न रसायन (इन्द्रोक्तरसायन) आदि, यत् જે जो, अमरेश्वरः ઇન્દ્રે इन्द्रसे, सिद्धेभ्यः સિદ્ધ પુરુષોને सिद्धोंको, ब्रह्मचारिभ्य. તથા બ્રહ્મચારીઓને तथा ब्रह्मचारियोंको, उवाच કહ્યું હતું कहा था, तत् તે वह, सर्वम् બધું सब, आयुर्वेद समुत्थाने 'આયુર્વેદસમુત્થાનીય' નામના પાદમાં आयुर्वेदसमुत्थानीय' नामके पादमें, संप्रकाशितम् સારી રીતે પ્રકાશિત કર્યું છે अच्छी तरह प्रकाशित किया है ॥६३-६४॥

६० ब–च ब )
६१ धर्मार्थदाता मदृशस्तस्य नेहोपलभ्यते–धर्मार्थं मदृशस्तस्य दाता न ह्योपपद्यते (य )
६२. चिकित्सया–चिकित्सिते (ध.)
६४. अमरेश्वरः–अमरोत्तमः (ब.)

Here are the two recapitulatory verses—

63-64 The advent of the Science of Life and the auspicious administration of sovereign herbs, the procedure, well-nigh comparable in virtue to ambrosia itself of vitalization by precious minerals etc., which were propounded by the Lord of immortals to the adepts in Brahmacharya—all this has been set forth in this topic on the 'Advent of the Science of Life'.

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सास्थाने रसायनाध्याये आयुर्वेदसमुत्थानीयो नाम रसायनपादश्चतुर्थः ॥ १-(४) ॥**

**समाप्तश्चायं रसायनाध्यायः ॥ १ ॥**

**इति** આ પ્રમાણે इस प्रकार, **अग्निवेशकृते** અગ્નિવેશે રચેલા अग्निवेशसे बनाये, **चरकप्रतिसंस्कृते** અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, **चिकित्सास्थाने** ચિકિત્સાસ્થાન વિષે चिकित्सास्थानमें, **रसायनाध्याये** રસાયનાધ્યાયમાં रसायनाध्यायमें, **आयुर्वेदसमुत्थानीय** આયુર્વેદસમુત્થાનીય आयुर्वेदसमुत्थानीय, **नाम** નામનો नामका, **चतुर्थः** ચોથો चौथा, **रसायनपाद** રસાયનપાદ સંપૂર્ણ થયો रसायनपाद समाप्त हुआ ॥ १-(४) ॥

**अयम्** આ यह, **रसायनाध्याय** રસાયનાધ્યાય रसायनाध्याय, **समाप्त**. સંપૂર્ણ થયો समाप्त हुआ ॥१॥

1-(4) Thus, in the Section on Therapeutics in the treatise compiled by Agnivesa and revised by Caraka the fourth quarter entitled 'The Advent of the Science of Life' of the chapter on vitalization is completed.

1. Thus the first chapter on vitalization is completed.

---

## द्वितीयोऽध्यायः ।

### બીજો અધ્યાય अध्याय दूसरा

### Chapter II

## वाजीकरणाध्याये प्रथमः पादः ।

વાજીકરણાધ્યાયમાં પ્રથમ પાદ

वाजीकरणाध्यायमें प्रथम पाद

### The first quarter of the chapter on Virilification

सप्रयोगशरमूलीयवाजीकरणपादोपक्रम. —

**अथातः संयोगशरमूलीयं वाजीकरणपादं व्याख्यास्यामः ॥१॥**

**इति ह स्माह भगवानात्रेयः ॥२॥**

**अथ अतः** હવે અહીંથી अब आगे, **संयोगशरमूलीयम्** 'સંયોગશરમૂલીય' નામના 'संयोगशरमूलीय नामके', **वाजीकरणपादम्** પહેલા વાજીકરણપાદનું प्रथम वाजीकरणपादका, **व्याख्यास्याम**. વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

**भगवान्** ભગવાન भगवान, **आत्रेय** આત્રેયે आत्रेयने, **इति ह** આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, **आह स्म** કહેલું છે कहा है ॥ २ ॥

1. We shall now expound the first quarter entitled 'The preparations of roots of pen-reed grass of the chapter on Virilification.'

2 Thus declared the worshipful Atreya.

वाजीकरणस्यावश्यकर्तव्यता—

**वाजीकरणमन्विच्छेत् पुरुषो नित्यमात्मवान् ।**
**तदायत्तौ हि धर्मार्थौ प्रीतिश्च यश एव च ॥३॥**
**पुत्रस्यायतनं ह्येतद्गुणाश्चैते सुताश्रयाः ।**

**आत्मवान्** સદાચારવાળો आत्मवान, पुरुष. પુરુષે पुरुष, **नित्यम्** હમેશાં नित्य, **वाजीकरणम्** વાજીકરણની वाजीकरणकी, **अन्विच्छेत्** ઇચ્છા કરવી इच्छा करे, **हि**

કારણ કે क्योंकि, धर्म अर्थौ ધર્મ - અર્થ धर्म-अर्थ, प्रीति च પ્રીતિ प्रीति, यश च एव અને યશ પણ और यश भी, तत् તેને उसीके, आयत्तौ हि આધીન છે आश्रित हैं, एतत् આ यह, पुत्रस्य પુત્રોત્પત્તિનું पुत्र-प्राप्तिका, आयतनम् કારણ છે कारण है एते અને આ और ये, गुणा च ગુણો गुण, सुताश्रया. પુત્રનો આશ્રય કરીને રહેલા છે पुत्राश्रित है ॥ ३½ ॥

3-3½ The man of self-restraint should seek always to maintain his virility by means of virilification, as righteousness, wealth, affection and good repute are dependent on the maintenance of healthy manhood It, again, is the means of begetting a son in whom these qualities are based

वाजीकरणेषु स्त्रियाः श्रेष्ठत्वं तत्र हेतु.—

**वाजीकरणमग्र्यं च क्षेत्रं स्त्री या प्रहर्षिणी ॥४॥**
**इष्टा ह्येकैकशोऽप्यर्थाः परं प्रीतिकराः स्मृताः ।**
**किं पुनः स्त्रीशरीरे ये सङ्घातेन प्रतिष्ठिताः ॥५॥**
**(सङ्घातो हीन्द्रियार्थानां स्त्रीषु नान्यत्र विद्यते।)**
**स्त्र्याश्रयो हीन्द्रियार्थो यः स प्रीतिजननोऽधिकम् ।**
**स्त्रीषु प्रीतिर्विशेषेण स्त्रीष्वपत्यं प्रतिष्ठितम् ॥६॥**
**धर्मार्थौ स्त्रीषु लक्ष्मीश्च स्त्रीषु लोकाः प्रतिष्ठिताः ।**
**सुरूपा यौवनस्था या लक्षणैर्या विभूषिता ॥७॥**
**या वश्या शिक्षिता या च सा स्त्री वृष्यतमा मता ।**

या જે जो, स्त्री સ્ત્રી स्त्री, प्रहर्षिणी મહર્ષ ઉપજાવનારી છે प्रहर्षदायक है, क्षेत्रम् તે ક્ષેત્ર છે वह क्षेत्र है, अग्र्यम् અને શ્રેષ્ઠ और श्रेष्ठ, वाजीकरण च વાજી-છે वाजीकरण है, हि કારણકે क्योंकि, एकैकशः એક એક एक एक. अपि પણ भी, इष्टाः અનુકૂળ प्रिय, अर्था. વિષય विषय परम् અત્યંત अत्यन्त, प्रीतिकराः પ્રીતિ કરનાર प्रीतिकर, स्मृताः માનેલ છે તો माना गया है तो, ये स्त्रीशरीरे જેઓ સ્ત્રીશરીરમાં जो स्त्रीशरीरमें, सङ्घातेन प्रतिष्ठिता સમુદાયરૂપે રહેલા છે सघातरूपसे स्थित हैं, किम् पुन તેઓનું કહેવું જ શું? उनका क्या कहना?, हि કારણકે क्योंकि, इन्द्रियार्थानाम् ઇન્દ્રિયોના વિષયોનો इन्द्रियोंके विषयोंका, सङ्घात સમુદાય सघात, स्त्रीषु સ્ત્રીઓમાં જ स्त्रियोंमें ही, विद्यते છે है, अन्यत्र न બીજે કોઈ સ્થળે નથી अन्यत्र नहीं, य જે जो, इन्द्रियार्थ ઇન્દ્રિયનો વિષય इन्द्रियका विषय स्त्र्याश्रय સ્ત્રીઓનો આશ્રય કરીને રહ્યો હોય છે स्त्रियोंमें आश्रित है, स તે वह, अधिकम् અત્યંત अधिक, प्रीतिजनन हि પ્રીતિને ઉત્પન્ન કરનારો છે प्रीतिजनक है, स्त्रीषु સ્ત્રીઓમાં स्त्रियोंमे, विशेषेण અધિકતાથી अधिकतासे, प्रीति પ્રીતિ રહે છે प्रेम रहना है, स्त्रीषु સ્ત્રીઓમાં स्त्रियोंमें, अपत्यम् સન્તતિ सन्तान, प्रतिष्ठितम् રહેલી છે प्रतिष्ठित है, स्त्रीषु સ્ત્રીઓમાં स्त्रियोंमें, धर्मार्थौ ધર્મ અર્થ धर्म, अर्थ, लक्ष्मीः च તથા લક્ષ્મી રહેલ છે तथा लक्ष्मी प्रतिष्ठित है, स्त्रीषु અને સ્ત્રીઓમાં और स्त्रियोंमें, लोका લોકો लोक, प्रतिष्ठिताः રહેલા છે प्रतिष्ठित है, या જે जो सुरूपा સુંદર રૂપવાળી सुरूप, यौवनस्था તેમજ યુવાન હોય एवं युवती है, या જે जो, लक्षणैः શુભ લક્ષણોથી शुभ चिह्नोंसे, विभूषिता વિભૂષિત હોય युक्त है या જે जो, वश्या આધીન રહેનારી હોય आज्ञाकारिणी है, या च અને જે और जो, शिक्षिता શિક્ષિત હોય शिक्षित है, सा स्त्री તે સ્ત્રીને वह स्त्री, वृष्यतमा અત્યંત વૃષ્ય अत्यंत वृष्य, मता માનેલી છે मानी गई है ॥ ४-७½ ॥

4-7½ The best means of stimulating one's manhood (the best agent of virilification), is an exhilarating sexual partner in the wife. When the desired sense-objects yield great pleasure even if singly experienced by the senses, then what need be said of the person of the woman in whom the delectable objects of all the senses are found established together. Such combination of the delectable objects of all the senses is

५ इष्टा ह्येकैकशोऽप्यर्था—एकत्वेनापि विषयाः (ग. प)
,, प्रतिष्ठिता —व्यवस्थिता (क. ग.)

found only in the person of the woman and nowhere else Indeed it is the object that is found in the person of the woman that evokes our pleasure greatly Hence it is that man's pleasure is mainly in the woman and that in her is established the source of progeny. In her also are established righteousness, wealth, auspiciousness and the two worlds—this and the other. The woman who is good-looking, young, endowed with auspicious physiognomic marks, amiable and is skilled in fine arts, acts as the best virilific

गमनार्हा स्त्री—

नानाभक्त्या तु लोकस्य दैवयोगाच्च योषिताम् ॥८॥
तं तं प्राप्य विवर्धन्ते नरं रूपादयो गुणाः ।
वयोरूपवचोहावैर्या यस्य परमाङ्गना ॥ ९ ॥
प्रविशत्याशु हृदयं दैवाद्वा कर्मणोऽपि वा ।
हृदयोत्सवरूपा या या समानमनःशया ॥१०॥
समानसत्त्वा या वश्या या यस्य प्रीयते प्रियैः ।
या पाशभूता सर्वेषामिन्द्रियाणां परैर्गुणैः ॥११॥
यया वियुक्तो निस्त्रीकमरतिर्मन्यते जगत् ।
यस्या ऋते शरीरं ना धत्ते शून्यमिवेन्द्रियैः ॥१२॥
शोकोद्वेगारतिभयैर्या दृष्ट्वा नाभिभूयते ।
याति यां प्राप्य विस्रम्भं दृष्ट्वा हृष्यत्यतीव याम् ॥१३॥
अपूर्वामिव यां याति नित्यं हर्षातिवेगतः ।

९. हावै.—भावै (ध)
१० हृदयोत्सवरूपा—हृदयोत्सवभूता (क ध)
,, समानमन शया—समानमन श्रया (प)
११. प्रियै —प्रिये (ध)
,, ,, —नरै (ध.)
१३. विस्रम्भ—विभ्रंशम् (प)
१४. हर्षातिवेगतः—हर्षाभिभूषितः (ध.)

गत्वा गत्वाऽपि बहुशो यां तृप्तिं नैव गच्छति ॥१४॥
सा स्त्री वृष्यतमा तस्य नानाभावा हि मानवाः ।
अतुल्यगोत्रां वृष्यां च प्रहृष्टां निरुपद्रवाम् ॥१५॥
शुद्धस्नातां व्रजेन्नारीमपत्यार्थी निरामयः ।

लोकस्य तु મનુષ્યોની लोगकी, नानाभक्त्या જુદી જુદી રુચિને લઈ भिन्न भिन्न प्रकारकी रुचि होनेसे, दैवयोगात् च તથા દૈવયોગથી तथा दैवयोगसे, योषिताम् સ્ત્રીઓના स्त्रियोंके, रूपादयः રૂપ વગેરે रूपादि, गुणाः ગુણો गुण, तम् तम् તે તે उस उस, नरम् પુરુષને पुरुषको, प्राप्य પ્રાપ્ત કરીને पा कर, विवर्धन्ते વૃદ્ધિ પામે છે बढते है, या परमा જે ઉત્તમ जो उत्तम, अङ्गना સ્ત્રી स्त्री, वयः-रूप- વય- રૂપ वय- रूप, वचः- हावैः વાણી અને હાવભાવ વડે बातें और हावभावके कारण, दैवात् वा દેવયોગથી दैवयोगसे, कर्मण अपि वा અથવા કોઈ કર્મથી अथवा कोई कर्मसे, यस्य જેના जिसके, हृदयम् હૃદયમાં हृदयमें, आशु શીઘ્ર शीघ्र, प्रविशति પ્રવેશ કરે છે बैठ जाती है, या જે जो, हृदयोत्सवभूता હૃદયના ઉત્સવરૂપ હોય છે हृदयको आनन्दयुक्त करनेवाली है, या જે जो, समानमनःशया સમાન કામનાવાળી હોય છે समान कामेच्छावाली है, या જે जो, समानसत्त्वा સમાન મનવાળી હોય છે समान मनवाली है, या જે जो, वश्या વશ રહેનારી હોય છે वश्य है, या જે जो, यस्य જેની जिसके, प्रियैः પ્રિય વસ્તુઓ વડે प्रिय भावोंसे, प्रीयते પ્રસન્ન થાય છે प्रसन्न होती है, या જે जो, परैः गुणैः શ્રેષ્ઠ ગુણો વડે श्रेष्ठ गुणोंके कारण, सर्वेषाम् સર્વ सब, इन्द्रियाणाम् ઇન્દ્રિયોના इन्द्रियोंको, पाशभूता પાશરૂપ હોય છે फास लेनेवाली है, ना પુરુષ पुरुष, यया જેનાથી जिससे, वियुक्त વિયોગ પામતાં वियोग होने पर, अरतिः બેચેન થઈ वेचैन हो कर, जगत् જગતને जगतको, निस्त्रीकम् સ્ત્રીરહિત स्त्रीरहित, मन्यते માને છે समझता है, यस्याः ऋते તથા જેના સિવાય तथा जिसके बिना, इन्द्रियैः ઇન્દ્રિયોથી इन्द्रियोंसे, शून्यम् इव જાણે શૂન્ય હોય એવા शून्य प्रतीत होते, शरीरम् શરીરને शरीरको, धत्ते ધારણ કરે છે धारण करता है, याम्

१५. प्रहृष्टां—प्रकृष्टां (ग)

दृष्ट्वा જેને જોઈને जिसे देख कर, शोक-उद्वेग- શોક ઉદ્વેગ शोक उद्वेग, अरति-भयैः અરતિ અને ભયથી ત્રેનેથી तथा भयसे, न अभिभूयते પરાભવ પામતો નથી अभिभूत नहीं होता, याम् જેને जिसे, प्राप्य પ્રાપ્ત કરીને प्राप्त करके, विस्रम्भम् વિશ્વાસને विश्वासको, याति પામે છે प्राप्त हो जाता है, याम् दृष्ट्वा જેને જોઈને जिनको देख कर, अतीव અત્યન્ત अत्यन्त, हृष्यति હર્ષયુક્ત થાય हर्षयुक्त होता है, याम् જેનામાં जिसको, हर्षातिवेगतः હર્ષના અતિ વેગથી हर्षके अति वेगसे, नित्यम् હમેશાં नित्य, अपूर्वाम् इव અપૂર્વ હોય તેમ नवीन स्त्रीकी तरह, याति ગમન કરે છે भोग करता है, याम् જેનામાં जिसके साथ, बहुश ઘણીવાર बहुत बार, गत्वा गत्वा अपि ગમન કરી કરીને પણ गमन कर करके भी, तृप्तिम् તૃપ્તિને तृप्तिको, न एव गच्छति પામતો જ નથી प्राप्त नहीं होता, सा स्त्री તે સ્ત્રી वह स्त्री, तस्य તેને માટે उसके लिए, वृष्यतमा અતિ વૃષ્ય છે अति वृष्य है, हि કારણ કે क्योंकि, मानवा મનુષ્યો मनुष्य, नानाभावाः અનેક પ્રકારની રુચિવાળા હોય છે भिन्न भिन्न रुचिवाले होते हैं, निरामयः નીરોગ પુરુષે नीरोग पुरुष, अपत्यार्थी સંતાનની ઇચ્છાવાળા થઈ सन्तानकी इच्छावाला हो कर, अतुल्यगोत्राम् અસમાન ગોત્રવાળી अतुल्य गोत्रवाली, वृष्याम् વૃષ્ય वृष्य, प्रहृष्टाम् હર્ષયુક્ત कामुक, निरुपद्रवाम् રોગ વિનાની व्याधिरहित, शुद्धस्नाताम् च અને ઋતુસ્નાતા शुद्धि-स्नान की हुई, नारीम् સ્ત્રીમાં स्त्रीसे, भजेत् ગમન કરવુ भोग करे ॥ ८-१५½ ॥

8-15½. The qualities of beauty etc., in the woman develop suitably to the nature of the husband They are found either as result of their destiny or as a result of the varied tastes of people She, who is the best of women for a man, and endears herself to him quickly by virtue of her age, form, speech and gestures either as a result of destiny or the merits of action in this very life, who is the delight of his heart, who returns his love in equal measure, who is akin to him in mind, who is amenable to and is pleased with his advances, who enthralls all his senses by her excellent qualities, separated from whom he feels the world to be desolate, joyless, but for whom he feels his body a burden and as if devoid of its senses, at the sight of whom he is untouched by grief, distress, depression or fear, approaching whom he gains confidence, seeing whom he gets greatly elated, whom he approaches daily with great eagerness as if for the first time, and uniting with whom in sex repeatedly he remains yet unsatisfied, such a woman, is the best of virilifics to him; and men indeed are of varied temperaments. The man in perfect health should approach, desiring progeny, such a woman, who is of a different clan, who is free from ill-health, who has taken her post-menstrual purificatory bath and who is cheerful and responsive.

निरपत्यस्य निन्दा—

अच्छायश्चैकशाखश्च निष्फलश्च यथा द्रुमः ॥१६॥
अनिष्टगन्धश्चैकश्च निरपत्यस्तथा नरः ।
चित्रदीपः सरः शुष्कमधातुर्धातुसन्निभः ॥१७॥
निष्प्रजस्तृणपूलीति मन्तव्यः पुरुषाकृतिः ।
अप्रतिष्ठश्च नग्नश्च शून्यश्चैकेन्द्रियश्च ना ॥१८॥
मन्तव्यो निष्क्रियश्चैव यस्यापत्यं न विद्यते ।

यथा જેવું जैसे, अच्छाय च છાયા વિનાનું छाया-रहित, एकशाख च એકજ સ્વરૂપવાળું एक ही स्वरूप-वाला, निष्फलः च ફલરહિત फलरहित, अनिष्टगन्ध.

१८. मन्तव्यः–ज्ञातव्यः (ध.)

च અને અણગમો લાવે એવી ગંધવાળુ और अनिष्ट गन्धवाला, एक च द्रुम કોઈ એકલિયુ વૃક્ષ હોય છે कोई अकेला वृक्ष होता है, तथा તેવો वैसा ही, निरपत्यः સન્તાન વિનાનો अपत्यरहित, नर. પુરુષ છે पुरुष है, निष्प्रजः પ્રજા વિનાનો संतानरहित पुरुष, चित्रदीपः ચિત્રમાં આળખેલા દીવા જેવો चित्रलिखित दीपके सदृश, शुष्कम् सर સૂકાયેલા સરોવર જેવો सूखे सरोवरके सदृश, धातुसन्निभ. અને ધાતુ જેવા લાગતા और धातुके सदृश पतीत होते, अधातु ધાતુથી ભિન્ન પદાર્થ જેવો છે धातुसे भिन्न पदार्थके सदृश है, पुरुषाकृति તેને પુરુષની આકૃતિવાળો उसको पुरुषके आकारवाला तृणपूली ઘાસનો સમૂહ तृणका समूह, ज्ञातव्य· જાણવો જોઈએ मानना चाहिए, यस्य જેને जिसको, अपत्यम् સંતાન सन्तान, न विद्यते હોતુ નથી नहीं है, ना તે પુરુષને उस पुरुषको, अप्रतिष्ठ च પ્રતિષ્ઠા વિનાનો पतिष्ठारहित, नग्न च નગ્ન नग्न, शून्य च શૂન્ય शून्य, एकेन्द्रिय च એક જ ઇન્દ્રિયવાળો एक ही इन्द्रियवाला, निष्क्रिय च અને ક્રિયારહિત और निष्क्रिय, मन्तव्यः જાણવો જોઈએ समझना चाहिए ॥ १६-१८½ ॥

16-18½. The man without progeny is like a solitary tree that yields no shade, which has no branches, which bears no fruit and is devoid of any pleasant odour. The man without progeny is to be regarded as a painted lamp, a dried up lake, or a pseudo-metal which only has the appearance of the precious metal, and is like a man of straw possessing only the shape of man Again, such a man without progeny is regarded to be not well-established, bare, like a void, and possessed of only one sense and as having lived a purposeless life.

**बहुप्रजस्य प्रशंसा—**

**बहुमूर्तिर्बहुमुखो बहुव्यूहो बहुक्रियः ॥१९॥**
**बहुचक्षुर्बहुज्ञानो बह्वात्मा च बहुप्रजः ।**
**मङ्गल्योऽयं प्रशस्योऽयं धन्योऽयं वीर्यवानयम् ॥२०॥**
**बहुशाखोऽयमिति च स्तूयते ना बहुप्रजः ।**

बहुप्रजः ઘણાં સંતાનવાળો પુરુષ बहुत सन्तानवाला पुरुष, बहुमूर्तिः ઘણી મૂર્તિવાળો बहुत मूर्तियोंवाला, बहुमुखः ઘણાં મુખવાળો बहुत मुखवाला, बहुव्यूह. ઘણા સંઘવાળો बहुत संघवाला, बहुक्रियः બહુ ક્રિયાવાળો बहुत क्रियाओंवाला, बहुचक्षु· ઘણાં ચક્ષુઓવાળો बहुत नेत्रवाला, बहुज्ञान ઘણા જ્ઞાનવાળો बहुत ज्ञानवाला, बह्वात्मा च અને ઘણા આત્માવાળો થાય છે और बहुत आत्माओंवाला होता है, बहुप्रजः ઘણાં સન્તાનવાળો बहुत संतानवाला, ना પુરુષ पुरुष, अयम् આ यह, मङ्गल्य મંગલમય છે मंगलकारक है, अयम् આ यह, प्रशस्य પ્રશંસાયોગ્ય છે प्रशंसनीय है, अयम् આ यह वीर्यवान् વીર્યવાળો છે वीर्यवान है, अयम तथा આ और यह, बहुशाख च બહુ શાખાઓવાળો છે बहुत शाखायुक्त है, इति એમ ऐसा, स्तूयते વખણાય છે बखाना जाता है ॥ १९-२०½ ॥

19 20½ The man of numerous progeny is praised as one possessing a multiplicity of forms, faces, structures, actions, eyes, intellects and souls Such a man is hailed as being auspicious, praiseworthy, blessed, virile and the source of many geneological branches.

**प्रीतिर्बलं सुखं वृत्तिर्विस्तारो विपुलं कुलम् ॥२१॥**
**यशो लोकाः सुखोदर्कास्तुष्टिश्चापत्यसंश्रिताः ।**
**तस्मादपत्यमन्विच्छन् गुणांश्चापत्यसंश्रितान् ॥२२॥**
**वाजीकरणनित्यः स्यादिच्छन् कामसुखानि च ।**

प्रीति. પ્રીતિ प्रीति, बलम् બલ बल, सुखम् સુખ सुख, वृत्ति· આજીવિકા जीविका, विस्तार વિસ્તાર

२० बहुज्ञानो बह्वात्मा च—बहुज्ञानो विद्वान्स च (ह.)
,, धन्योऽय वीर्यवानयम्—वीर्यवानयमुच्यते (च)
२१ विपुलम्—विभवः (च.)

विस्तार, विपुलम् બહોળું बड़ा, कुलम् કુટુમ્બ कुल, यशः યશ यश, सुखोदर्काः પરિણામમાં સુખ આપનાર सुखावह, लोकाः લોકો स्वर्गादि लोक, तुष्टिः च तथा સંતોષ और आनंद, अपत्यसंश्रिताः સંતતિને આધારે રહ્યાં છે सन्तान पर आश्रित है, तस्मात् તે માટે इस लिए, अपत्यम् સંતાન संतान, अपत्य-संश्रितान् અને સંતાન પર આધાર રાખનારા और सन्तान पर आश्रित, गुणान् ગુણોને गुणोंको, अन्विच्छन् ઇચ્છનાર चाहनेवाला, कामसुखानि च तथा કામસુખોને तथा कामसुखकी, इच्छन् ઇચ્છનાર પુરુષે इच्छावाला पुरुष, वाजीकरण-नित्यः વાજીકરણનું નિત્ય સેવન કરનાર वाजीकरणका नित्य सेवन करनेवाला, स्यात् થવું જોઈએ बने ॥ २१-२२½ ॥

21-22½. Affection, strength, happiness, livelihood, expansion, numerousness of kinsmen, fame, the happy results pertaining to all the worlds and satisfaction are all dependent upon progeny. It is therefore that the man desirous of progeny, the merits dependent on progeny and the pleasure of conjugal life, should always take virilifying medications

**उपभोगसुखान् सिद्धान् वीर्यापत्यविवर्धनान् ॥२३॥**
**वाजीकरणसंयोगान् प्रवक्ष्याम्यत उत्तरम् ।**

अतः આ इसके, उत्तरम् પછી बाद, उपभोग-सुखान् ઉપભોગમાં સુખકારક आसानीसे सेवन किये जा सकनेवाले, वीर्य-अपत्य- વીર્ય અને સંતાનને वीर्य तथा अपत्यके, विवर्धनान् વધારનાર वर्धक, सिद्धान् સિદ્ધ सिद्ध, वाजीकरण-संयोगान् વાજીકરણ યોગો वाजीकरण योगोंको, प्रवक्ष्यामि કહીશ कहूंगा ॥ २३½ ॥

23. We shall hereafter describe tried virilifying preparations which increase the pleasure of sexual union, virility and progeny.

वृंहणी गुटिका –

**शरमूलेक्षुमूलानि काण्डेक्षुः सेक्षुवालिका ॥२४॥**
**शतावरी पयस्या च विदारी कण्टकारिका ।**
**जीवन्ती जीवको मेदा वीरा चर्षभको बला ॥२५॥**
**ऋद्धिर्गोक्षुरकं रास्ना आत्मगुप्ता पुनर्नवा ।**
**एषां त्रिपलिकान् भागान् माषाणामाढकं नवम् ॥२६॥**
**विपाचयेज्जलद्रोणे चतुर्भागं च शेषयेत् ।**
**तत्र पेष्याणि मधुकं द्राक्षा फल्गूनि पिप्पली ॥२७॥**
**आत्मगुप्ता मधूकानि खर्जूराणि शतावरी ।**
**विदार्यामलकेक्षूणां रसस्य च पृथक् पृथक् ॥२८॥**
**सर्पिषश्चाढकं दद्यात् क्षीरद्रोणं च तद्भिषक् ।**
**साधयेद्घृतशेषं च सुपूतं योजयेत् पुनः ॥२९॥**
**शर्करायास्तुगाक्षीर्याश्चूर्णैः प्रस्थोन्मितैः पृथक् ।**
**पलैश्चतुर्भिर्मागध्याः पलेन मरिचस्य च ॥ ३० ॥**
**त्वगेलाकेशराणां च चूर्णैरर्धपलोन्मितैः ।**
**मधुनः कुडवाभ्यां च द्वाभ्यां तत्कारयेद्भिषक् ॥३१॥**
**पलिका गुलिकास्त्यानास्ता यथाग्नि प्रयोजयेत् ।**

शरमूल- શરમૂલ शरमूल, इक्षुमूलानि શેરડીનાં મૂળ ईखकी जड, काण्डेक्षु કાંડેક્ષુ काडेक्षु, सेक्षुवालिका એખરો તેમજ तालमखाना एवं, शतावरी શતાવરી शतावरी, पयस्या ક્ષીરવિદારી विलाईकन्द, विदारी ભોંયકોળું विलाईकन्द, कण्टकारिका च બેઠી ભોરીંગણી कटेरी, जीवन्ती ડોડી जीवन्ती, जीवक જીવક जीवक मेदा મેદા

२४ शरमूल–शरदर्भ (प)
२६ गोक्षुरक–गोक्षुरवो (क.)
,, एषां त्रिपलिकान् भागान्–पृथक् त्रिपलिकान्कृत्वा (च ञ थ)
,, भागान्–कृत्वा (ङ)
२७ विपाचयेज्जलद्रोणे जलद्रोणे विपक्तव्यम् (ग)
,, शेषयेत्- शोष्येत (ङ न)
,, विपाचयेज्जलद्रोणे चतुर्भागं च शेषयेत्–जलद्रोणे विपक्तव्य-माढकं पादशेषयेत (थ प)
२८ मधूकानि खर्जूराणि–मधूकं च खर्जूरं च (च)
,, खर्जूराणि–खर्जूरं (क.)
२९ सर्पिषश्चाढकम्–सर्पिषश्चाढके (प.)
३१½. गुलिका–गुटिका (थ)
,, स्त्यानाः-कृत्वा (द. थ)

मेदा, वीरा शतावरी શતાવર, ऋषभक. ऋषभक ऋषभक, बला च બલા बला, ऋद्धिः ઋદ્ધિ ऋद्धि, गोक्षुरक· ગોખરુ गोखरू, रास्ना રાસ્ના वायसुरई, आत्मगुप्ता કૌંચાં તેમજ केवाँच एव, पुनर्नवा સાટોડી गदहपुरना, एषाम् આ इनके, त्रिपलिकान् બાર બાર તોલાના तीन तीन पलके, भागान् ભાગોને भागोंको, माषाणाम् नवम् आढकम् तथा २५६ તોલા નવા અડદને तथा २५६ तोले ताजे उड़दको, जलद्रोणे १०२४ તોલા પાણીમાં १०२४ तोले जलमें, विपाचयेत् પકાવવા पकावे, चतुर्भागम् च અને ચોથો ભાગ और चौथाई, शेषयेत् બાકી રાખવો शेष रक्खे, तत्र તેમાં उसमें मधुकम् જેઠીમધ मुलहठी, द्राक्षा દ્રાક્ષ मुनक्के, फलानि અંજીર अंजीर, पिप्पली પીપર पिप्पली, आत्मगुप्ता કૌચાં केवाँच, मधूकानि મહુડાં महुवा, खर्जूराणि ખજૂર खजूर, शतावरी च અને શતાવરીનો और शतावरीका, पेष्याणि ૬૪ કલ્ક, विदारी- ભોંયકોળુ विलाईकन्द, आमलक- આમળાં आवले, इक्षूणाम् च तथा શેરડીનો और ईखके, रसस्य च રસ रस, सर्पिषः च तथा ઘીના एवं घीके, पृथक् જુદા पृथक्, पृथक् જુદા पृथक्, आढकम् २५६ તોલા २५६ तोले, क्षीरद्रोणम् च અને દૂધના १०२४ તોલા और दूधके १०२४ तोले, दद्यात् મેળવવા देवे, भिषक् વૈદ્ય वैद्य, तत् ते સર્વને उन सबको, घृतशेषम् च ઘી બાકી રહેતાં સુધી घृत शेष रहने तक, साधयेत् પકાવવું पकावे, सुपूतम् વસ્ત્રથી ગાળી લઈને अच्छी तरह छान कर, पुनः તેમાં વળી फिर उसमें, शर्करायाः સાકર चीनी, तुगाक्षीर्याः અને વાંસકપૂર तथा वंश लोचनमेंसे, पृथक् દરેકનું प्रत्येकके, प्रस्थोन्मिते ६४ તોલા ६४ तोले, चूर्णैः ચૂર્ણ चूर्ण, मागध्याः तथा પીપરનું और पिप्पलीके, चतुर्भिः पलैः १६ તોલા ચૂર્ણ १६ तोले चूर्ण, मरिचस्य च અને મરીનું और मरिच, पलेन ४ તોલા ચૂર્ણ चार तोले चूर्ण, त्वक्- તજ और दालचीनी, एला- એલચી इलायची केशराणाम् च અને નાગકેશર और नागकेशरमेंसे, अर्धपलोन्मितैः પ્રત્યેકનું બે તોલા प्रत्येकके दो तोले, चूर्णैः ચૂર્ણ चूर्ण, मधुन च तथा મધ और मधुके, द्वाभ्याम् कुडवाभ्याम् ३२ તોલા ३२ तोलेसे, योजयेत् મેળવવાં एकत्र मिश्रित करे, भिषक् तत् વૈદ્ય તેની वैद्य उसकी, पलिकाः ४-४ તોલાની ४-४ तोलेकी, खराः કઠણ कठिन, गुटिकाः ગોળીઓ गोलियां, कारयेत् કરાવવી बनावे, ताः તેઓને उनका, यथाग्नि જઠરાગ્નિના બળ પ્રમાણે अग्निबलके अनुसार, प्रयोजयेत् પ્રયોગ કરવો प्रयोग करे ॥ २४-३१½ ॥

24-31½. The roots of pen-reed grass, sugar-cane, giant sugar-cane, long leaved barleria, climbing asparagus, white yam, yellow berried night-shade, cork swallow wort, jivaka, meda, cuscus grass, rishabhaka, heart-leaved sida, riddhi, small caltrops, indian groundsel, cowage, hog's weed—12 tolas each of these with 256 tolas of fresh black gram, should be decocted in 1024 tolas of water till it is reduced to its one fourth quantity In it should be added the paste of liquorice, grapes, figs, long pepper, cowage, mahwah, dates, and climbing asparagus 64 tolas in all, 256 tolas of the juice of each of emblic myrobalan, white yam, and sugar-cane, along with ghee 256 tolas and milk 1024 tolas—all these the physician should boil till only the ghee is left and should strain it well with a piece of cloth; then he should mix it again with 64 tolas each of sugar and the powder of bamboo manna, long pepper 16 tolas, black pepper 4 tolas, two tolas in all of the powders of cinnamon, cardamom and fragrant poon and honey 32 tolas, the physician should prepare from this thickened mass, pills of 4 tolas each and prescribe them according to the strength of the patient's gastric fire

एष वृष्यः परं योगो बृंहणो बलवर्धनः ॥३२॥
अनेनाश्व इवोदीर्णो बली लिङ्गं समर्पयेत् ।
(इति बृंहणीगुटिका ।)

एष. આ यह, योग યોગ योग, परम् અત્યન્ત अत्यन्त, वृष्यः વૃષ્ય वीर्यवर्धक, बृंहण બૃંહણ बृंहण, बलवर्धन અને બલવર્ધક છે तथा बलवर्धक है, अनेन આના સેવનથી इसके सेवनसे, अश्व इव ઘોડાની પેઠે अश्वकी तरह, उदीर्ण बली કામવેગમાં આવેલો તથા બળવાન પુરુષ कामवेगवाला एवं बलवान पुरुष, लिङ्गम् ઉપસ્થને उपस्थको, समर्पयेत અર્પણ કરી શકે છે अर्पण कर सकता है ॥ ३२½ ॥ (इति આ यह, बृंहणी गुटिका બૃંહણી ગુટિકા છે बृंहणी गुटिका है)

32-32½. This preparation is highly virilific, roborant and strengthening, and acquiring by its use, stallion-like vigour, man enjoys sexual intercourse Thus has been described the roborant pill.

वाजीकरणं घृतम्—

माषाणामात्मगुप्ताया बीजानामाढकं नवम् ॥३३॥
जीवकर्षभकौ वीरां मेदामृद्धिं शतावरीम् ।
मधुकं चाश्वगन्धां च साधयेत् कुडवोन्मिताम् ॥३४॥
रसे तस्मिन् घृतप्रस्थं गव्यं दशगुणं पयः ।
विदारीणां रसप्रस्थं प्रस्थमिक्षुरसस्य च ॥३५॥
दत्त्वा मृद्वग्निना साध्यं सिद्धं सर्पिर्निधापयेत् ।
शर्करायास्तुगाक्षीर्याः क्षौद्रस्य च पृथक् पृथक् ॥३६॥
भागांश्चतुष्पलांस्तत्र पिप्पल्याश्चावपेत् पलम् ।
पलं पूर्वमतो लीढ्वा ततोऽन्नमुपयोजयेत् ॥३७॥
य इच्छेदक्षयं शुक्रं शेफसश्चोत्तमं बलम् ।
(इति वाजीकरणं घृतम् ।)

माषाणाम् નવા અડદ ૨૫૬ તોલા नवीन उदद २५६ तोले, आत्मगुप्तायाः તેમજ કૌચાંના एवं केवाँचके, बीजानाम् नवम् आढकम् નવાં બીજ ૨૫૬ તોલા नवीन बीज २५६ तोले, जीवक- જીવક जीवक, ऋषभकौ ઋષભક ऋषभक, वीराम् શતાવરી शतावर, मेदाम् મેદા मेदा, ऋद्धिम् ઋદ્ધિ ऋद्धि, शतावरीम् શતાવરી शतावर, मधुकम् જેઠીમધ मुलहठी, अश्वगन्धाम् च અને આસન और असगन्ध, कुडव-उन्मिताम् એ પ્રત્યેક ૧૬-૧૬ તોલા લઈ इनमेंसे प्रत्येकके १६-१६ तोले ले कर, साधयेत् તેઓનો ક્વાથ કરવો उनका क्वाथ करे, तस्मिन् તે उस, रसे ક્વાથમાં रसमें, घृतप्रस्थम् ઘી ૬૪ તોલા घी ६४ तोले, गव्यम् અને ગાયનું तथा गायका, दशगुणम् દશગણું दसगुना, पयः દૂધ दूध, विदारीणाम् ભોંયકોળાનો विलाईकन्दके, रसप्रस्थम् રસ ૬૪ તોલા रस ६४ तोले, इक्षुरसस्य च અને શેરડીનો રસ और ईखके रसके, प्रस्थम् ૬૪ તોલા ६४ तोले, दत्त्वा મેળવીને देकर, मृदु-अग्निना ધીમે તાપે मंद आंचसे, साध्यम् ઘીને પકાવવું घीको पकावे, सिद्धम् તૈયાર થયેલું और सिद्ध हुए, सर्पि ઘી घीको, निधापयेत् પાત્રમાં રાખવું पात्रमें रख दे, तत्र તેમાં उसमें, शर्करायाः સાકર चीनी, तुगाक्षीर्याः વાંસકપૂર वंशलोचन, क्षौद्रस्य च અને મધ और मधुके, पृथक् જુદા પૃથક્ पृथक् જુદા पृथक, चतुष्पलान् ૧૬-૧૬ તોલાના १६-१६ तोलेवाले, भागान् ભાગ भाग, पिप्पल्या च અને પીપર और पिप्पलीका, पलम् ચાર તોલા एक पल, आवपेत् નાખવાં डाले, य જે जो, अक्षयम् અક્ષય अक्षय, शुक्रम् શુક્રની शुक्रकी, शेफसः અને ઉપસ્થના और जननेन्द्रियका, उत्तमम् શ્રેષ્ઠ अत्यन्त, बलम् च બલની बल, इच्छेत् ઇચ્છા કરતો હોય તેણે चाहता हो वह, पूर्वम् પહેલાં पहिले, अतः આમાંથી इसके, पलम् ચાર તોલા ४ तोले, लीढ्वा ચાટીને चाट कर, ततः તે પછી तदनन्तर, अन्नम् અન્નનું अन्नका, उपयोजयेत् ભોજન કરવું भोजन करे ॥ ३३-३७½ ॥ (इति આ यह, वाजीकरणम् વાજીકરણ वाजीकरण, घृतम् ઘૃત છે घृत है)

33-37½ Fresh black gram and fresh seeds of cowage, each tolas 256, jivaka,

---

३२½ बली लिङ्ग समर्पयेत–लिङ्गमर्पयति स्त्रियाम् (क. ग च. छ. प)

३४ कुडवोन्मिताम्–प्रसृतोन्मिताम् (ग प.)

३६ गव्य दशगुण पयः–प्रस्थमिक्षुरसस्य च (च ,

,, प्रस्थमिक्षुरसस्य च–गव्य दशगुणं पयः (च)

rishabhaka, veera, meda, riddhi, climbing asparagus, liquorice, and winter cherry each 16 tolas should be decocted together In this decoction, cow's ghee tolas 64, cow's milk tolas 640, juice of white yam tolas 64 and sugar cane juice tolas 64, should be boiled over a low fire and the ghee thus prepared should be mixed with sugar, bamboo manna and honey, each 16 tolas and of long pepper tolas 4. He, who wishes to have an inexhaustible store of semen and great phallic strength, should take a dose of 4 tolas of this ghee as linctus before meals. Thus has been described 'The Virilific Ghee.'

वाजीकरण· पिण्डरम —

**शर्करा माषविदलास्तुगाक्षीरी पयो घृतम् ॥३८॥**
**गोधूमचूर्णषष्ठानि सर्पिष्युत्कारिका पचेत् ।**
**तां नातिपक्वां मृदितां कौक्कुटे मधुरे रसे ॥३९॥**
**सुगन्धे प्रक्षिपेदुष्णे यथा सान्द्रीभवेद्रसः ।**
**एष पिण्डरसो वृष्यः पौष्टिको बलवर्धन· ॥४०॥**
**अनेनाश्व इवोदीर्णो बली लिङ्गं समर्पयेत् ।**

गोधूम-चूर्ण-षष्ठानि છઠ્ઠો ઘઉંનો લોટ છે જેમાં એવાં गेहूंका आटा छट्ठा जिनमें है ऐसे, शर्करा સાકર चीनी, माषविदला· અડદની દાળ उड़दकी दाल, तुगाक्षीरी વાંસકપૂર वंशलोचन, पयः દૂધ दूध, घृतम् અને ઘી और घी, उत्कारिकाम् એઓની ઉત્કારિકા इनकी उत्कारिका, सर्पिषि ઘીમાં घीमे पचेत् પકાવવી पकावे, नातिपक्वम् અત્યંત પાકી ન ગઈ હોય એવી ज्यादा न पकी हुई, ताम् તેને उसको, मृदिताम् ચોળીને मल कर, मधुरे મધુર मधुर, सुगन्धे સુગંધી सुगन्धित, उष्णे ઊના उष्ण, कौक्कुटे रसे કૂકડાના માંસરસમાં मुर्गेके मांसरसमें, प्रक्षिपेत् નાખવી डाले, यथा रस જેથી માંસરસ जिससे मांसरस, सान्द्रीभवेत् ઘાટો થઈ જાય गाढा हो जाय, एष· આ यह, पिण्डरस· પિંડરસ पिण्डरस, वृष्यः વૃષ્ય वृष्य, पौष्टिकः પૌષ્ટિક पौष्टिक, बलवर्धन· અને બળને વધારનારો છે और बलवर्धक है, अनेन આના પ્રયોગથી इसके सेवनसे, अश्व इव ઘોડાની પેઠે अश्वकी तरह उदीर्ण बली કામવેગમાં આવેલો તથા બળવાન પુરુષ कामवेगवाला एवं बलवान पुरुष, लिङ्गम् ઉપસ્થને उपस्थको, समर्पयेत् અર્પણ કરી શકે છે अर्पण कर सकता है ॥३८-४०½॥

38-40½ With these six—sugar, broken black-gram, bamboo manna, milk, ghee and wheat flour. (Utkarika) sweetmeat should be prepared in ghee. This without being over-roasted over the fire, should be crushed and cast into the sweet and warm spiced meat-juice of the cock and mixed in it till the juice gets thickened, this thickened juice is virilific tonic and strengthening. Imbued with stallion-like vigour by its use, a man enjoys sexual intercourse with heightened virility

**शिखितित्तिरिहंसानामेवं पिण्डरसो मतः ।**
**बलवर्णस्वरकरः पुमांस्तेन वृषायते ॥४१॥**

**(इति वाजीकरणपिण्डरसाः ।)**

एवम् આ પ્રમાણે इसी तरह; शिखि મોર मोर, तित्तिरि- તેતર तीतर, हंसानाम् અને હંસના और हंसके, पिण्डरसः પિંડરસો पिंडरस, बल- બળ बल, वर्ण- વર્ણ वर्ण, स्वरकर· અને સ્વરકારક तथा स्वरकरनेवाले मतः માન્યા છે माने हैं, तेन તેઓના પ્રયોગથી उनके प्रयोगसे, पुमान् પુરુષ पुरुष, वृषायते વૃષની માફક મૈથુન કરી શકે છે वृषकी तरह रतिक्षम होता है ॥४१॥ इति આ ये, वाजीकरणपिण्डरसाः વાજીકરણ પિંડરસો છે वाजीकरण पिण्डरस हैं।)

४०. बलवर्धनः—ऽनलवर्धनः (प.)

४१. इवोदीर्णो बली—इवोदीर्णबलः (ग)

,, इति वाजीकरणपिण्डरसाः—वाजीकरी लपिका (ग.)

41. The thickened juice of the peacock, partridge or swan in similar manner, is regarded as promoter of strength, complexion and voice A man acquires increased virility by taking a course of these preparations. Thus has been described 'The virilific thickened meat-juices.'

वृष्यो माहिषरसः —

घृतं माषान् सबस्ताण्डान् साधयेन्माहिषे रसे ।
भर्जयेत्तं रसं पूतं फलाम्लं नवसर्पिषि ॥ ४२ ॥
ईषत्सलवणं युक्तं धान्यजीरकनागरैः ।
एष वृष्यश्च बल्यश्च बृंहणश्च रसोत्तमः ॥ ४३ ॥
(इति वृष्यमाहिषरसः।)

सबस्ताण्डान् બકરાના વૃષણસહિત बकरेके अंड सहित, घृतम् ઘી घी, माषान् અને અડદને और उडदको, माहिषे પાડાના भैंसेके, रसे માંસરસમાં मासरसमें, साधयेत् પકાવવાં पकावे, तम् તે રસને उसको, पूतम् ગાળી લઈ छान कर, फलाम्लम् ખાટાં ફળોના રસથી ખાટો કરી दाडिम आदि खट्टे फलोंके रससे खट्टा करके, ईषत् જરાક थोड़ा, सलवणम् લૂણ નાખીને नमक मिला कर, धान्य- ધાણા धनिया, जीरक- જીરુ जीरा, नागरैः અને સૂંઠથી और सोंठसे, युक्तम् યુક્ત કરી युक्तकर, रसम् તે માંસરસને उस मासरसको, नवसर्पिषि તાજા ઘીમાં नये घीमें, भर्जयेत् છમકારવો छौंक दे, एषः આ यह, रसोत्तमः શ્રેષ્ઠ રસ श्रेष्ठ रस, वृष्य च વૃષ્ય वृष्य, बल्यः च બલને આપનાર बलकारक, बृंहणः च અને બૃંહણ છે और पौष्टिक है ॥ ४२-४३ ॥ (इति આ यह, वृष्यमाहिषरस વૃષ્યમાહિષરસ છે वृष्यमाहिषरस है । )

42-43. Ghee, black-gram and the testes of the goat should be cooked in the juice of buffalo-flesh. It should then be strained and acidified with fruit-acids and fried in fresh ghee. It should then be mixed with a little salt, coriander, cumin seeds and dried ginger. This most excellent juice is virilifying, strengthening and roborant. Thus has been described 'The virilifying meat-juice of the buffalo'

वृष्यरसाः —

चटकांस्तित्तिरिरसे तित्तिरीन् कौकुटे रसे ।
कुक्कुटान् बार्हिणरसे हांसे बार्हिणमेव च ॥ ४४ ॥
नवसर्पिषि संतप्तान् फलाम्लान् कारयेद्रसान् ।
मधुरान् वा यथासात्म्यं गन्धाढ्यान् बलवर्धनान् ४५
(इत्यन्ये वृष्यरसाः।)

चटकान् ચકલાઓને चिड़ियोंको, तित्तिरिरसे તેતરના માંસરસમાં तीतरके मासरसमें, तित्तिरीन् તેતરોને तीतरोंको, कौकुटे रसे કૂકડાના માંસરસમાં मुर्गोके मासरसमें, कुक्कुटान् કૂકડાઓને मुर्गोंको, बार्हिणरसे મોરના માંસરસમાં मोरके मासरसमें, बार्हिणम् एव च અને મોરને और मोरको, हांसे एव હંસના માંસરસમાં સિદ્ધ કરવા हंसके मासरसमें सिद्ध करे, नवसर्पिषि તાજા ઘીમાં नये घीमें, संतप्तान् છમકારી छौंक कर, यथा-सात्म्यम् સાત્મ્ય પ્રમાણે सात्म्यके अनुसार, फलाम्लान् ખાટાં ફળોના રસથી ખાટા કરેલા अम्ल फलोंके रसोंसे अम्ल किये हुए, मधुरान् वा અથવા મધુર જ રાખેલા अथवा मधुर ही रखे हुए, बलवर्धनान् આ બળને વધારનારા इन बलवर्धक, रसान् માંસરસોને मासरसोंको, गन्धाढ्यान् સુગંધવાળા કરી सुगन्धयुक्त कर, कारयेत् તૈયાર કરવા तैयार करे ॥ ४४-४५ ॥ (इति આ ये, अन्ये બીજા अन्य, वृष्यरसा વૃષ્ય રસો છે वृष्यरस हैं ।)

44-45 Sparrows cooked in the meat-juice of partridge or partridge cooked in the meat-juice of the cock, or the cock cooked in the meat-juice

---

४४ कुक्कटान् ..च–रसे हसस्य शिखिना दद्याच्छिखिरसे पृथक् (ग.)
,, ,, –रसे हसस्य शिखिनो दक्षः शिखिरसे पृथक् (थ)
४५ इत्यन्ये वृष्यरसा·–इति वृष्यरसाः (घ)

of the peacock, or the peacock cooked in the meat juice of the swan in fresh ghee, acidified with fruit acids and fried or sweetened according to one's homologation and mixed with fragrant articles should be taken for promoting strength. Thus has been described 'The other virilifying meat-juice'

वृष्यो मांसयोग.—

**तृप्तिं चटकमांसानां गत्वा योऽनुपिबेत् पयः ।**
**न तस्य लिङ्गशैथिल्यं स्यान्न शुक्रक्षयो निशि ॥४६॥**

**(इति वृष्यमांसम् ।)**

य જે પુરુષ जो पुरुष, चटकमांसानाम् ચકલાના માંસને चिड़ियोंके माससे, तृप्तिम् गत्वा તૃપ્ત થઈને तृप्त हो कर, पयः अनुपिबेत् ઉપર દૂધ પીએ છે ऊपरसे दूध पीता है, तस्य તેને उसको, निशि રાત્રિમાં रातमें, लिङ्गशैथिल्यम् ઉપસ્થની શિથિલતા जननेन्द्रियकी शिथिलता, शुक्रक्षय તેમજ શુક્રક્ષય और शुक्रक्षय, न स्यात् થતો નથી नहीं होता ॥ ४६ ॥ (इति આ यह, वृष्यमांसम् વૃષ્યમાંસ છે वृष्यमास है।)

46 The man that after a surfeit-meal of sparrow-flesh takes milk, does not experience phallic depression or suffer decrease of seminal store throughout the night. Thus has been described 'The virilifying diet of meat'

वृष्यो माषयोगः—

**माषयूषेण यो भुक्त्वा घृताढ्यं षष्टिकौदनम् ।**
**पयः पिबति रात्रिं स कृत्स्नां जागर्ति वेगवान् ॥४७॥**

**(इति वृष्यमाषयोगः ।)**

य. જે પુરુષ जो पुरुष, घृताढ्यम् ઘણા ઘીવાળા बहुत घीयुक्त, षष्टिक-ओदनम् સાઠી ચોખા साठीके भातको, माषयूषेण અડદના યૂષની સાથે उड़दके यूषके साथ, भुक्त्वा ખાઈને खा कर, पयः દૂધ दूध, पिबति પીએ છે पीता है, सः તે वह, वेगवान् કામવેગવાળો બની कामवेगवान होकर, कृत्स्नाम् આખી सारी, रात्रिम् રાત रात जागर्ति જાગે છે जागता है ॥ ४७ ॥ (इति આ यह, वृष्यमाषयोगः વૃષ્યમાષયોગ છે वृष्यमाषयोग है।)

47. One who drinks milk after a a meal of the shashtika rice mixed generously with ghee and with black-gram-gruel, remains awake with an undiminished sex-urge through the entire night. Thus has been described 'The virilifying preparation of black-gram.'

वृष्यो कुक्कुटमांसप्रयोगः—

**न ना स्वपिति रात्रिषु नित्यस्तब्धेन शेफसा ।**
**तृप्तः कुक्कुटमांसानां भृष्टानां नक्ररेतसि ॥४८॥**

**(इति वृष्यः कुक्कुटमांसप्रयोगः ।)**

नक्ररेतसि મગરના વીર્યમાં मगरके वीर्यमें, भृष्टानाम् ભૂંજેલા भुने हुए, कुक्कुटमांसानाम् કૂકડાના માંસને मुर्गेके माससे, तृप्तः ખાઈને તૃપ્ત થયેલો तृप्त, ना પુરુષ पुरुष, नित्यस्तब्धेन સર્વકાળ જાગૃત રહેનાર सततोत्थित, शेफसा ઉપસ્થવાળો થઈ जननेन्द्रियवाला हो कर, रात्रिषु સઘળી રાત सारी रात, न स्वपिति સૂતો નથી नहीं सोता ॥ ४८ ॥ (इति આ यह, वृष्य कुक्कुटमांसप्रयोग વૃષ્ય કુક્કુટમાંસપ્રયોગ છે वृष्य कुक्कुटमास-प्रयोग है।)

48. A man who has eaten his surfeit of the cock's flesh fried in the

४७ माषयूषेण....षष्टिकौदनम् । —यो भुक्त्वा माषयूषेण घृताढ्य षष्टिकौदनम् ।
,, पय. . वेगवान् ॥—पय· पिबति शैथिल्यं स्यान्न शुक्रक्षयो निशि ॥ (च.)

४८ नित्यस्तब्धेन—निस्तब्धेन च (ब म.)
,, तृप्त· ..नक्ररेतसि—पय पिबति शैथिल्य स्यान्न शुक्रक्षयो निशि (च)
,, इति वृष्यः कुक्कुटमांसप्रयोगः—इति वृष्यमृष्टमांसम् (च.)
,, ,, ,, ,, —इति वृष्यशुक्रकरस (ग.)

semen of the crocodile cannot sleep during the nights owing to continual erection of the phallus. Thus has been described 'The virilifying preparation of the cock's flesh'

वृष्या अण्डरसाः—

निःस्राव्य मत्स्याण्डरसं भृष्टं सर्पिषि भक्षयेत् ॥४९॥
हंसबर्हिणदक्षाणामेवमण्डानि भक्षयेत् ।
(इति वृष्योऽण्डरसः।)

मत्स्य-अण्ड-रसम् માછલાંના ઇંડાંના રસને मत्स्यके अण्डोंके रसको, निःस्राव्य દબાવીને કાઢ્યા પછી निकाल कर, सर्पिषि ઘીમાં घीमें, भृष्टम् ભૂંજીને भुन कर, भक्षयेत् ખાવો खावे, एवम् આ જ પ્રમાણે इसी तरह, हंस- હંસ हंस बर्हिण- મોર मोर दक्षाणाम् અને કૂકડાના और मुर्गोंके, अण्डानि ઇંડાંઓને अंडोंको, भक्षयेत् ખાવાં खावे ॥ ४९½ ॥ (इति આ यह, वृष्यः अण्डरस વૃષ્ય અંડરસ છે वृष्य अंडरस है।)

49½. One should take the juice squeezed out of the eggs of the fish seasoned with ghee; and similarly eggs of the swan, peacock and cock should be used. Thus has been described 'The virilifying egg-juice'

पूर्वसंशोधिते एव शरीरे वृष्ययोगा उपयोक्तव्याः—

भवतश्चात्र—
स्रोतःसु शुद्धेष्वमले शरीरे
वृष्यं यदा ना मितमत्ति काले ।
वृषायते तेन परं मनुष्य-
स्तद्बृंहणं चैव बलप्रदं च ॥५०॥
तस्मात् पुरा शोधनमेव कार्यं
बलानुरूपं न हि वृष्ययोगाः ।
सिध्यन्ति देहे मलिने प्रयुक्ताः
क्लिष्टे यथा वाससि रागयोगाः ॥५१॥

अत्र च આ વિષયમાં इस विषयमें, भवत. બે શ્લોકો છે કે दो श्लोक है कि, स्रोतःसु સ્રોતો स्रोतोंके, शुद्धेषु શુદ્ધ થવાથી शुद्ध होनेसे, शरीरे શરીર शरीरके, अमले નિર્મળ થતાં निर्मल होने पर, यदा જ્યારે जब, ना પુરુષ पुरुष, मितम् માપમાં લીધેલ मात्रामें लिये हुए, वृष्यम् વૃષ્યને वृष्यको, काले યોગ્ય સમયે उचित-कालमें, अत्ति ખાય છે ત્યારે सेवन करता है तब, तेन તેનાથી उससे, मनुष्यः તે પુરુષ वह पुरुष, परम् અત્યન્ત अत्यन्त, वृषायते મૈથુન કરવામાં સમર્થ બને છે मैथुन करनेमें समर्थ होता है, तत् તે वह, बृंहणम् च બૃંહણ वृंहण, बलप्रदम् च एव અને બલ આપનાર પણ છે और बलदायक भी है, तस्मात् તેથી इस लिए, पुरा પહેલાં प्रथम, बलानुरूपम् બલને અનુકૂળ बलके अनुरूप, शोधनम् શોધન शोधन, कार्यम् एव કરવુ જ જોઈએ करना ही चाहिए, हि કારણ કે क्योंकि, यथा જેમ जैसे, क्लिष्टे મેલા मलिन, वाससि વસ્ત્રમાં યોજેલા वस्त्रमें दिये गये, रागयोगा રંગો ચડતા નથી रंग नहीं चढ़ते, मलिनदेहे તેમ મલિન દેહમાં वैसे मलिन देहमें, प्रयुक्ताः યોજેલા प्रयुक्त, वृष्ययोगा. વૃષ્ય પ્રયોગો वृष्य योग, न सिद्ध्यन्ति સિદ્ધ થતા નથી सिद्ध नहीं होते ॥ ५० ५१ ॥

Here are two verses again—

50-51 If a man takes in due dose and at proper time, the virilifying recipe, after the body-channels have been cleansed and his body has been rendered free from excreta, he thereby greatly increases his virility. The recipe

---

४९½ दक्षाणामेवम्—दक्षाणि चैवम् (त)
,, इति वृष्योऽण्डरस—इति वृष्या अण्डरसा (ब.)
५०. यदा ना—यदाऽन्नम् (थ. ब.)

५१. वृष्ययोगा—सिद्धयोगाः (त. प.)
,, क्लिष्टे—क्लिष्ट (ब)
,, क्लिष्टे—म्लिष्टे (ब प.)
,, राग—रग (ग)

also acts as a roborant and tonic. It is therefore that purification of the body must be first undertaken with due regard to the patient's strength, for the virilifying preparations do not bear fruit if tried on an uncleansed constitution even as dyes do not stick properly on an unclean cloth.

प्रथमपादोक्तविषया —

तत्र श्लोकौ—

वाजीकरणसामर्थ्यं क्षेत्रं स्त्री यस्य चैव या ।
ये दोषा निरपत्यानां गुणाः पुत्रवतां च ये ॥५२॥
दश पञ्च च संयोगा वीर्यापत्यविवर्धनाः ।
उक्तास्ते शरमूलीये पादे पुष्टिबलप्रदाः ॥५३॥

तत्र ते વિષયમાં उस विषयमें, श्लोकौ ઉપસંહારના બે શ્લોક છે કે उपसंहारके दो श्लोक है कि, वाजीकरण- વાજીકરણનું वाजीकरणका, सामर्थ्यम् સામર્થ્ય सामर्थ्य, यस्य જે પુરુષને जिसको, क्षेत्रम् ક્ષેત્રરૂપ क्षेत्ररूप, या જે जो, स्त्री સ્ત્રી स्त्री निरपत्यानाम् સંતાનરહિત પુરુષોના सन्तानरहित पुरुषोंके, ये જે जो, दोषाः દોષો दोष, पुत्रवताम् च અને પુત્રવાળાના और पुत्रवाले पुरुषोंके, ये જે जो, गुणा ગુણો गुण वीर्य- વીર્ય वीर्य, अपत्य- તેમજ સંતાનને एव सन्तानके, विवर्धनाः વધારનારા वृद्धिकर, पुष्टि- અને પુષ્ટિ और पुष्टि, बलप्रदाः તથા બળને આપનારા तथा बलके देनेवाले, दश पञ्च च જે ૧૫ जो पन्द्रह, संयोगा. પ્રયોગો योग, ते તે वे, शरमूलीये શરમૂલીય शरमूलीय, पादे પાદમાં पादमें, उक्ता. કહેવામાં આવ્યા છે कहे गये हैं ॥ ५२-५३ ॥

Here are the two recapitulatory verses—

52-53. The virtues of virilification, the qualities of the woman who is a proper sexual partner for a man, the disadvantages of men without progeny and the advantages of those with progeny, and the 15 preparation that promote virility and progeny as well as robustness and strength, have all been described in this quarter entitled 'The roots of pen-reed grass'.

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सास्थाने वाजीकरणाध्याये संयोगशरमूलीयो नाम वाजीकरणपादः प्रथमः ॥ २-(१) ॥

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, चिकित्सास्थाने ચિકિત્સાસ્થાન વિષે चिकित्सास्थानमें, वाजीकरणाध्याये વાજીકરણાધ્યાયમાં वाजीकरणाध्यायमें, संयोगशरमूलीय. 'સંયોગશરમૂલીય' 'संयोगशरमूलीय', नाम નામનો नामका, प्रथम. પ્રથમ प्रथम, वाजीकरणपादः વાજીકરણ- પાદ સંપૂર્ણ થયો वाजीकरणपाद समाप्त हुआ ॥२-(१)॥

2 (1) Thus in the Section on Therapeutics in the treatise compiled by Agnivesa and revised by Caraka the first quarter entitled 'The roots of pen-reed grass' of the second chapter on 'Virilification' is completed

---

## वाजीकरणाध्याये द्वितीयः पादः ।

વાજીકરણાધ્યાયમાં બીજો પાદ

वाजीकरणाध्यायमें दूसरा पाद

## The second quarter of the chapter on Virilification

आसिक्तक्षीरीयवाजीकरणपादोपक्रमः —

अथात आसिक्तक्षीरिकं वाजीकरणपादं व्याख्यास्यामः ॥१॥

इति ह स्माह भगवानात्रेयः ॥२॥

अथ अतः હવે અહીંથી अब आगे, आसिक्तक्षीरिकम् 'આસિક્તક્ષીરિક' નામના 'आसिक्तक्षीरिक'

vomited out, hence they must be disguised and given under assumed names.

बर्हितित्तिरिदक्षाणां हंसानां शूकरोष्ट्रयोः ।
खरगोमहिषाणां च मांसं मांसकरं परम् ॥१५८॥

बर्हि- મોર मोर, तित्तिरि- તેતર तीतर दक्षाणाम કુકડા मुर्गे, हंसानाम् હંસ हंस शूकर- સૂવર सूअर, उष्ट्रयोः ઊંટ ऊंट, खर- ગધેડા गदहे गो- બળદ बैल, महिषाणाम् અને પાડાનુ और भैंसका, मांसम् માંસ मास परम् અત્યંત શ્રેષ્ઠ, मांसकरम् માંસ વધારનારુ છે मास बढानेवाला है ॥ १५८ ॥

158 The fleshes of peacock partridge cock, swan hog. camel, ass, bull and buffalo are greatly promotive of flesh.

योनिरष्टविधा चोक्ता मांसानामन्नपानिके ।
तां परीक्ष्य भिषग्विद्वान् दद्यान्मांसानि शोषिणे १५९

अन्नपानिके અન્નપાનના પ્રકરણમાં अन्नपानाध्यायमें, मांसानाम् માંસનાં मासोंके, अष्टविधा આઠ પ્રકારનાં आठप्रकारकी, योनि ઉત્પત્તિસ્થાન योनि, उक्ता કહ્યાં છે बतायी है, विद्वान् વિદ્વાન विद्वान, भिषक् વૈદ્ય वैद्य, ताम् તેઓની उसकी, परीक्ष्य પરીક્ષા કરીને परीक्षा करके, शोषिणे રાજયક્ષ્માના રોગીને शोषीको, मांसानि માંસ मांस, दद्यात् આપવાં देवे ॥ १५९ ॥

159. The skilled physician should take careful note of the eight groups of creatures, described in the chapter on 'eats and drinks', and then select the appropriate flesh for the consumptive patient.

प्रसहा भूशयानूपवारिजा वारिचारिणः ।
आहारार्थं प्रदातव्या मात्रया वातशोषिणे ॥१६०॥

वात- વાતપ્રધાન वातप्रधान, शोषिणे રાજયક્ષ્માના રોગીને शोषीको, प्रसहा પ્રસહ प्रसह भूशय- ભૂશય बिलमें रहनेवाले, आनूप- આનૂપજ आनूपदेशोंमें उत्पन्न, वारिजाः જલજ जलीय, वारिचारिण અને જલચર પ્રાણીઓનાં માંસ और जलचर प्राणियोंके मास, आहारार्थम् આહારને માટે आहारार्थ, मात्रया યોગ્ય પ્રમાણમાં मात्रापूर्वक, प्रदातव्या આપવાં देवे ॥ १६० ॥

160. The flesh of the tearer group of creatures and the terricolous, wetland and aquatic animals and wading birds should be given in proper measure as food to one suffering from the vata type of consumption.

प्रतुदा विष्किराश्चैव धन्वजाश्च मृगद्विजाः ।
कफपित्तपरीतानां प्रयोज्याः शोषरोगिणाम् ॥१६१॥

कफ- કફ कफ, पित्त- અને પિત્તથી और पित्तसे, परीतानाम् પીડાયેલા पीडित, शोष- રાજયક્ષ્માના शोषके, रोगिणाम् રોગીઓમાં रोगियोंको, प्रतुदा પ્રતુદ प्रतुद, विष्किरा. च एव વિષ્કિર विष्किर धन्वजाः અને જાંગલ દેશમાં ઉત્પન્ન થયેલાં और जांगल मृगद्विजा. च પશુ પક્ષીઓનાં માંસનો पशुपक्षियोंके मास, प्रयोज्या પ્રયોગ કરવો दिये जाय ॥ १६१ ॥

161 The flesh of peckers and gallinaceous birds and jangala beasts and birds should be given to those consumptives who are predominantly affected with kapha and pitta.

विधिवत्सूपसिद्धानि मनोज्ञानि मृदूनि च ।
रसवन्ति सुगन्धीनि मांसान्येतानि भक्षयेत् ॥१६२॥

विधिवत् વિધિ પ્રમાણે विधिपूर्वक, सूपसिद्धानि સારી રીતે તૈયાર કરેલાં अच्छी प्रकार तैयार किये गये, मनोज्ञानि મનગમતાં मनपसद, मृदूनि મૃદુ मृदु, रसवन्ति રસવાળાં रसयुक्त, सुगन्धीनि च અને સારી

१५८. बर्हि–शिखि (ग)
" खरगोमहिषाणा च–खराणा महिषाणा च (प.)
१६०. प्रदातव्या-प्रयोक्तव्या (च)
१६२. भक्षयेत्–शोषिणः (ध.)

गंधवाळां और सुगधयुक्त, एतानि आ इन, मांसानि मांसोनुं मासोंको, भक्षयेत् भक्षण कराववुं खिलावे ॥१६२॥

162. After preparing these fleshes well in the prescribed manner and having rendered them soft, palatable, delicious and fragrant they should be given to the consumptives.

**मांसमेवाश्नतः शोषो माध्वीकं पिबतोऽपि च ।**
**नियतानल्पचित्तस्य चिरं काये न तिष्ठति ॥१६३॥**

मासम् मांसने मास, एव ज ही, अश्नत आहार करनारा भक्षण करनेवाले, माध्वीकम् अने माध्वीकनु और माध्वीक, अपि च पण भी, पिबत पान करनारा पीनेवाले, नियत- संयमी सयमी, अनल्प- तेमज उदार एवं उदार, चित्तस्य चित्तवाळा रोगीना चित्तवाले रोगीके, काये शरीरमां शरीरमें, शोष राजयक्ष्मा शोष, चिरम् लांबो वखत ज्यादा काल तक, न तिष्ठति टकतो नथी नही ठहरता ॥ १६३ ॥

163. Consumption does not persist long in one that is disciplined and strong-minded and subsists exclusively on a meat-diet and drinks honey wine

राजयक्ष्मणि प्रशस्तानि मद्यानि—

**वारुणीमण्डनित्यस्य बहिर्मार्जनसेविनः ।**
**अविधारितवेगस्य यक्ष्मा न लभतेऽन्तरम् ॥१६४॥**

वारुणी- वारुणीना वारुणीके, मण्ड- मंडनुं मण्डको, नित्यस्य नित्य सेवन करनार नित्य पीनेवाले, बहिर्मार्जन- बहिर्मार्जन वहिर्मार्जन, सेविन- करनार करनेवाले, अविधारितवेगस्य अने वेगनुं धारण न करनारना शरीरमां और वेगविधारण न करनेवालेके शरीरमें, यक्ष्मा राजयक्ष्मा यक्ष्माको अन्तरम् अवकाश अवकाश, न लभते मेळवतो नथी नही मिलता ॥ १६४ ॥

१६३ नियतानल्पचित्तस्य—नियतस्याल्पपित्तस्य (ग)
,, मासमेवाश्नत —सरकृतान्यश्नत (घ)
१६४. वारुणीमण्डनित्यस्य—वारुणीमण्डभक्तस्य (घ.)
,, बहिर्मार्जनसेविन —बर्हिमासानुसेविन. (प.)

164. Consumption cannot find entry into the body of a man who takes daily the supernanent fluid of varuni wine and pays great attention to the external cleansing of the body and who does not suppress the natural urges.

**प्रसन्नां वारुणीं सीधुमरिष्टानासवान्मधु ।**
**यथार्हमनुपानार्थं पिबेन्मांसानि भक्षयन् ॥१६५॥**

मांसानि मांसोनु मास, भक्षयन् भक्षण करतां भक्षण करता हुआ, अनुपानार्थम् अनुपान माटे अनुपानार्थ, यथार्हम् जे योग्य होय ते प्रमाणे यथायोग्य, प्रसन्नाम् प्रसन्ना प्रसन्ना, वारुणीम् वारुणी वारुणी अरिष्टान् अरिष्टो अरिष्ट, सीधुम् सीधु सीधु, आसवान् आसवो आसव, मधु अने माध्वीक और मधुको, पिबेत् पीवां पीवे ॥ १६५॥

165. The consumptive patient may take as post-prandial drink, prasanna, varuni or sidhu wine or simple or medicated wines as is suitable after taking a meat-diet

**मद्यं तैक्ष्ण्यौष्ण्यवैशद्यसूक्ष्मत्वात् स्रोतसां मुखम् ।**
**प्रमथ्य विवृणोत्याशु तन्मोक्षात् सप्त धातवः ॥१६६॥**
**पुष्यन्ति धातुपोषाच्च शीघ्रं शोषः प्रशाम्यति ।**

मद्यम् मद्य मद्य, तैक्ष्ण्य- तीक्ष्णता तीक्ष्ण औष्ण्य- उष्णता उष्ण, वैशद्य- विशदता विशद, सूक्ष्मत्वात् अने सूक्ष्मताथी और सूक्ष्म होनेसे, स्रोतसाम् स्रोतोना स्रोतोंके, मुखम् मुखने मुखको, प्रमथ्य मथन करी मथन कर आशु जलदी शीघ्र, विवृणोति खुल्लां करे छे विस्तृत कर देता है, तत् तेओनां उनके, मोक्षात् खुल्लां थवाथी खुलनेसे, सप्त सात सप्त, धातव धातुओ धातु, पुष्यन्ति पुष्ट थाय छे पुष्ट होती हैं, धातुपोषात् च अने धातुओनुं पोषण थवाथी और धातुपुष्टिसे, शोष राजयक्ष्मा शोष, शीघ्रम् तुरत शीघ्र, प्रशाम्यति शांत थई जाय छे शान्त होता है ॥१६६३॥

166 Wine owing to its quality of being acute, hot, clear, and subtle, churns up the orifices of the body-channels and soon dilates them. As a result of this re-establishment of the freedom of circulation in the vessels, all the seven body-elements get nourished, and the wasting due to consumption soon disappears.

राजयक्ष्मणि कतिपयबृंहणयोगाः—

**मांसादमांसस्वरसे सिद्धं सर्पिः प्रयोजयेत् ॥१६७॥**
**सक्षौद्रं, पयसा सिद्धं सर्पिर्दशगुणेन वा ।**
**सिद्धं मधुरकैर्द्रव्यैर्दशमूलकषायकैः ॥१६८॥**
**क्षीरमांसरसोपेतैर्घृतं शोषहरं परम् ।**

**मांसाद-** માંસ ખાનાર પ્રાણીઓના मांसभक्षी प्राणियोंके, **मांस-** માંસના मांसके, **स्वरसे** રસમાં स्वरससे, **सिद्धम्** સિદ્ધ કરેલા सिद्ध किये हुए, **सक्षौद्रम्** અને મધની સાથે મેળવેલા और मधुयुक्त, **सर्पिः** ઘૃતનો घृतका, **दशगुणेन** અથવા દશગણા अथवा दसगुने, **पयसा** દૂધથી दूधसे, **सिद्धम्** સિદ્ધ કરેલા सिद्ध, **सर्पिः वा** ઘૃતનો घृतका, **प्रयोजयेत्** પ્રયોગ કરવો प्रयोग करे, **क्षीरमांसरसोपेतैः** દૂધ તથા માંસરસથી યુક્ત क्षीर तथा मांसरससे युक्त, **मधुरकैः** મધુર રસવાળાં मधुर, **द्रव्यैः** દ્રવ્યોના કલ્કથી द्रव्योंसे, **दशमूलकषायकैः** અને દશમૂળના કષાયોથી और दशमूलके कषायोंसे. **सिद्धम्** સિદ્ધ કરેલુ સિદ્ધ, **घृतम्** ઘી घृत, **परम्** શ્રેષ્ઠ श्रेष्ठ, **शोषहरम्** રાજ્યક્ષ્માનુ નાશક છે शोषनाशक है ॥ १६७-१६८½ ॥

167-168½ The ghee prepared with the meat-juice of carnivorous animals may be administered to the consump tive or the ghee prepared in ten times the quantity of milk may be givn to the patient. The medicated ghee prepared in the decoction of decaradix, milk and meat-juice with the paste of drugs of the sweet group is an excellent cure for consumption.

पञ्चकोलादिघृतम्—

**पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ॥१६९॥**
**सयावशूकैः सक्षीरैः स्रोतसां शोधनं घृतम् ।**

**सयावशूकैः** જવખારસહિત यवक्षारसहित, **सक्षीरैः** અને દૂધસહિત और क्षीरसहित, **पिप्पली-** પીપર पिप्पली, **पिप्पलीमूल-** પીપરીમૂળ पिप्पलीमूल, **चव्य-** ચવક चव्य, **चित्रक-** ચિત્રક चित्रक **नागरैः** અને સૂંઠથી और सोंठसे, **सिद्धम्** સિદ્ધ કરેલુ सिद्ध **घृतम्** ઘૃત घृत, **स्रोतसाम्** સ્રોતાનુ स्रोतोंका, **शोधनम्** શોધન કરનારુ છે शोधन करनेवाला होता है ॥ १६९½ ॥

169-169½ The medicated ghee prepare dwith the paste of long pepper, roots of long pepper, chaba pepper, white-flowered leadwort, dry ginger, barley, alkali and milk is a cleanser of the vascular channels

रास्नादिघृतम्—

**रास्नाबलागोक्षुरकस्थिरावर्षाभुसाधितम् ॥१७०॥**
**जीवन्तीपिप्पलीगर्भं सक्षीरं शोषनुद्घृतम् ।**

**रास्ना-** રાસ્ના रास्ना, **बला-** બલા बला, **गोक्षुरक-** ગોખરુ गोखरू, **स्थिरा-** સ્થિરા शालपर्णी, **वर्षाभु-** અને સાટોડીના ક્વાથથી और वर्षाभूके क्वाथसे, **साधितम्** સિદ્ધ કરેલુ सिद्ध, **जीवन्ती-** જીવન્તી जीवन्ती, **पिप्पली-गर्भम्** અને પીપરના કલ્કવાળુ और पिप्पलीके कल्कसे मिलाया हुआ, **सक्षीरम्** દૂધસહિત दूधयुक्त, **घृतम्** ઘૃત घृत **शोषनुत्** રાજ્યક્ષ્માનો નાશ કરનાર છે शोषको नष्ट करता है ॥ १७०½ ॥

170-170½ The medicated ghee prepared in the decoction of indian groundsel, heart-leaved sida, small caltrop, ticktrefoil, hog weed and milk along

with the paste of cork swallow wort and long pepper, is curative of consumption.

यवाग्वा वा पिबेन्मात्रां लिह्याद्वा मधुना सह ॥१७१॥
सिद्धानां सर्पिषामेषामद्यादन्नेन वा सह ।

सिद्धानाम् સિધ્ધ કરેલા सिद्धकिये हुए, एषाम् આ इन, सर्पिषाम् ધૃતોની घृतोंकी, मात्राम् માત્રા मात्रा, यवाग्वा वा યવાગૂની સાથે यवागूके साथ, पिबेत् પીવી पीवे, मधुना वा અથવા મધની अथवा मधुके सह સાથે साथ, लिह्यात् ચાટવી चाटे, अन्नेन वा અથવા અન્નની या अन्नके, सह સાથે साथ, अद्यात् ખાવી खावे ॥ १७१½ ॥

171-171½ These medicated ghees may be drunk with gruel or licked with honey or eaten mixed with the food in the proper dose.

शुष्यतामेष निर्दिष्टो विधिराभ्यवहारिकः ॥१७२॥

शुष्यताम् રાજયક્ષ્માના રોગીઓનો शोषियोंकी, एष આ यह, आभ्यवहारिक. ભોજનસબંધી आहार-सम्बन्धी, विधि. વિધિ विधि, निर्दिष्ट કહી છે बतायी है ॥ १७२ ॥

172. Thus has been described the dietetic regimen for the consumptive.

बहिःस्पर्शनमाश्रित्य वक्ष्यतेऽतः परं विधिः ।

अत. હવે अब, परङ् પછી आगे, बहि.स्पर्शनम् બહિર્માર્જનના बहिर्मार्जनके, आश्रित्य સબંધમાં सबन्धमें, विधिः વિધિ विधि, वक्ष्यते કહેવામાં આવશે कही जायगी ॥ १७२½ ॥

172½. Hereafter will be described treatment by means of external medication

राजयक्ष्मणि अवगाहनम्—

स्नेहक्षीराम्बुकोष्ठेषु स्वभ्यक्तमवगाहयेत् ।।१७३॥
स्रोतोविबन्धमोक्षार्थं बलपुष्ट्यर्थमेव च ।

स्वभ्यक्तम् સારી રીતે અભ્યંગ કરેલા अच्छी तरह अभ्यग कराये गये, (शोषिणम् શોષના દર્દીને यक्ष्मीको), स्रोत. સ્રોતોના स्रोतोंके, विबन्ध- બંધન विबधको, मोक्षार्थम् ખુલ્લાં કરવા માટે नष्ट करनेके लिए, बल- તથા બલ एवं बल, पुष्ट्यर्थम् एव च અને પુષ્ટિને માટે और पुष्टिके लिए, स्नेह- સ્નેહ स्नेह, क्षीर- દૂધ दूध, अम्बु- અને જલની और जलके, कोष्ठेषु કોઠીઓમાં कोष्ठमें, अवगाहयेत् અવગાહન કરાવવુ बैठावे ॥ १७३½ ॥

173-173½ The patient after being well inuncted should be given a tub-bath with unctuous liquid, milk and water in order to relieve the constriction of the channels and to increase strength and plumpness

उत्तीर्णं मिश्रकैः स्नेहैः पुनराक्तैः सुखैः करैः ॥१७४॥
मृद्गीयात् सुखमासीनं सुखं चोत्सादयेन्नरम् ।

उत्तीर्णम् કોઠીથી બહાર નીકળેલા कोष्ठसे बाहिर निकले हुए, सुखम् અને સુખેથી और सुखसे, आसीनम् બેઠેલા बैठे हुए, नरम् મનુષ્યને पुरुषको, पुनः ફરીને फिर, मिश्रकं. મિશ્રક मिश्रक, स्नेहै સ્નેહો स्नेहोंसे, आक्तैः ચોપડેલા लिप्त किये, सुखै કોમળ कोमल, करै હાથવડે हाथोंसे, सुखम् સુખકર રીતે सुख लगे ऐसा, मृद्गीयात् મર્દન કરવુ मर्दन करे, उत्सादयेत् च અને ઉદ્વર્તન કરવુ और उत्सादन करे ॥१७४½॥

174-174½. On emerging from tub-bath, the patient should be made to sit at his ease and once again treated to a pleasant oil massage with a light hand using mixed unctions, and then to a pleasant dry massage.

राजयक्ष्मणि उत्सादन स्नान च—

जीवन्तीं शतवीर्यां च विकसां सपुनर्नवाम् ॥१७५॥
अश्वगन्धामपामार्गं तर्कारीं मधुकं बलाम् ।
विदारीं सर्षपं कुष्ठं तण्डुलानतसीफलम् ॥१७६॥

१७३. कोष्ठेषु—काष्ठे त (ष)

१७४½ मृद्गीयात्—गृह्णीयात (य)

**माषांस्तिलांश्च किण्वं च सर्वमेकत्र चूर्णयेत् ।**
**यवचूर्णत्रिगुणितं दध्ना युक्तं समाक्षिकम् ॥१७७॥**
**एतदुत्सादनं कार्यं पुष्टिवर्णबलप्रदम् ।**

जीवन्तीम् જીવન્તી जीवन्ती, शतवीर्याम् શતવીર્યા शतवीर्या, सपुनर्नवाम् સાટોડીસહિત पुनर्नवाके साथ, विकसाम् च મજીઠ मजीठ अश्वगन्धाम् અશ્વગંધા असगंध, अपामार्गक અઘેડા अपामार्ग, तर्कारीम् તર્કારી जयंती, मधुकम् જેઠીમધ मुलहठी बलाम् બલા बला, विदारीम् વિદારીકંદ विदारी, सर्षपम् સરસવ सरसों कुष्ठम् કઠ कुष्ठ, तण्डुलान् ચોખા चावल, अतसीफलम् અળસીના બીજ अलसी, माषान् અડદ उड़द तिलान् च તલ तिल, किण्वम् च તથા કિણ્વ तथा किण्व, सर्वम् એ બધું इन सबका एकत्र એકત્ર કરી एकत्र, चूर्णयेत् ચૂર્ણ કરવુ चूर्ण करे यवचूर्ण-त्रिगुणितम् ત્રણગણા જવના લોટવાળુ तीनगुने जौके चूर्णसहित, दध्ना દહીંથી दहीसे, युक्तम् યુક્ત मिलाकर, समाक्षिकम् અને મધસહિત और शहदसहित, एतत् આ इस पुष्टि- પુષ્ટિ पुष्टि, वर्ण- વર્ણ वर्ण बलप्रदम् અને બલ આપનારુ और बलप्रद, उत्सादनम् ઉદ્વર્તન उत्सादनको, कार्यम् કરવુ लगावे ॥ १७५-१७७½ ॥

175-177½. Take cork swallow wort, scutch grass, mudar, hog-weed, winter cherry, rough chaff, wind killer, liquorice, heart-leaved sida, white yam rape seed, costus, rice, linseed, black gram, til and yeast, and powder them all together Mix this with thrice its quantity of barley powder and add curds and honey; this should be used for massage for it promotes plumpness, complexion and vitality

**गौरसर्षपकल्केन कल्कैश्चापि सुगन्धिभिः ॥१७८॥**
**स्नायादृतुसुखैस्तोयैर्जीवनीयौषधैः शृतैः ।**

गौरसर्षप- સફેદ સરસવના सफेद सरसोंके, कल्केन કલ્કથી कल्कसे, सुगन्धिभिः સુગંધી દ્રવ્યોના और सुगन्धी द्रव्योंके, कल्कैः च अपि કલ્કોથી कल्कोंसे, जीवनीय- અને જીવનીય और जीवनीय, औषधैः ઔષધોથી औषधोंसे, शृतैः પકાવેલાં शृत, ऋतुसुखैः ઋતુને અનુકૂલ ऋतुके अनुकूल, तोयैः જલથી जलोंसे, स्नायात् સ્નાન કરવુ स्नान करे ॥ १७८ ॥

178-178½. Then the patient should take a bath in water in which have been boiled drugs of the life-promoter group, the paste of white mustard and the paste of fragrant substances, cooling the water to the degree of temperature found congenial in the particular season.

राजयक्ष्मणि अन्नपानम्—

**गन्धैः समाल्यैर्वासोभिर्भूषणैश्च विभूषितः ॥१७९॥**
**स्पृश्यान् संस्पृश्य संपूज्य देवताः सभिषग्द्विजाः ।**
**इष्टवर्णरसस्पर्शगन्धवत् पानभोजनम् ॥१८०॥**
**इष्टैरिष्टैरुपहितं सुखमद्यात् सुखप्रदम् ।**

समाल्यैः પુષ્પમાલાઓ સહિત पुष्पमालाओंके साथ गन्धैः સુગંધી દ્રવ્યો सुगन्धी द्रव्य, वासोभिः વસ્ત્ર वस्त्र, भूषणैः च અને અલંકારોથી और आभूषणोंसे, विभूषित અલંકૃત થઈ विभूषित होकर, स्पृश्यान् સ્પર્શ કરવા યોગ્ય પદાર્થોનો स्पृश्य वस्तुओंको, संस्पृश्य સ્પર્શ કરીને स्पर्श करके, सभिषक्- તથા વૈદ્ય एवं वैद्य, द्विजाः બ્રાહ્મણો ब्राह्मण, देवता संपूज्य અને દેવતાઓનું પૂજન કરીને और देवताओंकी पूजा करके, इष्टैः પ્રિય જનોએ प्रियजनोंसे, उपहितम् તૈયાર કરેલાં बनाये हुए, इष्ट- મનપસંદ प्रिय, वर्ण- વર્ણ वर्ण, रस- રસ रस, स्पर्श- સ્પર્શ स्पर्श गन्धवत् તથા સુગન્ધવાળાં तथा सुगन्धयुक्त, इष्टम् મનગમતાં प्रिय, सुखप्रदम् તેમજ સુખકારક एवं सुखप्रद, पान- भोजनम् અન્નપાન अन्नपान सुखम् સુખપૂર્વક सुखसे, अद्यात् ખાવાં खावे ॥ १७९-१८०½ ॥

१७७ त्रिगुणित—द्विगुणित (त थ)
,, त्रिगुणित दध्ना युक्त—द्विगुणित दध्ना युक्त (प)
,, ,, —द्विगुण यवचूर्णेन (प)
१७८. कल्कैश्चापि-गन्धैश्चापि (ख घ.)

१८०½. सुखमद्यात्—हितमद्यात (क. घ न ध. फ)

179-180½. The consumptive patient should then deck himself with perfumes flower garlands, clothes and ornaments, touch auspicious articles, worship the gods, the twice-born and the physicians, and eat at ease pleasant food and drink possessing pleasant color, taste, feel and odor, prepared by agreeable persons and inducive of happiness.

समातीतानि धान्यानि कल्पनीयानि शुष्यताम् १८१
लघून्यहीनवीर्याणि स्वादूनि गन्धवन्ति च ।
यानि प्रहर्षकारीणि तानि पथ्यतमानि हि ॥१८२॥

शुष्यताम् રાજ્યક્ષ્માના રોગીઓ માટે शोषियोंके लिए, समातीतानि એક વર્ષનાં જૂનાં एक वर्षके पुराने, धान्यानि ધાન્યો धान्योंको, कल्पनीयानि પકાવવાં पकावे, हि કારણકે क्योंकि, यानि જે जो, लघूनि હલકાં लघु, अहीनवीर्याणि વીર્ય હણાઈ ન ગયું હોય એવાં पूर्णवीर्य, स्वादूनि મધુર स्वादु, गन्धवन्ति च સુગંધવાળા सुगंधयुक्त, प्रहर्षकारीणि च અને આનંદ આપનારાં હોય और मनको प्रसन्नता देनेवाले हों, तानि हि તે वे, पथ्यतमानि પથ્યતમ છે अत्यत पथ्य होते है ॥ १८१-१८२ ॥

181-182. Those grains, which are a year old, are to be used in the preparation of food for the consumptives, those which are light to digest, which have not lost their nutritive quality and which are delicious, fragrant and virilific, are the most wholesome

यच्चोपदेक्ष्यते पथ्यं क्षतक्षीणचिकित्सिते ।
यक्ष्मिणस्तत् प्रयोक्तव्यं बलमांसाभिवृद्धये ॥१८३॥

१८२. लघून्यहीनवीर्याणि स्वादूनि गन्धवन्ति च–लघूनि हीनवीर्याणि तानि पथ्यतमानि हि (ख. ह त. द.)
१८३. पथ्य–किंचित् (च)

क्षतक्षीण-चिकित्सिते ક્ષતક્ષીણ ચિકિત્સાધ્યાયમાં क्षतक्षीणचिकित्सिताध्यायमें, यत् च જે जो, पथ्यम् પથ્ય पथ्य, उपदेक्ष्यते કહેવામાં આવશે कहा जायगा, तत् તેનો उसको, यक्ष्मिण રાજ્યક્ષ્માના રોગીના यक्ष्मीके, बल- બળ बल, मांस- તથા માંસની तथा मांसको, अभिवृद्धये વૃધ્ધિ માટે बढानेके लिए प्रयोक्तव्यम् ઉપયોગ કરવો उपयोगमें लावे ॥ १८३ ॥

183 The consumptives in order to improve their strength and flesh must make use of those articles that are prescribed as wholesome in the treatment of 'pectoral lesions and cachexia'

राजयक्ष्मणि प्रशस्तो विहारः—

अभ्यङ्गोत्सादनैश्चैव वासोभिरहतैः प्रियैः ।
यथर्तुविहितैः स्नानैरवगाहैर्विमार्जनैः ॥१८४॥
वस्तिभिः क्षीरसर्पिर्भिर्मांसैर्मांसरसौदनैः ।
इष्टैर्मद्यैर्मनोज्ञानां गन्धानामुपसेवनैः ॥१८५॥
सुहृदां रमणीयानां प्रमदानां च दर्शनैः ।
गीतवादित्रशब्दैश्च प्रियश्रुतिभिरेव च ॥१८६॥
हर्षणाश्वासनैर्नित्यं गुरूणां समुपासनैः ।
ब्रह्मचर्येण दानेन तपसा देवतार्चनैः ॥१८७॥
सत्येनाचारयोगेन मङ्गलैरप्यहिंसया ।
वैद्यविप्रार्चनाच्चैव रोगराजो निवर्तते ॥१८८॥

अभ्यङ्ग- અભ્યંગ अभ्यंग, उत्सादनैः च एव ઉદ્વર્તન और उत्मादनसे, अहतैः નવાં एवं नवीन, प्रियैः મનગમતાં प्रिय, वासोभिः વસ્ત્રો वस्त्रोंसे, यथा-ऋतुविहितैः ઋતુ અનુસાર ऋतुके अनुसार, स्नानैः સ્નાન स्नानोंसे अवगाहैः અવગાહન अवगाहोंसे विमार्जनैः વિમાર્જન विमार्जनोंसे, बस्तिभिः બસ્તિ बस्तियोंसे, क्षीर- દૂધ

१८४ यथर्तुविहितैः स्नानैरवगाहैर्विमार्जनैः–यथर्तुविहितैः स्नानैर्वासोभिरहतैः प्रियैः (च)
१८५ क्षीरसर्पिर्भिः –क्षारसर्पिर्भिः (ङ)
१८८ मङ्गल्यं –मङ्गलैः (क ङ)
मङ्गलैरप्यहिंसया–मङ्गलैरविहिंसया (ख. च द.)
" " –मङ्गलैरभिहिंसया (च)

दूधसे, सर्पिर्भिः घृत घृतसे, मांसैः માંસ मांससे, मांसरस- માંસરસ मांसरससे, ओदनैः ભાત भातसे, इष्टैः મનને ગમે એવાં प्रिय, मद्यैः મદ્ય मद्योंसे, मनोज्ञानाम् च મનને આનંદદાયક मनको आह्लाद देनेवाले गन्धानाम् ગંધોના गन्धोंके, उपसेवनैः एव સેવન सेवनसे, सुहृदाम् મિત્રો मित्रों, रमणीयानाम् રમણીય પદાર્થો रमणीय पदार्थों, प्रमदानाम् च અને પ્રમદાઓના દર્શને और स्त्रियोंके दर्शनसे, गीत- ગાયન गीत, वादित्र तथा વાજિંત્રના एवं वादनके, शब्दैः च શબ્દો शब्दोंसे, प्रिय- પ્રિય प्रिय श्रुतिभिः एव च શબ્દો वचनोंसे, हर्षण- હર્ષના ઉત્પાદન हर्षणसे, आश्वासनैः આશ્વાસન आश्वासनसे, गुरूणाम् ગુરુઓની गुरुजनोंकी, नित्यम् નિત્ય नित्य, समुपासनैः સેવા उपासनासे, ब्रह्मचर्येण બ્રહ્મચર્ય ब्रह्मचर्यसे, दानेन દાન दानसे, तपसा તપશ્ચર્યા तपसे, देवता- અને દેવતાઓના देवताओंकी, अर्चनैः પૂજન पूजासे, सत्येन સત્ય सत्य भाषणसे, आचारयोगेन સદાચાર सदाचरणसे, मङ्गल्यैः માંગલિક કર્મો मांगलिक कर्मसे, अहिंसया अपि અહિંસા अहिंसासे, वैद्य-विप्र- અને વૈદ્ય તથા બ્રાહ્મણોની और वैद्य एवं ब्राह्मणोंकी, अर्चनात् च एव પૂજાથી पूजा करनेसे, रोगराज રાજયક્ષ્મા राजयक्ष्मा, निवर्तते નિવૃત્ત થાય છે शांत होता है ॥ १८४-१८८ ॥

184-188 It is by recourse to innunction, massage, pleasant and untorn garments, affusions, baths immersion baths, internal and external cleansing which are suitable to the prevailing season, enemata, milk ghee, meat-foods cooked rice mixed with meat juices, pleasant wines, delightful perfumes, sight of friends, beautiful things and young women, the pleasant sound of songs and musical instruments, cheering and comforting words, constant service to preceptors and elders, practice of Brahmacharya, charity, austerity, worship of the gods, truth, righteous conduct, auspicious rites, nonviolence and respect to the physicians and Brahmins, that one gets free from consumption the king of disease.

राजयक्ष्मणि वैदिकी इष्टिः—

**यया प्रयुक्तया चेष्ट्या राजयक्ष्मा पुरा जितः ।**
**तां वेदविहितामिष्टिमारोग्यार्थी प्रयोजयेत् ॥१८९॥**

प्रयुक्तया પ્રયોગ કરવામાં આવેલી प्रयोग की गई, यया જે जिस, इष्ट्या च ઇષ્ટિથી इष्टिसे, पुरा પૂર્વકાળમાં पहिले, राजयक्ष्मा રાજયક્ષ્માને राजयक्ष्मा, जित. જીત્યો હતો जीता गया था, ताम् તે उस, वेद- विहिताम् વેદવિહિત वेदविहित, इष्टिम् ઇષ્ટિનો इष्टिको, आरोग्यार्थी આરોગ્યવાળાએ आरोग्यार्थी, प्रयोजयेत પ્રયોગ કરવો प्रयोगमें लावे ॥ १८९ ॥

189. The patient desirous of regaining his health should perform the same religious rites enjoined by the Vedas as those by the performance of which this king of diseases was subdued in the first instance

अध्यायोक्तार्थसंग्रहः—

**तत्र श्लोकौ—**
**प्रागुत्पत्तिर्निमित्तानि प्राग्रूपं रूपसंग्रहः ।**
**समासाद् व्यासतश्चोक्तं भेषजं राजयक्ष्मणः ॥१९०॥**

तत्र श्लोकौ તે વિષયમાં બે શ્લોકો છે કે उस विषयमें दो श्लोक हैं कि, राजयक्ष्मण રાજયક્ષ્માની राजयक्ष्माकी, प्रागुत्पत्तिः પૂર્વકાળમાં ઉત્પત્તિ पुराकालमें उत्पत्ति, निमित्तानि તેના હેતુ उसके हेतु प्राग्रूपम् તેનું પૂર્વરૂપ उनका पूर्वरूप रूपसंग्रह तथा તેનાં રૂપનો સંગ્રહ तथा उनके रूपका संग्रह, समासात સંક્ષેપથી કહ્યાં છે संक्षेपसे कहे है, भेषजम् च અને રાજયક્ષ્માની ચિકિત્સા और राजयक्ष्माकी चिकित्सा, व्यासतः વિસ્તારથી विस्तारसे, उक्तम् કહી છે कही है ॥१९०॥

१८९ आरोग्यार्थी–आरोग्यार्थं (ग.)

१९०. प्रागुत्पत्तिर्निमित्तानि–ह्युदुत्पत्तिर्निमित्तानि (ख)

Here are two recapitulatory verses—

190. Concerning consumption, the protogenesis, etiological factors, premonitory symptoms and syndromes of signs and symptoms have been described in brief and treatment in extenso

नामहेतुरसाध्यत्वं साध्यत्वं कृच्छ्रसाध्यता ।
इत्युक्तः संग्रहः कृत्स्नो राजयक्ष्मचिकित्सिते॥१९१॥

नामहेतुः રાજયક્ષ્માના નામનું કારણ राजयक्ष्माके नामका हेतु, असाध्यत्वम् અસાધ્યતા असाध्यता, साध्यत्वम् સાધ્યતા साध्यत्व कृच्छ्रसाध्यता કષ્ટસાધ્યતા कृच्छ्रसाध्यता इति એ यह, कृत्स्नः સર્વ संपूर्ण, संग्रहः સંગ્રહ संग्रह, राजयक्ष्मचिकित्सिते 'રાજયક્ષ્મચિકિત્સિત નામના અધ્યાયમાં राजयक्ष्मचिकित्सित' नामके अध्यायमें, उक्त કહ્યો છે कहा है ॥ १९१ ॥

191. Explanation of the name of the disease, incurable, curable and formidable conditions these comprise the complete synopsis in the chapter on the 'Therapeutics of Consumption'.

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सास्थाने राजयक्ष्मचिकित्सितं नामाष्टमोऽध्यायः ॥ ८ ॥

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, चिकित्सास्थाने ચિકિત્સાસ્થાન વિષે चिकित्सास्थानमें, राजयक्ष्मचिकित्सितम् 'રાજયક્ષ્મચિકિત્સિત' 'राजयक्ष्मचिकित्सित', नाम નામનો नामका, अष्टम. આઠમો आठवाँ, अध्याय અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ ८ ॥

8 Thus in the Section on Therapeutics in the treatise compiled by Agnivesa and revised by Caraka, the eighth chapter entitled 'The Therapeutics of Consumption' is completed

१९१. इत्युक्तः संग्रह कृत्स्नो–इत्यर्थसंग्रह प्रोक्तो (च)

---

# नवमोऽध्यायः।

## નવમો અધ્યાય अध्याय नववाँ

## Chapter IX

उन्मादचिकित्सितोपक्रमः—

अथात उन्मादचिकित्सितं व्याख्यास्यामः ॥१॥
इति ह स्माह भगवानात्रेयः ॥२॥

अथ अत હવે અહીંથી अब आगे, उन्मादचिकित्सितम् 'ઉન્માદચિકિત્સિત' નામના અધ્યાયનું 'उन्मादचिकित्सित' नामके अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, आत्रेय આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह એમ કહેલું છે कहा है ॥२॥

1. We shall now expound the chapter on 'The Therapeutics of Insanity.'

2. Thus declared the worshipful Atreya

बुद्धिस्मृतिज्ञानतपोनिवासः
पुनर्वसुः प्राणभृतां शरण्यः ।
उन्मादहेत्वाकृतिभेषजानि
कालेऽग्निवेशाय शशंस पृष्टः ॥ ३ ॥

बुद्धि- બુદ્ધિ बुद्धि, स्मृति- સ્મરણશક્તિ स्मृति, ज्ञान- જ્ઞાન ज्ञान, तप.- અને તપશ્ચર્યાના और तपके, निवास નિવાસસ્થાનરૂપ निवास, प्राणभृताम् પ્રાણીઓને प्राणियोंके लिए, शरण्य શરણ આપનારા शरण जाने योग्य, पुनर्वसु પુનર્વસુએ पुनर्वसुने, पृष्ट પ્રશ્ન પૂછવામાં આવતાં प्रश्न पूछने पर, काले યોગ્ય સમયે यथाकाल, अग्निवेशाय અગ્નિવેશને अग्निवेशको, उन्माद-

उन्मादनां उन्मादके हेतु- કારણ हेतु आकृति- લક્ષણ રૂપ, भेषजानि अने ઔષધો और औषध, शशंस કહ્યાં कहें ॥ ३ ॥

3. Punarvasu who was, as it were, the very abode of understanding, memory, wisdom and austerity, and who was sought by all living beings as their refuge, being questioned by Agnivesa, in due course, described the etiology, signs and symptoms and treatment of insanity.

उन्मादस्य सामान्यनिदानम्—

विरुद्धदुष्टाशुचिभोजनानि
प्रधर्षणं देवगुरुद्विजानाम् ।
उन्मादहेतुर्भयहर्षपूर्वो
मनोऽभिघातो विषमाश्च चेष्टाः ॥ ४ ॥

विरुद्ध- વિરુદ્ધ विरुद्ध, दुष्ट- દૂષિત दुष्ट, अशुचि- અને અપવિત્ર और अपवित्र भोजनानि ભોજનો भोजन, देव- દેવતા देव, गुरु- ગુરુ गुरुजन, द्विजानाम् અને બ્રાહ્મણોનું और ब्राह्मणोंका प्रधर्षणम् અપમાન अपमान, भय- ભય भय, हर्ष- કે હર્ષ या हर्षसे, पूर्व- જેનું કારણ છે એવો जनित, मनः- મનનો मानसिक, अभिघात આઘાત आघात, विषमा- અને વિષમ और विषम, चेष्टाः च ચેષ્ટાઓ चेष्टायें, उन्माद- ઉન્માદનું उन्मादके, हेतुः કારણ છે हेतु हैं ॥ ४ ॥

4. Diet that consists of articles that are incompatible, vitiated and unclean; disrespect towards the gods teachers and the twice-born, mental shock resulting from excess of fear or joy, and faulty bodily activity—all these are the causative factors of insanity.

उन्मादस्य संप्राप्तिः—

तैरल्पसत्त्वस्य मलाः प्रदुष्टा
बुद्धेर्निवासं हृदयं प्रदूष्य ।
स्रोतांस्यधिष्ठाय मनोवहानि
प्रमोहयन्त्याशु नरस्य चेतः ॥ ५ ॥

अल्प- અલ્પ अल्प, सत्त्वस्य સત્ત્વગુણવાળાના सत्वगुणी पुरुषके, तैः તેઓથી उनसे, प्रदुष्टाः દૂષિત થયેલા अत्यंत दूषित, मलाः મળો मल, बुद्धेः બુદ્ધિના बुद्धिके, निवासम् નિવાસસ્થાનરૂપ निवासस्थान, हृदयम् હૃદયને हृदयको, प्रदूष्य દૂષિત કરીને दूषित करके, मनोवहानि તથા મનોવહ तथा मनोवह, स्रोतांसि સ્રોતોને स्रोतोंमें अधिष्ठाय આશ્રય કરીને आश्रय करके, नरस्य મનુષ્યના पुरुषके, चेतः મનને मनको, आशु શીઘ્ર शीघ्र प्रमोहयन्ति મોહયુક્ત કરે છે मोहयुक्त कर देते है ॥ ५ ॥

5. The humors in the body of the weak-minded, getting morbid by the above factors, and, in their turn, vitiating the brain, the seat of intelligence, become localized in the channels of the nervous system and soon derange the function of the mind.

उन्मादस्य सामान्यलक्षणम्—

धीविभ्रमः सत्त्वपरिप्लवश्च
पर्याकुला दृष्टिरधीरता च ।
अबद्धवाक्त्वं हृदयं च शून्यं
सामान्यमुन्मादगदस्य लिङ्गम् ॥ ६ ॥

धी- બુદ્ધિનો बुद्धिका विभ्रम વિભ્રમ भ्रंश, सत्त्व- મનની मनकी, परिप्लवः च ચ ચળતા चचलता, पर्याकुला વ્યાકુલ व्याकुल दृष्टि દ્દષ્ટિ दृष्टि, अधीरता च ધીરજનો અભાવ अधीरता अबद्ध- અસબદ્ધ असबद्ध, वाक्त्वम् વાણી भाषण, शून्यम् અને શૂન્ય और शून्य, हृदयम् ન હૃદય हृदय, उन्माद-गदस्य ઉન્માદરોગનાં उन्मादरोगके, सामान्यम् સામાન્ય सामान्य, लिङ्गम् લક્ષણો છે लक्षण है ॥ ६ ॥

6 Confusion of intellect, extreme fickleness of mind, agitation of the

५. प्रमोहयन्त्याशु–विमोहयन्त्याशु (क. छ)

eyes unsteadiness, incoherence of speech, mental vacuity—these are the general symptoms of the disease of insanity.

स मूढचेता न सुखं न दुःखं
नाचारधर्मौ कुत एव शान्तिम् ।
विन्दत्यपास्तस्मृतिबुद्धिसंज्ञो
भ्रमत्ययं चेत इतस्ततश्च ॥ ७ ॥

स ते वह, मूढचेता. મૂઢ ચિત્તવાળો भ्रान्तचित्त, न નથી न, सुखम् સુખને सुखको, न નથી न, दुःखम् દુ ખને दु खको, न નથી न, आचारधर्मौ આચાર તેમજ ધર્મને आचार एव धर्मको, विन्दति પ્રાપ્ત કરતો पाता है, शान्तिम् તો શાન્તિ तो शान्तिको कुतः एव ક્યાંથી જ પામે ? कहांसे पावे ?, अपास्त- નષ્ટ થયાં છે नष्ट, स्मृति- સ્મૃતિ स्मृति, बुद्धि- બુધ્ધિ बुद्धि संज्ञ અને ભાન જેનાં એવો और संज्ञावाला, अयम् આ यह पुरुष, चेत: ચિત્તને मनको, इत આમ इधर, ततः च તેમ उधर, भ्रमति ભમાવે છે भ्रमित करता है ॥ ७ ॥

7. The imbecile, who is thus afflicted, is unable to know pleasure and pain and right behaviour or duty. Needless to say, he knows no mental ease. Deprived of memory, understanding and wits, he keeps his mind wavering restlessly.

उन्मादव्युत्पत्ति —

समुद्भ्रमं बुद्धिमनःस्मृतीना-
मुन्मादमागन्तुनिजोत्थमाहुः ।
तस्योद्भवं पञ्चविधं पृथक् तु
वक्ष्यामि लिङ्गानि चिकित्सितं च ॥८॥

बुद्धि- બુધ્ધિ बुद्धि, मन - મન मन स्मृतीनाम् અને સ્મૃતિના और स्मृतिके, समुद्भ्रमम् ભ્રમરૂપ भ्रमरूप, उन्मादम् ઉન્માદને उन्मादको, आगन्तु- આગન્તુ आगन्तु, निजोत्थम् તથા નિજ કારણોથી ઉત્પન્ન થયેલો तथा दोषजन्य, आहुः કહે છે कहते है. तस्य તેના उसके, पञ्चविधम् પાંચ પ્રકારના पञ्चविध, उद्भवम् ઉત્પત્તિકારણો उत्पत्तिकारण, लिङ्गानि લક્ષણો लिंग चिकित्सितम् च અને ચિકિત્સા और चिकित्साको, पृथक् तु જુદાં જુદાં पृथक् पृथक्, वक्ष्यामि કહીશ कहूँगा ॥ ८ ॥

8 Insanity which is characterised by such derangement of understanding, mind and memory, is said to be of exogenous or endogenous origin I shall describe individually the five-fold causation of insanity together with symptoms and the treatment.

८ समुद्भ्रम–स विभ्रम (प)

वातोन्मादस्य निदानलक्षणे—

रूक्षाल्पशीतान्नविरेकधातु-
क्षयोपवासैरनिलोऽतिवृद्धः ।
चिन्तादिजुष्टं हृदयं प्रदूष्य
बुद्धिं स्मृतिं चाप्युपहन्ति शीघ्रम् ॥९॥

रूक्ष- રૂક્ષ रूक्ष, अल्प- અલ્પ अल्प, शीत- અને શીત और शीत, अन्न ભોજન अन्न विरेक- વમન વિરેચન वमन विरेचन धातुक्षय- અને ધાતુક્ષય धातुक्षय, उपवासै तथा ઉપવાસથી और उपवाससे, अतिवृद्ध અતિ વધી ગયેલો अत्यन्त बढा हुआ, अनिल વાયુ वायु, चिन्तादि- ચિન્તા વગેરેથી चिन्ता आदिसे, जुष्टम् જુષ્ટ उपहत हृदयम् હૃદયને हृदयको, प्रदूष्य દૂષિત કરીને दूषित करके, शीघ्रम् તુરત शीघ्र बुद्धिम् બુદ્ધિ बुद्धि, स्मृतिम् च अपि તથા સ્મરણશક્તિનો પણ और स्मरणशक्तिको भी, उपहन्ति નાશ કરે છે उपहत करता है ॥ ९ ॥

9. The vata getting severely provoked by indulgence in dry, meagre or cold diet, or by excess of purificatory

९ शीतान्न–शीताति (फ)
,, चिन्तादिजुष्ट–चिन्ताप्रदुष्ट (प)
,, ,, –चिन्तादिदुष्ट (ब. फ)

procedure or atrophy of body-element or by fasting and vitiating the brain, which is already overcome with worry etc., soon impairs the understanding and memory as well.

अस्थानहासस्मितनृत्यगीत-
वागङ्गविक्षेपणरोदनानि ।
पारुष्यकार्श्यारुणवर्णताश्च
जीर्णे बलं चानिलजस्य रूपम् ॥१०॥

अस्थान- અયોગ્ય સ્થાનમાં अस्थानमें, हास- હસવુ हास्य, स्मित- મુખ મલકાવવુ स्मित, नृत्य- નાચવુ नृत्य, गीत- ગાવુ गीत, वाक्- બોલવુ बोलना, अङ्गविक्षेपण- અંગથી ચેષ્ટાઓ કરવી अंगविक्षेप, रोदनानि રડવુ रोना, पारुष्य- કઠોરતા परुषता, कार्श्य- દુર્બલતા कृशता, अरुणवर्णता च અરુણ વર્ણવાળાપણુ अरुणवर्णता, जीर्णे અને આહાર પચી ગયા પછી तथा अन्न जीर्ण होने पर, बलम् च બલ વધવુ बल बढ़ना, अनिलजस्य એ વાતજ ઉન્માદનાં वातज उन्मादके, रूपम् લક્ષણો છે लक्षण है ॥ १० ॥

10 The following are the symptoms of insanity arising from provoked vata: laughing, smiling, dancing, singing, speaking, bodily movements and weeping, all of which are out of place, hardness, leanness and dusky-red coloration of the skin and the disease in its anabatic phase at the close of digestion of food.

पित्तोन्मादस्य निदानलक्षणे—

अजीर्णकट्वम्लविदाह्यशीतै-
र्भोज्यैश्चितं पित्तमुदीर्णवेगम् ।
उन्मादमत्युग्रमनात्मकस्य
हृदि श्रितं पूर्ववदाशु कुर्यात् ॥ ११ ॥

अजीर्ण- અજીર્ણ अजीर्ण, कटु તીખા कटु, अम्ल- ખાટા अम्ल, विदाहि- વિદાહી विदाही, अशीतै અને ગરમ और उष्ण भोज्यैः ભોજ્ય પદાર્થોથી भोज्य पदार्थोंसे, चितम् સંચિત થયેલુ सचित, पित्तम् पित्त पित्त, उदीर्णवेगम् ઉદીર્ણ વેગવાળુ થઈને उदीर्ण वेगवाला होकर, अनात्मकस्य નબળા મનવાળા પુરુષના दुर्बल मनवाले पुरुषके, हृदि હૃદયમાં हृदयमे, श्रितम् આશ્રય કરીને आश्रित होकर पूर्ववत् પૂર્વની પેઠે पूर्ववत्, आशु તુરત शीघ्र अति અત્યંત अत्यंत, उग्रम् ઉગ્ર उग्र, उन्मादम् ઉન્માદ उन्मादको, कुर्यात् કરે છે पैदा करता है ॥ ११ ॥

11 The pitta which has accumulated as the result of taking pre-digestion meals, or taking pungent, acid, irritant and hot articles of food, being activated and getting lodged in the brain of the undisciplined person, rapidly gives rise as before to acute maniacal symptoms

अमर्षसंरम्भविनग्नभावाः
संतर्जनातिद्रवणौष्ण्यरोषाः ।
प्रच्छायशीतान्नजलाभिलाषाः
पीता च भाः पित्तकृतस्य लिङ्गम् ॥१२॥

अमर्ष- અસહનતા असहनता, संरम्भ- સંરભ क्रोध विनग्नभावा નગ્નતા नग्न होना, संतर्जन- ધમકી આપવી निर्भर्त्सना, अभिद्रवण- દોડવુ दौड़ना, औष्ण्य- ઉષ્ણતા शरीरका उष्ण होना, रोषा- રોષ रोष प्रच्छाय- ગાઢ છાયો घनी छाया, शीत- ઠંડાં शीतल, अन्न અન્ન अन्न, जल- અને જલની और जलकी, अभिलाषा- ઇચ્છા अभिलाषा, पीता તથા પીળી तथा पीली, भाः च ક્રાંતિ आभा, पित्तकृतस्य એ પિત્તજ ઉન્માદનાં ये पित्तज उन्मादके, लिङ्गम् લક્ષણો છે लिङ्ग है ॥ १२ ॥

12. Intolerance, turbulence, nudity, intimidation, running about, heated

१० कार्श्य–कृष्ण (ग)

१२ मतिद्रवण–अभिद्रवण (ब ध)

condition, anger, craving for shady places and cooling foods and drinks and icteric tinge of the body are the symptoms of insanity due to pitta.

कफोन्मादस्य निदानलक्षणे—

संपूरणैर्मन्दविचेष्टितस्य
सोष्मा कफो मर्मणि संप्रवृद्धः।
बुद्धिं स्मृतिं चाप्युपहत्य चित्तं
प्रमोहयन् संजनयेद्विकारम् ॥ १३ ॥

संपूरणै ખૂબ પેટ ભરીને ભોજન કરવાથી अतिभोजनसे, मन्द- મન્દ मन्द, विचेष्टितस्य ચેષ્ટાવાળા મનુષ્યના चेष्टावाले पुरुषके, मर्मणि હૃદયમાં हृदयमें, संप्रवृद्धः વધી ગયેલો प्रकुपित, सोष्मा ઊષ્માસહિત ऊष्मायुक्त, कफ કફ कफ, बुद्धिम् બુદ્ધિ बुद्धि, स्मृतिम् च અને સ્મરણને और स्मृतिको, उपहत्य હણીને उपहत करके, चित्तम् ચિત્તમાં मनको प्रमोहयन् મોહ ઉત્પન્ન કરી प्रमोहित करता हुआ, विकारम् ઉન્માદને उन्मादको, संजनयेत् ઉત્પન્ન કરે છે उत्पन्न करता है ॥ १३ ॥

13. In the person of sedentary habits, the kapha getting greatly increased in the vital organs as the result of over-feeding combines with heat and impairs the intellect and memory, and confounding the mind, causes insanity (melancholia)

वाक्चेष्टितं मन्दमरोचकश्च
नारीविविक्तप्रियताऽतिनिद्रा।
छर्दिश्च लाला च बलं च भुक्ते
नखादिशौक्ल्यं च कफात्मकस्य ॥१४॥

मन्दम् મન્દ मन्द, वाक्- વાણી बोलना, चेष्टितम् તથા ચેષ્ટા और चेष्टा, अरोचक च અરુચિ अरुचि, नारी- સ્ત્રી स्त्रियोंमें, विविक्त- તથા એકાંત और निर्जनस्थानोंमें, प्रियता પ્રિય લાગવાં प्रीति, अतिनिद्रा અતિ નિદ્રા अति निद्रा, छर्दिः च ઉલટી कै, लाला च લાળ વહેવી लालास्राव, भुक्ते च તથા ખોરાક લીધા પછી तथा भोजन करने पर, बलम् બલ વધવું बल बढ़ना, नखादि- અને નખ વગેરેની और नखादिकी, शौक्ल्यम् च શ્વેતતા श्वेतता, कफात्मकस्य એ કફજન્ય ઉન્માદનાં લક્ષણો છે ये कफजन्य उन्मादके लक्षण है ॥ १४ ॥

14. Slowness of speech and action, anorexia, fondness for women and solitude, somnolence, vomiting, dribbling of saliva, anabasis following meals, pallor of the nails etc., these are the symptoms of insanity due to kapha.

त्रिदोषजोन्मादस्य निदानलक्षणे—

यः सन्निपातप्रभवोऽतिघोरः
सर्वैः समस्तैः स च हेतुभिः स्यात्।
सर्वाणि रूपाणि बिभर्ति तादृ-
ग्विरुद्धभैषज्यविधिर्विवर्ज्यः ॥ १५ ॥

य. જે ઉન્માદ जो उन्माद, सन्निपात- સન્નિપાતથી सन्निपातसे, प्रभव ઉત્પન્ન થાય છે उत्पन्न होता है, सः च તે वह, अतिघोर. અત્યંત ઘોર છે अत्यंत भयंकर है, सर्वैं સઘળાં सब, समस्तै સાથે મળેલાં एकत्र मिले हुए, हेतुभि કારણોથી हेतुओंसे स्यात् થાય છે होता है. सर्वाणि અને સઘળાં और सब, रूपाणि લક્ષણો लक्षणोंको, बिभर्ति ધારણ કરે છે धारण करता है विरुद्ध- વિરુદ્ધ विरुद्ध, भैषज्य ચિકિત્સાની चिकित्साकी, विधिः વિધિવાળો હોવાથી विधिवाला होनेसे, तादृक् તેવા ઉન્માદને वह उन्माद, विवर्ज्य· છોડી દેવો જોઈએ असाध्य है ॥ १५ ॥

15 The insanity that is born of tridiscordance is an exceedingly dreadful condition and is caused by the combination of all the etiological factors mentioned above. It accordingly manifests all the symptoms and should be given up as incurable on account

१४. अतिनिद्रा—च निद्रा (ध)
,, कफात्मकस्य—कफात्मके स्यात् (क. घ)

of the antagonistic nature of the treatment required.

आगन्तून्मादस्य निदानम्—

देवर्षिगन्धर्वपिशाचयक्ष-
रक्षःपितॄणामभिघर्षणानि ।
आगन्तुहेतुर्नियमव्रतादि
मिथ्याकृतं कर्म च पूर्वदेहे ॥ १६ ॥

देव- ऋषि- દેવ ઋષિ देव-ऋषि, गन्धर्व- ગન્ધર્વ गन्धर्व, पिशाच- પિશાચ पिशाच, यक्ष- યક્ષ यक्ष, रक्ष:- રાક્ષસ राक्षस, पितॄणाम् અને પિતૃઓનો और पितरोंका, अभिघर्षणानि આવેશ आवेश, मिथ्याकृतम् ખોટી રીતે કરેલાં मिथ्या प्रकारसे किये गये, नियम- નિયમ नियम व्रतादि વ્રત વગેરે व्रतादि पूर्वदेहे તથા પૂર્વદેહમાં तथा पूर्वदेहके, कर्म च કરેલાં કર્મ कर्म, आगन्तु- આગન્તુ ઉન્માદનાં आगन्तु उन्मादके हेतु કારણો છે हेतु है ॥ १६ ॥

16 Possession by the gods, sages, gandharva, pisacha, yaksha rakshasa and the manes, and the failure in the proper discharge of observances and vows in this life or the previous one —these are the causes of the insanity of the exogenous type.

भूतोन्मादस्य सामान्यलिङ्गम्—

अमर्त्यवाग्विक्रमवीर्यचेष्टो
ज्ञानादिविज्ञानबलादिभिर्यः ।
उन्मादकालोऽनियतश्च यस्य
भूतोत्थमुन्मादमुदाहरेत्तम् ॥ १७ ॥

यः જે जो, ज्ञानादि- જ્ઞાનાદિ ज्ञानादि, विज्ञान- વિજ્ઞાન विज्ञान, बलादिभिः અને બલાદિથી और बलादिसे, अमर्त्य- અમાનુષ अमानुष, वाक्- વાણી वाणी, विक्रम- પરાક્રમ पराक्रम, वीर्य- શક્તિ शक्ति चेष्टः તથા ચેષ્ટાવાળો હોય और चेष्टावाला है, यस्य च અને જેનો और जिसका, उन्मादकाल ઉન્માદકાળ उन्मादकाल, अनियतः અનિશ્ચિત હોય अनिश्चित है, तम् તેને उसको, भूतोत्थम् ભૂતજન્ય भूतजनित, उन्मादम्, ઉન્માદ उन्माद, उदाहरेत् કહેવો कहना चाहिए ॥ १७ ॥

17 The man who evinces super human power of speech, valour, prowess and behaviour in respect of knowledge, science and strength, and whose fits of insanity are indefinite as regards time—such a one should be regarded as having the insanity born of spirit possession.

देवादयो यथा पुरुषस्य देहं विशन्ति—

अदूषयन्तः पुरुषस्य देहं
देवादयः स्वैस्तु गुणप्रभावैः ।
विशन्त्यदृश्यास्तरसा यथैव
च्छायातपौ दर्पणसूर्यकान्तौ ॥ १८ ॥

यथा જેમ जैसे छाया- પ્રતિબિંબ प्रतिबिम्ब, आतपौ અને તડકો और धूप, दर्पण- દર્પણ दर्पण, सूर्यकान्तौ તથા સૂર્યકાન્ત મણિમાં પ્રવેશ કરે છે और सूर्यकान्त मणिमें प्रवेश करते है, देवादयः તેમજ દેવ વગેરે वैसे ही देवादि, अदृश्या: અદૃશ્ય રહી अदृश्य रहकर, पुरुषस्य પુરુષના पुरुषके, देहम् દેહને देहको, अदूषयन्त दूषित કર્યા વિના दूषित न करते हुए, स्वैः પોતાના अपने, गुणप्रभावै तु ગુણના પ્રભાવો વડે गुणोंके प्रभावसे, तरसा શીઘ્ર अतिवेगसे, विशन्ति તેમાં પ્રવેશ કરે છે उसमें प्रवेश करते है ॥ १८ ॥

18. The gods etc., enter invisibly and suddenly into the body of a man by their innate power without causing any morbid change, just as an image and sunshine enter a looking glass and a crystal respectively

आघातकालो हि सपूर्वरूपः
प्रोक्तो निदानेऽथ सुरादिभिश्च ।

१९. आघातकालो हि—आघातकालस्तु(क. घ भ.)

उन्मादरूपाणि पृथङ्निबोध

कालं च गम्यान् पुरुषांश्च तेषाम् ॥१९॥

सपूर्वरूपः પૂર્વરૂપસહિત पूर्वरूपसहित आवातकाल हि આવેશનો સમય आवेशकाल, निदाने નિદાનસ્થાનમાં निदानस्थानमें प्रोक्तः કહ્યો છે कह दिया है, अथ હવે अव, सुरादिभि च દેવતા ઇત્યાદિથી કરાયેલા देवादिकोसे जनित, उन्माद-ઉન્માદનાં उन्मादोके, रूपाणि લક્ષણો रूप, कालञ्च च અને સમય तथा काल, तेषाम् અને તેઓના और उनके, गम्यान् પ્રવેશને યોગ્ય प्रवेश योग्य, पुरुषान् च પુરુષોને पुरुषोंको, पृथक् ભિન્ન ભિન્ન पृथक् पृथक्, निबोध સાંભળો समझो ॥ १९ ॥

19 The time of attacks of spirit-possession and their premonitory symptoms have been described in the Section on Pathology Now listen to a description of the symptoms of each type of insanity due to spirit-possession, its incidence and of those persons who are liable to these spirit-invasions

देवोन्मत्तस्य लिङ्गम्—

तद्यथा –सौम्यदृष्टिं गम्भीरमधृष्यमकोपनमस्वप्नभोजनाभिलाषिणमल्पस्वेदमूत्रपुरीषवात शुभगन्धं फुल्लपद्मवदनमिति देवोन्मत्त विद्यात् ;

तद् यथा જેમકે जैसे कि, सौम्यदृष्टिम् સૌમ્ય દૃષ્ટિવાળા सौम्य दृष्टिवाले, गम्भीरम् ગંભીર गम्भीर, अधृष्यम् પરાભવ ન પમાડી શકાય એવા पराभव न पानेवाले, अकोपनम् ક્રોધરહિત क्रोध न करने वाले, अस्वप्न- નિદ્રા निद्रा, भोजन- अभिलाषिणम् અને ભોજનની ઇચ્છા વિનાના और भोजनमे अभिलाषा न रखने वाले, अल्प- અલ્પ अल्प, स्वेद- પસીનો पसीना, मूत्र- મૂત્ર मूत्र, पुरीष- મલ मल, वातम् તથા વાયુવાળા और वायुवाले, शुभ- સારી शुभ, गन्धम् ગંધવાળો गंधवाले, फुल्ल- અને ખીલેલા और प्रफुल्लित, पद्म- કમળ સમાન पद्म जैसे, वदनम् મુખવાળા પુરુષને मुखवाले पुरुषको, देवोन्मत्तम् इति દેવોન્મત્ત देवोन्मत्त, विद्यात् જાણવો समझे;

20-(1) Thus one who is of gentle looks, dignified, indomitable nu irrascible, and disinclined for sleep and food, whose excretions, viz., sweat, urine, stools and flatus are scanty, whose body-odour is pleasant and whose face is radiant like a full blown lotus is to be known as insane due to possession by the gods

गुर्वाद्युन्मत्तस्य लक्षणम्—

गुरुवृद्धसिद्धर्षीणामभिशापाभिचाराभिध्यानानुरूपचेष्टाहारव्याहारं तैरुन्मत्तं विद्यात् ,

गुरु- ગુરુ गुरु, वृद्ध- વૃદ્ધ वृद्ध, सिद्ध- સિદ્ધ सिद्ध, ऋषीणाम् તથા ઋષિઓના और ऋषियोंके, अभिशाप- અભિશાપ अभिशाप, अभिचार- અભિચાર अभिचार, अभिध्यान- અને અભિધ્યાનને और अभिध्यानके, अनुरूप અનુસાર अनुरूप, चेष्टा ચેષ્ટા चेष्टा, आहार- આહાર आहार, व्याहारम् તથા વાણીવાળા પુરુષને और वाणीवाले पुरुषको, तैः તેઓનાથી उनसे, उन्मत्तम् ઉન્મત્ત થયેલો उन्मत्त हुआ, विद्यात् જાણવો समझे,

20 (2) One whose behaviour, diet and speech are such that they bespeak of a curse, spell, or obsession ascribable to teachers, elders, adepts and sages, is to be known as insane due to possession by them.

पितृभिरुन्मत्तस्य लक्षणम्—

अप्रसन्नदृष्टिमपश्यन्तं निद्रालुं प्रतिहतवाचमनन्नाभिलाषमरोचकाविपाकपरीतं च पितृभिरुन्मत्तं विद्यात् ;

२०. अधृष्यम्—अधृष्टम् (ङ.)

,, पुरीषवात—पुरीषवाच (ज ध )

,, मूत्रपुरीषवात—अमूत्रपुरीषवातं (प )

२०. चेष्टाहार—चेष्टा (ध.)

अप्रसन्न- અપ્રસન્ન अप्रसन्न, दृष्टिम् દૃષ્ટિવાળા दृष्टिवाले, अपश्यन्तम् ન દેખનાર न देखनेवाले, निद्रालुम् નિદ્રાલુ निद्रालु, प्रतिहत અટકી પડેલી रुकी हुई, वाचम् વાણીવાળા वाणीवाले, अन्नाभिलाषम् અન્નની ઇચ્છા વગરના अन्नमें अनिच्छायुक, अरोचक- અને અરુચિ और अरुचि, अविपाक- તથા અવિપાકથી और अविपाकसे, परीतम् च યુક્ત પુરુષને युक्त पुरुषको, पितृभिः પિતૃઓથી पितृओंसे, उन्मत्तम् ઉન્મત્ત થયેલો उन्मत्त, विद्यात् જાણુવો समझे,

20-(3) One who is of agitated looks, unseeing, somnolent, impeded in his speech, apathetic to food and afflicted with anorexia and indigestion, is to be known as insane due to possession by the manes.

गन्धर्वोन्मत्तस्य लक्षणम्—

**(चण्डं साहसिकं तीक्ष्णं गम्भीरमधृष्यं) मुखवाद्यनृत्यगीतान्नपानस्नानमाल्यधूपगन्धरतिं रक्तवस्त्रबलिकर्महास्यकथानुयोगप्रियं शुभगन्धं च गन्धर्वोन्मत्तं विद्यात्;**

(चण्डम् क्रूर क्रूर, साहसिकम् સાહસિક साहसिक, तीक्ष्णम् તીક્ષ્ણ तीक्ष्ण, गम्भीरम् ગંભીર गम्भीर, अधृष्यम् તથા પરાભવ ન પમાડી શકાય એવા तथा पराभव न पानेवाले,) मुखवाद्य- મુખથી વગાડી શકાય એવાં વાદ્ય मुखसे वादन, नृत्य- નૃત્ય नृत्य, गीत- ગીત गीत, अन्न- અન્ન अन्न, पान- પાન पान, स्नान- સ્નાન स्नान, माल्य- પુષ્પમાળા माला, धूप- ધૂપ धूप, गन्ध- તથા સુગંધમાં और गन्धमें, रतिम् પ્રીતિવાળા प्रीतिवाले रक्त- રાતાં लाल, वस्त्र- વસ્ત્ર वस्त्र, बलिकर्म- બલિકર્મ बलिकर्म, हास्य- હાસ્ય हास्य, कथा- કથા कथा, अनुयोग- તથા પ્રશ્નમાં और प्रश्नमें, प्रियम् પ્રીતિવાળા प्रीति रखनेवाले, शुभ- અને સારી और शुभ, गन्धम् ગંધવાળા પુરુષને गन्धवाले पुरुषको गन्धर्व- ગન્ધર્વોથી गन्धर्वोंसे, उन्मत्तम् ઉન્મત્ત થયેલો उन्मत्त, विद्यात् જાણુવો समझे,

20-(4). One who is fierce, impetuous, fiery, grave, indomitable, passionately fond of musical instruments played by mouth, dance, singing, food, drinks, baths, garlands, incense and unguents; who loves the wearing of red-colored garments, sacrifices, jesting gossip, and questioning and whose body-odor is pleasant, is to be known as insane due to possession by the gandharvas

यक्षोन्मत्तस्य लक्षणम्—

**असकृत्स्वप्नरोदनहास्यं नृत्यगीतवाद्यपाठकथान्नपानस्नानमाल्यधूपगन्धरतिं रक्तविप्लुताक्षं द्विजातिवैद्यपरिवादिनं रहस्यभाषिणं च यक्षोन्मत्तं विद्यात्;**

असकृत् વારંવાર बारबार, स्वप्न- નિદ્રા निद्रा, रोदन- રોદન रोना, हास्यम् તથા હાસ્યવાળા और हास्यवाले, नृत्य- નૃત્ય नृत्य गीत- ગીત गीत, वाद्य- વાદન वादन, पाठ- પાઠ पाठ, कथा- કથા कथा, अन्न- અન્ન अन्न, पान- પાન पान, स्नान- સ્નાન स्नान, माल्य- પુષ્પમાળા माला, धूप- ધૂપ धूप, गन्ध- તથા ગન્ધમાં और गन्धमें, रतिम् પ્રીતિવાળા प्रीतिवाले, रक्त- રાતાં लाल, विप्लुत- અને અશ્રુપૂર્ણ तथा अश्रुपूर्ण, अक्षम् નેત્રવાળા आंखोंवाले, द्विजाति- બ્રાહ્મણ ब्राह्मण, वैद्य- તથા વૈદ્યની और वैद्यकी, परिवादिनम् નિન્દા કરનાર निन्दा करनेवाले, रहस्य- અને ગુપ્ત વાત और गुह्य बातको, भाषिणम् च કહી દેનાર પુરુષને कहने वाले पुरुषको, यक्ष- યક્ષોથી यक्षोंसे, उन्मत्तम् ઉન્મત્ત થયેલો उन्मत्त, विद्यात् જાણુવો समझे,

20-(5). One who sleeps, weeps and laughs frequently, is fond of dancing, singing, music, recitation, gossip, food, drinks, baths, garlands, incense and unguents, has blood-shot and tearful eyes,

२०. कथानुयोगप्रिय—कलानुयोगप्रिय (प.)

२० रोदनहास्यम्—रोदनहासिनम् (च. भ.)

,, वाद्यपाठकथा—वाद्यकथा (ख.)

speaks ill of the twice-born and the physicians, and is given to revealing secrets—is to be known as insane due to possession by the yakshas

राक्षसोन्मत्तस्य लक्षणम्—

**नष्टनिद्रमन्नपानद्वेषिणमनाहारमप्यतिबलिनं शस्त्रशोणितमांसरक्तमाल्याभिलाषिणं संतर्जकं च राक्षसोन्मत्तं विद्यात्;**

**नष्टनिद्रम्** જેની નિદ્રા નાશ પામી છે એવા जिसकी निद्रा नष्ट हो गई है ऐसे, **अन्न-** અન્ન अन्न, **पान-** તેમજ પાનનો एवं पानसे, **द्वेषिणम्** દ્વેષ કરનાર द्वेष रखनेवाले, **अनाहारम्** ખોરાક ન ખાતો છતાં अन्न न खाते हुए, **अपि** પણ भी, **अतिबलिनम्** અત્યન્ત બળવાન अत्यन्त बलवान **शस्त्र-** શસ્ત્ર शस्त्र, **शोणित-** રક્ત रक्त, **मांस** માંસ मांस **रक्तमाल्य-** તથા રાતી પુષ્પમાળાની तथा रक्त पुष्पमालाकी, **अभिलाषिणम्** અભિલાષાવાળા अभिलाषावाले, **संतर्जकम् च** અને ધમકાવનાર પુરુષને और धमकानेवाले पुरुषको, **राक्षस-** રાક્ષસથી राक्षससे, **उन्मत्त** ઉન્મત્ત થયેલો उन्मत **विद्यात्** જાણવો समझे,

20-(6). One who is afflicted with insomnia, averse to food and drink, exceedingly strong though abstaining from food fond of weapons, blood, flesh and red-colored garlands and is minatory, is to be known as insane due to possession by the rakshasas.

ब्रह्मराक्षसोन्मत्तस्य लक्षणम्—

**प्रहासनृत्यप्रधानं देवविप्रवैद्यद्वेषावज्ञाभिः स्तुतिवेदमन्त्रशास्त्रोदाहरणैः काष्ठादिभिरात्मपीडनेन च ब्रह्मराक्षसोन्मत्तं विद्यात्,**

**देव-** દેવ देव, **विप्र-** બ્રાહ્મણ ब्राह्मण, **वैद्य-** અને વૈદ્ય પ્રતિ और वैद्यके प्रति, **द्वेष-** દ્વેષ द्वेष, **अवज्ञाभिः** તથા અપમાન વડે और तिरस्कारसे, **स्तुति-** સ્તુતિ स्तुति **वेदमन्त्र-** વેદમન્ત્ર वेदमन्त्र, **शास्त्र-** તથા શાસ્ત્રના तथा शास्त्रके, **उदाहरणैः** કથનો વડે कथनोंसे, **काष्ठादिभिः** અને કાષ્ઠ વગેરેથી और काष्ठ आदिसे, **आत्म-** પોતાને अपनेको, **पीडनेन च** પીડા આપવાથી पीडा देनेसे, **प्रहास-** ખૂબ હાસ્ય जोरसे हास्य, **नृत्य-** તથા નૃત્ય तथा नृत्य **प्रधानम्** જેને મુખ્ય છે એવા પુરુષને जिसमें प्रधान है ऐसे पुरुषको, **ब्रह्मराक्षस-** બ્રહ્મરાક્ષસથી ब्रह्मराक्षससे **उन्मत्तम्** ઉન્મત્ત उन्मत्त, **विद्यात्** જાણવો समझे;

20-(7). One who is conspicuous for his loud guffaws and dance, who evinces hatred and contempt for the gods the brahmanas and the physicians, who is given to quoting hymns, scriptural verses and learned treatises and who flagellates himself with sticks and in other ways practises self-mortification, is to be known as insane due to possession by the brahmarakshasas

पिशाचोन्मत्तस्य लक्षणम्—

**अस्वस्थचित्तं स्थानमलभमानं नृत्यगीतहासिनं बद्धाबद्धप्रलापिनं संकरकूटमलिनरथ्याचेलतृणाश्मकाष्ठाधिरोहणरतिं भिन्नरूक्षस्वरं नग्नं विधावन्तं नैकत्र तिष्ठन्तं दुःखान्यावेदयन्तं नष्टस्मृतिं च पिशाचोन्मत्तं विद्यात् ॥ २० ॥**

**अस्वस्थ-** અસ્વસ્થ अस्वस्थ, **चित्तम्** ચિત્તવાળા चित्तवाले, **स्थानम्** સ્થાન स्थान, **अलभमानम्** ન મેળવનાર न पानेवाले, **नृत्य-** નૃત્ય नृत्य **गीत-** ગીત गीत, **हासिनम्** તથા હાસ્ય કરનાર तथा हास्य करनेवाले, **बद्ध-** સંબદ્ધ संबद्ध, **अबद्ध-** તથા અસંબદ્ધ तथा

२०. प्रहासनृत्यप्रधान—प्रहासानृतवादिन (ध)
,, , —प्रहासनृत्तगीतवादिन (क)

२० प्रलापिन—प्रमापिणं (ड)
संकर—सकर (त)
, भिन्नरूक्षस्वर—भिन्नरूक्षवर्णस्वरं (ष.)

असंबद्ध, प्रलापिनम् બોલનાર बोलनेवाले संकर- ઉકરડા धूलि, कूट- માટીના ઢગલા मिट्टीके ढेर, मलिन- ગંદા मलिन, रथ्या- માર્ગ मार्ग, चेल- કપડાં वस्त्र, तृण- घास तृण अश्म- પથ્થર पत्थर, काष्ठ- અને કાષ્ઠ પર और लकड़ी पर, अधिरोहण- ચડવામાં चढनेमें, रतिम् પ્રીતિવાળા प्रीति रखनेवाले, भिन्न- ભિન્ન भिन्न रूक्ष- તથા રૂક્ષ और रूक्ष, स्वरम् સ્વરવાળા स्वरवाले, नग्नम् નગ્ન नग्न, विधावन्तम् દોડતા दौडने रहनेवाले, एकत्र એક ઠેકાણે एक स्थान पर, न तिष्ठन्तम् ન ઊભા રહેનાર न ठहरनेवाला, दुःखानि દુઃખ दुःखको, आवेदयन्तम् કહી બતાવનાર कहनेवाले, नष्टस्मृतिम् અને જેની સ્મૃતિ નષ્ટ થઈ છે એવા પુરુષને और नष्टस्मृतिवाले पुरुषको, पिशाच પિશાચથી पिशाचसे, उन्मत्तम् ઉન્મત્ત થયેલો उन्मत्त, विद्यात् જાણવો समझे ॥ २० ॥

20 One who is of morbid mentality and finds no resting-place anywhere and is given to dancing, singing and laughter, who talks now sensibly and now at random, shows a penchant for sitting on dung-heaps, slag-heaps, roadways, rag-heaps, haystacks, stones and wood-heaps, who has a voice that is broken and dry, who likes to be nude who constantly runs about, never keeps to one place for any length of time, who loudly proclaims his sorrows, and is devoid of memory—such a one is to be known as insane due to possession by the pisachas.

यादृश यस्मिंश्च काले देवादय. अभिधर्षयन्ति—

तत्र चौक्षाचारं तपःस्वाध्यायकोविदं नरं प्रायः शुक्लप्रतिपदि त्रयोदश्यां च छिद्रमवेक्ष्याभिधर्षयन्ति देवा ;

तत्र તેમાં उन आठ उन्मादोंमें, चौक्ष- પવિત્ર शुद्ध आचारम् આચારવાળા आचारवाले, तप:- અને તપશ્ચર્યા और तप स्वाध्याय- તથા સ્વાધ્યાયમાં तथा स्वाध्यायमे, कोविदम् કુશળ कुशल, नरम् મનુષ્ય વિષે पुरुषमें, प्राय ઘણું કરીને प्रायः, शुक्ल- શુક્લપક્ષના शुक्लपक्षकी प्रतिपदि પડવાને દિવસે प्रतिपदामें त्रयोदश्याम् च અને તેરસને દિવસે और त्रयोदशीमें, छिद्रम् છિદ્ર छिद्र, अवेक्ष्य જોઈને पाकर, देवा· દેવતાઓ देव, अभिधर्षयन्ति આવેશ કરે છે आविष्ट होते है,

21 (1). The gods, finding an opportunity, effect their entry into a man of pure conduct and devoted to austerities and scriptural studies generally either on the first or the thirteenth day of the bright fortnight.

स्नानशुचिविविक्तसेविनं धर्मशास्त्रश्रुतिवाक्यकुशलं प्रायः षष्ठ्या नवम्यां चर्षयः;

स्नान· સ્નાન स्नान, शुचि- પવિત્ર વસ્તુઓ पवित्र पदार्थ, विविक्त- તથા એકાંતનું तथा एकात स्थानको, सेविनम् સેવન કરનારને વિષે सेवन करनेवालेमें, धर्मशास्त्र- ધર્મશાસ્ત્ર धर्मशास्त्र, श्रुतिवाक्य- તથા વેદવાક્યમાં तथा वेदवाक्यमे, कुशलम् કુશળ મનુષ્ય વિષે कुशल पुरुषमें, प्राय ઘણુંખરું प्राय., षष्ठ्याम् છઠ્ઠ षष्ठी, नवम्याम् च તથા નોમને દિવસે तथा नवमीके दिन, ऋषय ઋષિઓ આવેશ કરે છે ऋषियों आविष्ट होते हैं,

21-(2). Similarly, the rishis enter into a man who is devoted to frequent bathing and cleaning of his person and to solitude, and who is versed in the law-books, scriptures and maxims,

२१. चौक्षाचार–शौचाचार (ग. म द.)

„ छिद्रमवेक्ष्याभिधर्षयन्ति देवाः–छिद्रमवेक्ष्य देवा धर्षयन्ति (ख.म.)

२१. श्रुतिवाक्यकुशल–श्रुतिकाव्यकुशल (फ.)

for the most part, either on the sixth or the ninth day of the fortnight

**मातृपितृगुरुवृद्धसिद्धाचार्योपसेविनं प्रायो दशम्याममावस्यायां च पितरः,**

मातृ- માતા माता, पितृ- પિતા पिता, गुरु ગુરુ गुरु, वृद्ध- વૃદ્ધ वृद्ध, सिद्ध- સિદ્ધ सिद्ध, आचार्य- અને આચાર્યની और आचार्य इनकी, उपसेविनम् સેવા કરનાર વિષે सेवा करनेवाले पुरुषमें, प्राय. ઘણુંખરું प्राय, दशम्याम् દશમી दशमी अमावस्यायाम् च तथा અમાવાસ્યાને દિવસે और अमावास्याके दिन, पितरः પિતૃઓ આવેશ કરે છે पितर आविष्ट होते है,

21-(3). The manes enter a man who is attached to the service of his mother father, preceptor, elders, adepts and mentors, for the most part either on the tenth day of the fortnight or on the new-moon day

**गन्धर्वाः स्तुतिगीतवादित्ररतिं परदारगन्धमाल्यप्रियं चौक्षाचारं प्रायो द्वादश्यां चतुर्दश्यां च,**

गन्धर्वा. ગન્ધર્વો गन्धर्व, स्तुति- સ્તુતિ स्तुति, गीत- ગીત गीत, वादित्र- અને વાજિંત્રમાં और वादनमें, रतिम् પ્રીતિવાળા प्रीति रखनेवाले, परदार- પરસ્ત્રી परस्त्री, गन्ध સુગન્ધી પદાર્થો सुगन्धी, माल्य- અને પુષ્પમાલા फूलोंकी मालामें. प्रियम् જેને પ્રિય છે એવા प्रेम रखनेवाले, चौक्ष- तथा શુધ્ધ एव शुद्ध, आचारम् આચારવાળા મનુષ્ય વિષે आचारवाले पुरुषमें, प्रायः ઘણુંખરું प्राय, द्वादश्याम् બારસ द्वादशी, चतुर्दश्याम् च અને ચૌદશને દિવસે और चतुर्दशीके दिन गन्धर्वा ગંધર્વો આવેશ કરે છે गंधर्व आविष्ट होते है,

21-(4). The gandharvas enter the man who is fond of panegyrics, songs and music, has a passion for other people's wives, unguents and garlands, is of clean habits, for the most part either on the twelfth or the fourteenth day of the fortnight.

**सत्त्वबलरूपगर्वशौर्ययुक्तं माल्यानुलेपनहास्यप्रियमतिवाक्करणं प्रायः शुक्लैकादश्यां सप्तम्यां च यक्षाः,**

सत्त्व- સત્ત્વ सत्त्व, बल બળ बल, रूप રૂપ रूप, गर्व- ગર્વ अभिमान, शौर्य- અને શૌર્યથી और शौर्यसे, युक्तम् યુક્ત युक्त, माल्य- પુષ્પમાલા फूलोंकी माला, अनुलेपन- ચંદનલેપ अनुलेपन, हास्य- અને હાસ્ય और हास्यमें, प्रियम् જેને પ્રિય છે એવા प्रेम रखनेवाले, अतिवाक्करणम् અતિ બોલનારા વિષે और ज्यादा बोलनेवाले पुरुषमें प्राय ઘણુંખરું प्राय, शुक्ल શુક્લપક્ષની शुक्लपक्षकी, एकादश्याम् અગિયારશ एकादशीमें, सप्तम्याम् च અને સાતમને દિવસે और सप्तमीके दिन, यक्षा. યક્ષો આવેશ કરે છે यक्ष आविष्ट होते हैं;

21-(5) The yakshas enter a man who is endowed with intelligence, strength, good looks, pride and valour, who is fond of garlands, unguents and jesting, and is given to excessive talk, for the most part either on the eleventh or the seventh day of the bright fortnight

**स्वाध्यायतपोनियमोपवासब्रह्मचर्यदेवयतिगुरुपूजाऽरतिं भ्रष्टशौचं ब्राह्मणमब्राह्मणं वा ब्राह्मणवादिनं शूरमानिनं देवागारसलिलक्रीड-**

२१ अमावस्यायाम्–पञ्चम्याम् (प.)
,, चतुर्दश्या–चतुर्थ्यां (थ)

२१. गर्व–गन्ध (प)
,, वाक्करण–वाक्प्रवर्क (द)
,, ,, –वाक्प्रवण (च फ)
,, ब्रह्मचर्य–व्रतचर्या (क म)
,, भ्रष्टशौच–नष्टशौच (ग. थ.)
,, ब्राह्मणमब्राह्मण वा ब्राह्मणवादिन–ब्राह्मणवादिन (च.)
,, ,, –ब्राह्मणं ब्रह्मवादिनं (२.)
,, ,, –अब्राह्मण ब्राह्मणवादिन (प)
२१. ब्राह्मणवादिन–ब्रह्मवादिन (फ.)

नरतिं प्रायः शुक्लपञ्चम्यां पूर्णचन्द्रदर्शने च ब्रह्मराक्षसाः,

स्वाध्याय- સ્વાધ્યાય स्वाध्याय, तपः- તપ तप, नियम- નિયમ नियम, उपवास- ઉપવાસ उपवास, ब्रह्मचर्य- બ્રહ્મચર્ય ब्रह्मचर्य देव- દેવ देव, यति- યતિ यति गुरु અને ગુરુની और गुरुकी, पूजा- પૂજામાં पूजामें, अरतिम् અપ્રીતિવાળા प्रीति न रखनेवाले, भ्रष्टशौचम् પવિત્રતારહિત शौचरहित, ब्राह्मणम् બ્રાહ્મણ ब्राह्मण, अब्राह्मणम् वा કે અબ્રાહ્મણ या अब्राह्मण होने पर, ब्राह्मण- હુ બ્રાહ્મણ છુ मै ब्राह्मण हूं, वादिनम् એમ બોલનાર ऐसा कहनेवाले, शूर- પોતાને શૂરવીર अपनेको शूर, मानिनम् માનનાર माननेवाले, देवागार- દેવમંદિર देवमंदिर, सलिलक्रीडन- અને જલક્રીડામાં और जलक्रीडामें, रतिम् પ્રીતિવાળા મનુષ્ય વિષે प्रीति रखनेवाले पुरुषमें, प्रायः ઘણુ ખરું प्राय, शुक्ल- શુકલપક્ષની शुक्लपक्षकी, पञ्चम्याम् પાંચમ पंचमी, पूर्णचन्द्रदर्शने च અને પૂનમને દિવસે और पूर्णिमाके दिन, ब्रह्मराक्षसाः બ્રહ્મરાક્ષસો આવેશ કરે છે ब्रह्मराक्षस आविष्ट होते है;

21-(6). Into a man who is averse to the study of scriptures and to the observance of austerities, vows, fasts, continence and reverential rites to the gods, religious mendicants and preceptors, who being a brahmana is lost to purity or not being a brahmana, claims to be one; who fancies himself a hero; who likes to disport himself in the precincts of a temple or in the waters—into such a man the Brahma-Rakshasas enter for the most part either on the fifth day of the bright fortnight or on the full-moon day

रक्षःपिशाचास्तु हीनसत्त्वं पिशुनं स्त्रैणं लुब्धं शठं प्रायो द्वितीयातृतीयाष्टमीषु;

हीनसत्त्वम् સત્ત્વહીન हीनसत्त्व, पिशुनम् ચાડીખોર चुगलीखोर स्त्रैणम् સ્ત્રૈણ स्त्रैण, लुब्धम् લોભી लोभी, शठम् અને શઠ મનુષ્ય વિષે और शठ पुरुषमें, प्रायः ઘણુ ખરુ प्राय, द्वितीया- બીજ द्वितीया, तृतीया- ત્રીજ तृतीया अष्टमीषु અને આઠમને દિવસે और अष्टमीके दिन, रक्ष -पिशाचा तु રાક્ષસો અને પિશાચો આવેશ કરે છે राक्षस और पिशाच आविष्ट होते हैं;

21 (7) The rakshasas and pisachas enter a man who is of a depraved mentality given to back-biting, effeminate in character covetous and deceitful, for the most part on the second, the third or the eighth day of the fortnight.

इत्यपरिसंख्येयानां ग्रहाणामाविष्कृततमा ह्यष्टावेते व्याख्याताः ॥ २१ ॥

इति આ પ્રમાણે इस प्रकार, अपरिसंख्येयानाम् અસંખ્ય असख्य, ग्रहाणाम् ગ્રહોમાંથી ग्रहोंमेंसे, आविष्कृततमाः અત્યંત પ્રસિદ્ધ अत्यंत प्रसिद्ध, एते આ ये, अष्टौ આઠ ગ્રહો आठ ग्रह व्याख्याताः हि કહ્યા છે कह दिये हैं ॥ २१ ॥

21 Thus from among the countless varieties of psychic seizure we have described the foregoing eight they being the ones most commonly observed

उन्मादस्यासाध्यलक्षणानि —

सर्वेष्वपि तु खल्वेषु यो हस्त्यावुधस्य रोषसंरम्भान्निःशङ्कमन्येष्वात्मनि वा निपातयेत् स

२१. देवागार-देवतागार (ध.)

२१. स्त्रैण-स्तेन (ध.)

,, प्रायो—प्रायश्छिद्रमवेक्ष्याभिधर्षयन्ति (क ग. घ)

,, ह्यष्टावेते—ह्यष्टौ ग्रहा. (क)

२२ निःशङ्क—निःशङ्क (क)

ह्यसाध्यो ज्ञेयः; तथा यः साश्रुनेत्रो मेढ्रप्रवृत्तरक्तः क्षतजिह्वः प्रस्नुतनासिकश्छिद्यमानचर्माऽप्रतिहन्यमानवाणिः सततं विकूजन् दुर्वर्णस्तृषार्तः पूतिगन्धश्च स हिंसार्थिनोन्मत्तो ज्ञेयः, तं परिवर्जयेत् ॥ २२ ॥

एषु આ इन सर्वेषु अपि तु खलु સઘળામાં सबमें, य જે जो, हस्तौ બન્ને હાથ दोनों हाथ उद्यम्य ઉગામીને उठा कर, रोष- રોષના क्रोधके, संरम्भात् વેગથી वेगसे, निःशङ्कम् શંકા વિના निःशंक हो कर, अन्येषु બીજાઓને दूसरोंको, आत्मनि वा કે પોતાને या अपनेको, निपातयेत् મારે છે मारता है, सः हि તેને उसको, असाध्यः અસાધ્ય असाध्य ज्ञेय જાણવો समझे, तथा તે પ્રમાણે उसी प्रकार, यः જે जो, साश्रुनेत्र અશ્રુપૂર્ણ નેત્રવાળો अश्रुपूर्ण नेत्रवाला, मेढ्रमूत्रेन्द्रियमાંથી मूत्रेन्द्रियसे, प्रवृत्तरक्त રક્તની પ્રવૃત્તિવાળો रक्तकी प्रवृत्तिवाला क्षतजिह्व ઘવાએલી જીભવાળો जिसकी जिह्वामें क्षत हो ऐसा, प्रस्नुतनासिक વહેતા નાકવાળો नाक बह रही हो ऐसा, छिद्यमानचर्मा છેદાએલી ચામડીવાળો चर्म फट गई हो एसा, अप्रतिहन्यमानवाणिः અટક્યા વિનાની વાણીવાળો सतत बोलनेवाला, सततम् નિરંતર निरन्तर, विकूजन् કણછતો अव्यक्त शब्द बोलनेवाला, दुर्वर्णः ખરાબ રંગવાળો विरूप, तृषार्तः તૃષાથી પીડાતો तृषासे पीड़ित, पूतिगन्धः च અને ખરાબ ગંધવાળો હોય और पूतिगंधयुक्त हो, सः તેને उसको, हिंसार्थिना હિંસા કરનાર ભૂતે हिंसार्थी भूतसे, उन्मत्त ઉન્મત્ત કરેલો उन्मत्त किया हुआ, ज्ञेयः જાણવો जाने, तम् તેને उसको, परिवर्जयेत् તજી દેવો त्याग देवे ॥ २२ ॥

22 From among all these kinds of psychic subjects, one who moved by the intensity of his passion, never hesitates to raise his hand and strikes either himself or those about him is to be regarded as an incurable case Similarly, one whose eyes are marked with profuse lachrymation, who bleeds from the phallus, has his tongue bruised, nostrils dilated, skin cracking and his speech unrestrained. is seen to mumble constantly, has discoloration of body, is constantly afflicted with thirst and is foul smelling, should be known as having been crazed by a Spirit desirous of avenging itself Such a man should be left to his fate.

उन्मादस्य चिकित्साक्रमः—

रत्यर्चनाकामोन्मादिनौ तु भिषगभिप्रायाचाराभ्यां बुद्ध्वा तदङ्गोपहारबलिमिश्रेण मन्त्रभैषज्यविधिनोपक्रमेत् ॥ २३ ॥

रति- રતિ रति, अर्चना- અને પૂજાની और पूजाकी, काम- ઇચ્છાવાળાથી कामनावालोंसे उन्मादिनौ ઉન્મત્ત થએલને उन्मत्तोंको, तु તો तो, अभिप्राय- અભિપ્રાય अभिप्राय, आचाराभ्याम् અને આચારથી और आचरणोंसे, बुद्ध्वा જાણીને समझकर, भिषक् વૈદે वैद्य, तत्अङ्ग- તેની પૂર્તિ માટે उसकी पूर्तिके लिए, उपहार- ઉપહાર उपहार, बलि- અને બલિદાનથી और बलिसे, मिश्रेण યુક્ત युक्त, मन्त्र- મન્ત્ર मन्त्र, भैषज्य- અને ઔષધની और औषधकी, विधिना વિધિથી विधिसे, उपक्रमेत् ઉપચાર કરવો चिकित्सा करे ॥ २३ ॥

23 As regards those who have been rendered insane by spirits moved by the desire for sport or for worship, the physician, having ascertained this point by observing the intentions and

२२. चर्मा—मर्मा (क ख ब फ.)
, वाणि.—पाणि (ख. ब प)
,, विकूजन् दुर्वर्णस्तृषार्त.—घूत्रन् दुर्वर्णस्तृषार्त. (च)
,, दुर्वर्णस्तृषार्त —दुर्वदयस्तृषार्त (ध)
,, हिंसार्थिनोन्मत्त —हिंसार्थमुन्मत्त (ब.)

२३. अभिप्रायाचाराभ्या—अभिचाराभिशापाभ्या (क ब ध,
,, उपक्रमेत्—उपाचरेत् (च.)
,, ,, —उपचरेत् (ब.)

the behaviour of the subjects, should proceed to treat the patient by the incantation therapy, suitably assisted by means of appropriate propitiatory and sacrificial offerings.

तत्र द्वयोरपि निजागन्तुनिमित्तयोरुन्मादयोः समासविस्तराभ्यां भेषजविधिमनुव्याख्यास्यामः २४

तत्र હવે अब, निज- નિજ निज, आगन्तु- અને આગન્તુ और आगन्तु, निमित्तयोः નિમિત્તવાળા कारणवाले, द्वयो. બન્ને दोनों, उन्मादयोः अपि ઉન્માદનાં उन्मादोंकी, समास- સંક્ષેપ संक्षेप, विस्तराभ्याम् તથા વિસ્તારથી और विस्तारसे भेषज- ઔષધની भेषजकी, विधिम् વિધિ विधि अनुव्याख्यास्याम. કહેશું कहेंगे ॥ २४ ॥

24. We shall now explain the procedure of treatment of both the endogenous and exogenous types of insanity in brief as well as in extenso

वातोन्मादचिकित्सा—

उन्मादे वातजे पूर्वं स्नेहपानं विशेषवित्।
कुर्यादावृतमार्गे तु सस्नेहं मृदु शोधनम् ॥ २५ ॥

विशेषवित् વિશેષજ્ઞ વૈદ્ય विशेषज्ञवैद्य, वातजे વાતજ वातज, उन्मादे ઉન્માદમાં उन्मादमें, पूर्वम् પહેલાં प्रथम, स्नेहपानम् સ્નેહપાન स्नेहपान, कुर्यात् કરાવવું देवे, आवृत- આવૃત बद्ध मार्गे तु માર્ગ હોય તો मार्ग होने पर, सस्नेहम् સ્નેહયુક્ત स्नेहयुक्त, मृदु મૃદુ मृदु, शोधनम् શોધન આપવું शोधन देवे ॥ २५ ॥

25 The specialist should first give the unctuous potion to a patient with insanity arising from vata, but if the passages are obstructed, then the oleation should be accompanied by mild purificatory procedure.

पित्तकफोन्मादचिकित्सा—

कफपित्तोद्भवेऽप्यादौ वमनं सविरेचनम् ।
स्निग्धस्विन्नस्य कर्तव्यं शुद्धे संसर्जनक्रमः ॥२६॥

कफ- કફ कफ, पित्त- તથા પિત્તથી और पित्तसे, उद्भवे ઉત્પન્ન થયેલા ઉન્માદમાં उत्पन्न उन्मादमें अपि પણ भी, आदौ પ્રથમ प्रथम, स्निग्ध- સ્નેહન स्नेहन, स्विन्नस्य તથા સ્વેદન કરેલાને तथा स्वेदन किये हुएको, सविरेचनम् વિરેચનસહિત विरेचनसहित, वमनम् વમન वमन, कर्तव्यम् આપવુ देवे, शुद्धे અને શુધ્ધ થયા પછી और शुद्ध होने पर, संसर्जनक्रम સંસર્જનક્રમ કરાવવો ससर्जनक्रम करावे ॥ २६ ॥

26. If the insanity is due to kapha or pitta, then vomition and purgation should be first carried out after preliminary preparation with oleation and sudation. When purified thus, the procedure of rehabilitation should be carried out

निरूहं स्नेहबस्तिं च शिरसश्च विरेचनम् ।
ततः कुर्याद्यथादोषं तेषां भूयस्त्वमाचरेत् ॥२७॥

तत. ત્યાર પછી पीछे, निरूहम् નિરૂહબસ્તિ निरूहबस्ति, स्नेहबस्तिम् च સ્નેહબસ્તિ स्नेहबस्ति, शिरसः विरेचनम् च અને શિરોવિરેચન और शिरोविरेचन, कुर्यात् કરાવવાં દેવે, यथादोषम् તથા દોષાનુસાર तथा दोषानुसार, तेषाम् તેઓને उनको, भूयस्त्वम् વારવાર पुन. पुन., आचरेत् કરવાં करे ॥ २७ ॥

27 After this, the patient should be given evacuative or unctuous enema, or errhine medications repeating these measures as often as neeeded by the intensity of the morbidity.

हृदिन्द्रियशिरःकोष्ठे संशुद्धे वमनादिभिः ।
मनःप्रसादमाप्नोति स्मृतिं संज्ञां च विन्दति ॥२८॥

२४ अनुव्याख्यास्याम –व्याख्यास्याम (घ.)
२५ मार्गे–वाते (प.)

२६. पित्तोद्भवे–पित्तभवे घ.)
२७. निरूहं स्नेहबस्तिं च–निरूहणस्नेहवस्ती (ख.)
,, ,, –निरूहान् स्नेहबस्तींश्च (ध.)
२८. हृदिन्द्रियशिर कोष्ठे संशुद्धे–हृच्छीर्षेन्द्रियकोष्ठेषु शुद्धेषु (फ)

वमन- વમન वमन आदिभिः વગેરેથી आदिसे, हृत्- હૃદય हृदय, इन्द्रिय- ઇન્દ્રિય इन्द्रिय शिर - મસ્તક शिर, कोष्ठे તથા કોઠાનુ और कोष्ठके, संशुद्धे સ શોધન થતાં संशुद्ध होनेपर, मन:- મનની मनकी प्रसादम् પ્રસન્નતાને प्रसन्नताको, आप्नोति પામે છે प्राप्त होता है, स्मृतिञ्च તથા સ્મૃતિ तथा स्मृति, संज्ञाम् च અને સજ્ઞાને और सज्ञाको, विन्दति પ્રાપ્ત કરે છે पाता है ॥ २८ ॥

28 The stomach, the senses, the head and the alimentary tract being purified by vomition and other purificatory procedures, the mind becomes clear and the patient regains his memory and wits.

शुद्धस्याचारविभ्रंशे तीक्ष्णं नावनमञ्जनम् ।
ताडनं च मनोबुद्धिदेहसंवेजनं हितम् ॥२९॥

शुद्धस्य શુદ્ધ થયેલાને शुद्ध हुएको, आचार- આચારની आचारके, विभ्रंशे ભ્રષ્ટતામાં विभ्रंशमें, तीक्ष्णम् તીક્ષ્ણ तीक्ष्ण, नावनम् નસ્ય नस्य, अञ्जनम् અંજન अजन, ताडनम् તાડન ताडन, मन.- અને મન और मन, बुद्धि- બુધ્ધિ बुद्धि, देह- તથા દેહને तथा देहको, संवेजनम् च ઉદ્વિગ્ન કરવુ उद्विग्न करना, हितम् હિતકારી છે हितकर है ॥ २९ ॥

29. If even after purification, the dis-orientation of behaviour persists, strong nasal and eye medications, flagellation and giving shock to his mind, intellect and body, are advised.

यः सक्तोऽविनये पट्टैः संयम्य सुदृढैः सुखैः ।
अपेतलोहकाष्ठाद्ये संरोध्यश्च तमोगृहे ॥३०॥

य જે जो, अविनये અવિનયમાં अविनयमें, सक्त· આસક્ત હોય તેને आसक्त हो उसे, सुदृढै મજબૂત सुदृढ, सुखै અને કઠોર લાગે નહિ એવાં और सुख- कारक, पट्टैः વસ્ત્રોથી वस्त्रोंसे, संयम्य બાંધીને बांधकर, अपेत- કાઢી લીધેલ છે निकाले गये हैं, लोह- લોઢાં लोहा, काष्ठाद्ये તથા લાકડાં જેમાંથી એવા और लकडी आदि जिसमेंसे ऐसे, तमोगृहे અંધારા ઘરમાં अंधेरे कमरेमें, संरोध्य· च પૂરવો बन्द करके रखा जावे ॥३०॥

30. If the patient continues to behave in an irresponsible manner, then he should be made soft with soft but strong bandages and put in a dark room free from metallic and wooden articles (lest he should harm himself with these)

तर्जनं त्रासनं दानं हर्षणं सान्त्वनं भयम् ।
विस्मयो विस्मृतेर्हेतोर्नयन्ति प्रकृतिं मनः ॥३१॥

तर्जनम् ધમકાવવુ તર્જન, त्रासनम् ત્રાસ त्रास, दानम् દાન दान, हर्षणम् આનંદ ઉત્પન્ન કરવો हर्षण, सान्त्वनम સાન્ત્વન सान्त्वन, भयम् ભય भय विस्मय. અને વિસ્મય और विस्मय हेतो ઉન્માદના હેતુનુ उन्मादके हेतुका, विस्मृते. વિસ્મરણ કરાવવાથી विस्मरण करानेवाले होनेसे, मन મનને मनको, प्रकृतिम् પ્રકૃતિમાં प्रकृतिमें, नयन्ति લઈ આવે છે ले आते है ॥ ३१ ॥

31. Intimidation, terrorization, gifts, exhilaration, pacification, frightening, and astonishing—these being causative of forgetfulness serve to reclaim the mind to normality from its insane fixation

प्रदेहोत्सादनाभ्यङ्गधूमाः पानं च सर्पिषः ।
प्रयोक्तव्यं मनोबुद्धिस्मृतिसंज्ञाप्रबोधनम् ॥३२॥

मन - મન मन, बुद्धि- બુદ્ધિ बुद्धि, स्मृति- સ્મૃતિ स्मृति संज्ञा- અને સંજ્ઞાને और सज्ञाको, प्रबोधनम् જાગૃત કરનારાં जगानेवाले, प्रदेह- પ્રદેહ प्रदेह, उत्सादन- ઉત્સાદન उत्सादन, अभ्यङ्ग- અભ્યંગ अभ्यंग, धूमा

२९ देहसंवेजन—देहसतर्जनं (क त घ)
३०. सक्तो—शक्तो (घ. ष)
,, लोह—लोष्ट (च)
३२. धूमा·—धूपा (द.)

धूमनु पान धूमका पान, सर्पिषः अने घृतनु और घृतका, पानम् च पान એઓનો पान इनका, प्रयोक्तव्यम् प्रयोग કરવો જોઈએ प्रयोग करना चाहिए ॥ ३१ ॥

32. Applications, massage, inunctions, smokes and potions of ghee should be used for restoring him to his normal frame of mind, intellect, memory and wits

सर्पिष्पानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः ।

आगन्तो. આગન્તુ ઉન્માદમાં आगन्तु उन्मादमें, सर्पिष्पानादि घृतपान वगेरे घृतपानादि मन्त्रादि च अने मन्त्र वगेरे और मन्त्रादि, विधिः विधि विधि, इष्यते ઇષ્ટ છે इष्ट है।

32½. The potion of ghee and other similar measures, or the incantation therapy, are recommended in the exogenous variety of insanity.

अतः सिद्धतमान्योगाञ्छृणून्मादविनाशनान् ॥३३॥

अत. હવે अब, उन्माद- ઉન્માદનો उन्मादका, विनाशनान् નાશ કરનારા विनाश करनेवाले, सिद्धतमान् અત્યંત સિદ્ધ अत्यन्त सिद्ध, योगान् યોગો योगोंको, शृणु સાંભળો सुनो ॥ ३३ ॥

33. Now listen to a description of the most successful recipes curative of insanity.

हिङ्गुसौवर्चलव्योषैर्द्विपलांशैर्घृताढकम् ।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम् ॥३४॥

हिङ्गु- હિંગ हींग, सौवर्चल- સંચળ काला नमक, व्योषै. ત્રિકટુ त्रिकटु, द्विपलांशैः દરેક આઠ તોલા સાથે प्रत्येक आठ तोलेके साथ, चतुर्गुणे ચાર ગણા चौगुने, गवाम् ગાયના गौंके, मूत्रे મૂત્રમાં मूत्रमें, सिद्धम् સિદ્ધ કરેલુ सिद्ध किया हुआ, घृताढकम् २५६ તોલા ઘી २५६ तोले घृत, उन्मादनाशनम् ઉન્માદનાશક છે उन्मादनाशक है ॥ ३४ ॥

३३. विनाशनान्–निबर्हणाम् (ग. च)

34 The medicated ghee prepared with 256 tolas of ghee in four times its quantity (1024 tolas) of cow's urine with the paste of 8 tolas each of asafetida, rock-salt and the three spices, is curative of insanity

उन्मादे कल्याणकं घृतम्—

विशाला त्रिफला कौन्ती देवदार्वेलबालुकम् ।
स्थिरा नतं रजन्यौ द्वे सारिवे द्वे प्रियङ्गुका ॥३५॥
नीलोत्पलैलामञ्जिष्ठादन्तीदाडिमकेशरम् ।
तालीशपत्रं बृहती मालत्याः कुसुमं नवम् ॥३६॥
विडङ्गं पृश्निपर्णी च कुष्ठं चन्दनपद्मकौ ।
अष्टाविंशतिभिः कल्कैरेतैरक्षसमन्वितैः ॥३७॥
चतुर्गुणे जले सम्यग्घृतप्रस्थं विपाचयेत् ।

विशाला ઇન્દ્રવારુણી इन्द्रायण, त्रिफला ત્રિફળા त्रिफला, कौन्ती રેણુકબીજ रेणुका, देवदारु દેવદાર देवदारु, एलवालुकम् એલુવા एलुवा, स्थिरा શાલપર્ણી शालपर्णी नतम् તગર तगर, द्वे रजन्यौ હળદર, દારુ હળદર हल्दी, दारुहल्दी. द्वे सारिवे બે સારિવા दोनों सारिवा, प्रियङ्गुका પ્રિયંગુ प्रियंगु, नीलोत्पल- નીલકમળ नीलोफर, एला- એલચી इलायची, मञ्जिष्ठा- મજીઠ मंजीठ, दन्ती- દંતીમૂળ दन्तीमूल, दाडिम- દાડમ अनार, केशरम् અને નાગકેશર और नागकेशर, तालीशपत्रम् તાલીસપત્ર तालीसपत्र, बृहती ઊભી ભોરીંગણી बड़ी कटेरी, मालत्या માલતીનાં मालतीके नवम् कुसुमम् તાજા ફૂલ ताजे फूल, विडङ्गम् વાવડિંગ वायविडंग, पृश्निपर्णी પૃશ્નિપર્ણી पीठवन, कुष्ठम् કઠ कुठ, चन्दन- ચન્દન चन्दन, पद्मकौ અને પદ્માખ और पद्माख, एतैः આ इन,

३५ कौन्ती–कान्ता (च ध)
,, स्थिरा नत–स्थिरानन्ता (त)
,, प्रियङ्गुका–प्रियङ्गुकम् (ध)
३७ अक्षसमन्वितैः–कर्षसमन्वितै (क. छ)
,, ,, –कर्षसमैर्भिषक् (ध)
,, अष्टाविंशतिभिः कल्कैरेतैरक्षसमन्वितैः–कल्कं कर्षसमरेतैर्विंशत्यष्टाभिरेव च (ख. त.)

अष्टाविंशतिभि અઠ્ઠાવીસ अट्ठाईसमेंसे, अक्ष દરેક એક તોલા प्रत्येक एक तोला, समन्वितैः પ્રમાણ દ્રવ્યોના प्रमाण द्रव्योंके कल्कैः કલ્કથી कल्कसे चतुर्गुणे ચારગણા चौगुने, जले પાણીમા जलमें घृतप्रस्थम् ६४ તોલા ઘી ६४ तोले घी, सम्यक् સારી રીતે अच्छी तरह विपाचयेत् પકાવવુ पकावे ॥ ३५-३७½ ॥

35-37½. Colocynth, three myrobalans, fragrant pepper, deodar, cubeb pepper, ticktrefoil, valerian, hard-wick, turmeric, indian berberry two varieties of indian sarsaparilla perfumed cherry, blue water lily cardamom, madder, red physic-nut, pomegranate fragrant poon, cinnamon leaf, yellow berried night-shade, fresh flowers of jasmine, embelia, painted leaved uraria, costus, sandalwood and himalayan cherry the physician should prepare medicated ghee with 64 tolas of ghee and four times this quantity of water with the paste of one tola each of the above 28 drugs.

अपस्मारे ज्वरे कासे शोषे मन्देऽनले क्षये ॥३८॥
वातरक्ते प्रतिश्याये तृतीयकचतुर्थके ।
छर्द्यर्शोमूत्रकृच्छ्रेषु विसर्पोपहतेषु च ॥३९॥
कण्डूपाण्ड्वामयोन्मादविषमेहगदेषु च ।
भूतोपहतचित्तानां गद्गदानामचेतसाम् ॥४०॥
शस्तं स्त्रीणां च वन्ध्यानां धन्यमायुर्बलप्रदम् ।
अलक्ष्मीपापरक्षोघ्नं सर्वग्रहविनाशनम् ॥४१॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ।
इति कल्याणकं घृतम् ।

अपस्मारे અપસ્મારમાં अपस्मारमें ज्वरे તાવમાં ज्वरमें कासे ઉધરસમાં खासीमें, शोषे શોષમાં शोषमें, मन्दे अनले મન્દાગ્નિમાં मन्दाग्निमें, क्षये ક્ષયમાં क्षयमें, वातरक्ते વાતરક્તમા वातरक्तमें, प्रतिश्याये પ્રતિશ્યાયમાં प्रतिश्यायमें, तृतीयक- તૃતીયક तृतीयक' चतुर्थके અને ચોથિયા તાવમાં और चतुर्थक ज्वरमें छर्दि- ઉલટીમાં वमनमें, अर्शः- હરસમાં बवासीरमें, मूत्रकृच्छ्रेषु મૂત્રકૃચ્છ્રમાં मूत्रकृच्छ्रमें, विसर्पोपहतेषु च તથા વિસર્પથી પીડાતાઓમાં तथा विसर्पसे पीडितोंमें, कण्डू- ખરજમા खुजलीमें, पाण्ड्वामय- પાંડુરોગમાં पाण्डुरोगमें, उन्माद- ઉન્માદમાં उन्मादमें, विष- વિષમાં विषमें, मेहगदेषु च અને પ્રમેહરોગમાં और प्रमेहरोगमें, भूत- તેમજ ભૂતોથી एवं भूतोंसे, उपहत- આક્રાન્ત आक्रान्त, चेतसाम् ચિત્તવાળા चित्तवाले, गद्गदानाम् ગદ્ગદ બોલનારા गद्गद बोलनेवाले, अचेतसाम् તથા અલ્પ બુદ્ધિવાળા મનુષ્યો तथा अल्प बुद्धिवाले पुरुषों, वन्ध्यानाम् च અને વન્ધ્યા और वन्ध्या, स्त्रीणाम् સ્ત્રીઓ માટે स्त्रियोंके लिए, इदम् આ यह, कल्याणकम् सर्पिः કલ્યાણક ઘૃત कल्याणक घृत, शस्तम् વખણાયેલું છે प्रशस्त है, धन्यम् તેમજ ધન્ય एवं धन्य, आयुः- આયુષ્ય आयु, बलप्रदम् તથા બળ આપનાર तथा बल देनेवाला अलक्ष्मी- દરિદ્રતા दारिद्र्य, पाप- પાપ पाप, रक्षोघ्नम् તથા રાક્ષસોને હણનાર तथा राक्षसोंका घातक सर्वग्रहविनाशनम् સર્વ ગ્રહોનો વિનાશ કરનારુ सर्व ग्रहोंका विनाशक, पुंसवनेषु च અને પુંસવનોમાં और पुंसवनोंमें, श्रेष्ठम् શ્રેષ્ઠ છે श्रेष्ठ है ॥ ३८-४१½ ॥ इति कल्याणकम् घृतम् આ કલ્યાણક ઘૃત છે यह कल्याणक घृत है।

38-41½ This ghee is recommended in epilepsy, fever, cough, consumption, weakness of digestive fire, in wasting, rheumatic conditions, coryza, tertian and quartan fevers, in vomiting, piles, dysuria, in persons afflicted with spreading inflammations, pruritus, anemia, insanity, toxicosis, urinary disorders, in possessions by demons, in obstructed speech and weak-mindedness It is beneficial in sterility of women. It is auspicious and increases

३८ शोषे—श्वासे (ध. ज्ञ)
४०, कण्डूपाण्ड्वामयोन्माद—पाण्डुपामाविषोन्माद (प.)
,, अचेतसाम्—सचेतसाम् (ग ब च छ ज्ञ. प)

life and vitality, ensures against poverty, evils and demons, and destroys all evil influence of stars. This Kalyanaka Ghee is also the best drug for ensuring male progeny. Thus has been described the Kalyanaka Ghee.

उन्मादे महाकल्याणकं घृतम्—

एभ्य एव स्थिरादीनि जले पक्त्वैकविंशतिम् ॥४२॥
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरे चतुर्गुणे ।
वीरार्द्रमाषकाकोलीस्वयंगुप्तर्षभर्धिभिः ॥४३॥
मेदया च समैः कल्कैस्तत् स्यात् कल्याणकं महत् ।
बृंहणीयं विशेषेण सन्निपातहरं परम् ॥४४॥
इति महाकल्याणकं घृतम् ।

एभ्य एव એમાંથીજ इन्हींसे, स्थिरादीनि શાલપર્ણી આદિ स्थिरादि एकविंशतिम् એકવીસ દ્રવ્યોને एकवीस द्रव्योंको, जले પાણીમાં जलमें, पक्त्वा પકાવીને पका कर तस्मिन् रसे તે ક્વાથમાં उस क्वाथमें, चतुर्गुणे તથા ચારગણા तथा चौगुने, गृष्टिक्षीरे પહેલ વેતરી ગાયના દૂધમાં प्रथम प्रसूता गौके दूधमें, वीरा- વીરા वीरा, आर्द्रमाष- લીલા અડદ अशुष्क उड़द, काकोली- કાકોલી काकोली, स्वयंगुप्ता- કૌચા कवाच, ऋषभ- ઋષભક ऋषभक, ऋधिभि ઋદ્ધિ ऋद्धि, मेदया च તથા મેદાના तथा मेदाके, समैः સમભાગ समभाग, कल्कैः કલ્કથી कल्कसे, सर्पिः ઘી घृत, पचेत् પકાવવુ पकावे, तत् તે वह, महत् कल्याणकम् મહાકલ્યાણક ઘૃત महाकल्याणक घृत, विशेषेण વિશેષ કરીને विशेष करके, बृंहणीयम् બૃંહણીય बृंहणीय, परम् અને અત્યંત और अत्यन्त, सन्निपातहरम् સન્નિપાતહર છે सन्निपातहर है ॥ ४२-४४ ॥ इति આ यह, महाकल्याणकम् घृतम् મહાકલ્યાણક ઘૃત છે महाकल्याणक घृत है।

42-44. Decoct 21 drugs of the ticktrefoil group from among the above-mentioned drugs and prepare with this, medicated ghee by adding four times its quantity of the milk of a cow which has calved for the first time, with the paste of kshirakakoli, fresh black-gram, kakoli, cowhage, rishabhaka, ridhi and meda in equal parts. this is the Great Kalyanaka Ghee. It is specially valuable as a roborant and is a sovereign remedy for tridiscordance Thus has been described the Great Kalyanaka Ghee

उन्मादे महापैशाचिकं घृतम्—

जटिलां पूतनां केशीं चारटीं मर्कटीं वचाम् ।
त्रायमाणां जयां वीरां चोरकं कटुरोहिणीम् ॥४५॥
वयःस्थां शूकरीं छत्रामतिच्छत्रां पलङ्कषाम् ।
महापुरुषदन्तां च कायस्थां नाकुलीद्वयम् ॥४६॥
कटम्भरां वृश्चिकालीं स्थिरां चाहृत्य तैर्घृतम् ।
सिद्धं चातुर्थकोन्मादग्रहापस्मारनाशनम् ॥४७॥
महापैशाचिकं नाम घृतमेतद्यथाऽमृतम् ।
बुद्धिस्मृतिकरं चैव बालानां चाङ्गवर्धनम् ॥४८॥
इति महापैशाचिकं घृतम् ।

जटिलाम् જટામાસી जटामासी, पूतनाम् હરડે हरड़, केशीम् ભૂતકેશી भूतकेशी, चारटीम् સ્થળપદ્મ स्थलकमल, मर्कटीम् કૌચાં केवाच, वचाम् વજ वच, त्रायमाणाम् ત્રાયમાણ त्रायमाण, जयाम् જયા जया, वीराम् વીરા वीरा, चोरकम् ચોરક चोरक कटुरोहिणीम् કડુ कटुकी, वयःस्थाम् વયઃસ્થા वयःस्था, शूकरीम् વારાહીકન્દ वाराहीकन्द, छत्राम् છત્રા छत्रा, अतिच्छत्राम् અતિચ્છત્રા अतिच्छत्रा, पलङ्कषाम् ગુગળ गुग्गुलु, महापुरुषदन्ताम् શતાવરી शतावरी, कायस्थाम् નાની એલચી छोटी इलायची, नाकुलीद्वयम् બે જાતની નાકુલી दोनों नाकुली, कटम्भराम् કટમ્ભરા कटम्भरा, वृश्चिकालीम् વૃશ્ચિકાલી वृश्चिकाली, स्थिराम् શાલપર્ણી शालपर्णी आहृत्य લઈને लेकर, तैः તેઓથી उनसे, सिद्धम् સિદ્ધ કરેલુ सिद्ध किया हुआ, घृतम् ઘી घृत,

४२ क्षीरार्द्रमाष—क्षीराद्रिमाष (च.)।

४६ वयःस्था—कायस्था (छ ड. त थ.)

,, कायस्था—वयःस्था (क.)

चातुर्थक- ચાતુર્થક જ્વર चातुर्थक ज्वर, उन्माद- ઉન્માદ उन्माद, ग्रह- ગ્રહબાધા ग्रहबाधा, अपस्मार- અને અપસ્મારનું और अपस्मारका, नाशनम् નાશક છે नाशक है एतत् આ यह, महापैशाचिकम् મહાપૈશાચિક महापैशाचिक, नाम નામનું नामका, घृतम् ઘી घृत अमृतम् यथा અમૃતસમાન છે अमृतसमान है, बुद्धिस्मृतिकरम् च एव બુદ્ધિ અને સ્મૃતિને વધારનારું बुद्धि और स्मृतिको बढ़ानेवाला, बालानाम् અને બાળકોના और बालकोंके, अङ्गवर्धनम् च અંગોને પુષ્ટ કરનાર છે अङ्गोंको पुष्ट करनेवाला है ॥ ४५-४८ ॥ इति આ यह, महापैशाचिकम् મહાપૈશાચિક महापैशाचिक घृतम् ઘી છે घृत है ।

45-48. Nardus, chebulic myrobalan, bhutakeshi, brahmi cowhage, sweet flag, zalil, common sesban, kshirakakoli, angelica, kurroa, guduch, sukari, dill and fennel gum guggulu climbing asparagus, cardamom, the two varieties of indian groundsel, white siris, climbing nettle mercury and ticktrefoil: the ghee prepared by taking all these drugs is curative of quartan fever, insanity, seizure and epilepsy. This ghee is called the Great Paisacha Ghee and is equal to ambrosia It improves the intellect and memory and helps the growing child to acquire proper development. Thus has been described the Great Paisacha Ghee.

उन्मादे लशुनाद्यं घृतम्—

लशुनानां शतं त्रिंशदभयास्त्र्यूषणात् पलम् ।
गवां चर्ममसीप्रस्थो द्व्याढकं क्षीरमूत्रयोः ॥४९॥
पुराणसर्पिषः प्रस्थमेभिः सिद्धं प्रयोजयेत् ।
हिङ्गुचूर्णपलं शीते दत्त्वा च मधुमाणिकाम् ॥५०॥

लशुनानाम् લસણ लहसुन, शतम् સો પલ सौ पल, अभयाः હરડે हरड़, त्रिंशत् ત્રીસ तीस, त्र्यूषणात् ત્રિકટુ त्रिकटु, पलम् ४ તોલા ४ तोले, गवाम् ગાયના गायके, चर्ममसी- ચામડાની ભસ્મ चर्मकी भस्म प्रस्थ ६४ તોલા ६४ तोले, क्षीरमूत्रयोः દૂધ તથા મૂત્રના दूध और मूत्रके, द्वि-आढकम् બે આઢક दो आढक, एभिः એ દ્રવ્યો વડે इन द्रव्योंमे सिद्धम् સિદ્ધ કરેલું सिद्ध किया हुआ, पुराणसर्पिष જૂનું ઘી पुराना घृत, प्रस्थम् ६४ તોલા ६४ तोले, शीते ઠંડુ થતાં ठण्डा होने पर हिङ्गुचूर्णपलम् ४ તોલા હિંગ ४ तोले हींग, मधुमाणिकाम् च અને મધ ६४ તોલા और मधु ६४ तोले दत्त्वा નાખીને डाल कर प्रयोजयेत् પ્રયોગ કરવો જોઈએ प्रयोग करना चाहिए ॥ ४९-५० ॥

49-50. A medicated ghee should be prepared of 400 tolas of garlic 30 fruits of chebulic myrobalan 4 tolas of three spices, and 64 tolas of the ashes of cowhide in 512 tolas of cow's milk and urine and 64 tolas of old ghee When cold, it should be mixed with 4 tolas of asafetida and 64 tolas of honey, and used

तद्दोषागन्तुसंभूतानुन्मादान् विषमज्वरान् ।
अपस्मारांश्च हन्त्याशु पानाभ्यञ्जननावनैः ॥५१॥

इति लशुनाद्यं घृतम् ।

तत् તે ઘી वह घृत, पान- પાન पान, अभ्यञ्जन- અભ્યંગ अभ्यंग, नावनैः અને નસ્યથી और नस्यसे, दोष- દોષ दोष, आगन्तु- તથા આગન્તુક तथा आगन्तुक, संभूतान् કારણથી ઉત્પન્ન થયેલા कारणसे उत्पन्न हुए, उन्मादान् ઉન્માદો उन्माद, विषमज्वरान् વિષમ જ્વરો विषम ज्वर, अपस्मारान् च તથા અપસ્મારોનો तथा अपस्मारोंका, आशु શીઘ્ર शीघ्र, हन्ति નાશ કરે છે नाश करता है ॥ ५१ ॥ इति આ यह, लशुनाद्यम् લશુનાદ્ય लशुनादि, घृतम् ઘી છે घी है।

51 This ghee results in a quick cure in cases of insanity due to internal and external causes, irregular fevers and epilepsy, when used as a potion, inunction or nasal medication. Thus

has been described the Compound Garlic Ghee.

उन्मादे लशुनाद्यं घृतम्—

**लशुनस्याविनष्टस्य तुलार्धं निस्तुषीकृतम् ।**
**तदर्धं दशमूलस्य द्व्याढकेऽपां विपाचयेत् ॥५२॥**
**पादशेषे घृतप्रस्थं लशुनस्य रसं तथा ।**
**कोलमूलकवृक्षाम्लमातुलुङ्गार्द्रकै रसैः ॥५३॥**
**दाडिमाम्बुसुरामस्तुकाञ्जिकाम्लैस्तदर्धिकैः ।**
**साधयेत् त्रिफलादारुलवणव्योषदीप्यकैः ॥५४॥**
**यवानीचव्यहिङ्ग्वम्लवेतसैश्च पलार्धिकैः ।**
**सिद्धमेतत् पिबेच्छूलगुल्मार्शोजठरापहम् ॥५५॥**

अविनष्टस्य ખરાબ ન થઈ ગયેલા खराब न हुआ, लशुनस्य निस्तुषीकृतम् ફોતરાં કાઢેલ લસણ छिलका उतारा हुआ लहसन, तुलार्धम् २०० તોલા २०० तोले, दशमूलस्य અને દશમૂળ और दशमूल, तत्- તેનાથી उससे, अर्धम् અર્ધું आधा, अपाम् પાણી जलके, द्व्याढके બે આઢકમાં दो आढकमे, विपाचयेत् પકાવવાં पकावे, पाद- ચતુર્થાંશ चतुर्थांश, शेषे- શેષ રહે ત્યારે शेष रहने पर, घृतप्रस्थम् એક પ્રસ્થ ઘી घृतका एक प्रस्थ, तथा અને और, लशुनस्य લસણનો लहसनका, रसम् એક પ્રસ્થ રસ एक प्रस्थ रस, तत्- તેનાથી उससे, अर्धिकै- અર્ધા અર્ધા आधे आधे, कोल- બોર बेर, मूलक- મૂળા मूली, वृक्षाम्ल- ચકોતરુ चकोत्रा, मातुलुङ्ग- બીજોરું बिजौरा, आर्द्रकै- અને આદુના और अदरखके, रसै- રસથી रसोंसे, दाडिम- તથા દાડમના और अनारके, अम्बु- રસ रस, सुरा- સુરા सुरा, मस्तु- મસ્તુ मस्तु, काञ्जिक- અને કાંજી વગેરે और काजी आदि, अम्लै અમ્લોથી अम्लोंसे, पलार्धिकै अर्धा अर्धा પલ आधे आधे पल, त्रिफला- ત્રિફળા त्रिफला, दारु- દેવદાર देवदार, लवण- સિંધાલૂણ सेंधानमक, व्योष- ત્રિકટુ त्रिकटु, दीप्यकै- અજમો अजवायन, यवानी- યવાની यवानी, चव्य- ચવ્ય चव्य, हिङ्गु- હિંગ हीग, अम्लवेतसै અને અમ્લવેતસથી और अम्लवेतससे, साधयेत् પકાવવાં सिद्ध करे, शूल- શૂળ शूल, गुल्म ગુલ્મ गुल्म, अर्श- અર્શ અર્શ, जठर- અને જઠરરોગનો और उदररोगका, अपहम् નાશ કરનારું नाशक, सिद्धम् સિદ્ધ सिद्ध, एतत् આ ઘી इस घीको, पिबेत् પીવું पीवे ॥ ५२-५५ ॥

52-55 Decoct 200 tolas of a good quality of garlic, after removing the external sheaths and 100 tolas of deca-radix in 512 tolas of water. When the whole is reduced to one-fourth its quantity, add to it 64 tolas of ghee and 64 tolas of the juice of garlic and 32 tolas each of the juices of jujube, radish kokam, citron and ginger, 32 tolas of sour pomegranate juice, sura wine, whey and sour conjee with the paste of 2 tolas of each of the three myrobalans, deodar, rock-salt, three spices, celery seeds, bishop's weed, chaba pepper, asafetida and common sorrel and prepare it into a medicated ghee. This ghee when taken cures colic, gulma, piles and abdominal diseases.

**ब्रध्नपाण्ड्वामयप्लीहयोनिदोषज्वरकृमीन् ।**
**वातश्लेष्मामयान् सर्वानुन्मादांश्चापकर्षति ॥५६॥**
**इत्यपरं लशुनाद्यं घृतम् ।**

(एतत् આ ઘી यह घी), ब्रध्न- બ્રધ્ન ब्रध्न, पाण्ड्वामय- પાંડુરોગ पाण्डुरोग, प्लीह- પ્લીહા प्लीहा, योनिदोष- યોનિદોષ योनिदोष, ज्वर- જ્વર ज्वर, कृमीन् કૃમિ कृमि, सर्वान् સઘળા सब वात- વાત वात, श्लेष्म- તથા કફના तथा कफके, आमयान् રોગો रोग, उन्मादान् અને ઉન્માદોને और उन्मादोंको, अपकर्षति નાશ કરે છે नष्ट करता है ॥५६॥ इति આ यह, अपरम् બીજું दूसरा, लशुनाद्यम् લશુનાદ્ય लशुनाद्य, घृतम् ઘૃત છે घृतहै ।

५२. दशमूलस्य—दशमूल्यास्तु (क. ग)
५५. यवानी—यमानी (ग.)
५६ उन्मादान् च—उन्माद च (ग)
,, इत्यपर—इति द्वितीयं (म.)

56. It also cures inguinal swelling, anemia, splenic diseases, gynecic diseases, fevers, helminthiasis disorders due to vata and kapha, and all types of insanity. Thus has been described the second Garlic-group Ghee

उन्मादे हिङ्ग्वादि घृतम्—

हिङ्गुना हिङ्गुपर्ण्या च सकायस्थवयःस्थया ।
सिद्धं सर्पिर्हितं तद्वद्वयःस्थाहिङ्गुचोरकैः ॥५७॥

हिङ्गुना હિંગ हींग, हिङ्गुपर्ण्या च ડીકામારી डीकामाली, सकायस्थ- એલચી इलायची, वयस्थया અને વયસ્થાથી और वयस्थासे, सिद्धम् સિદ્ધ કરેલ सिद्ध, सर्पि ઘૃત घृत, तद्वत् અને તે પ્રમાણે और उसी प्रकार, वयस्था- વયસ્થા वयस्था, हिङ्गु- હિંગ हींग, चोरकैः અને ચોરકથી સિદ્ધ કરેલ ઘી और चोरकसे सिद्ध घृत, हितम् હિતકારી છે हितकारी है ॥ ५७ ॥

57. The medicated ghee prepared with asafetida, gummy gardenia or with small cardamom and brahmi or asafetida, brahmi and choraka are similarly beneficial.

उन्मादे पुराणघृतम्—

केवलं सिद्धमेभिर्वा पुराणं पाययेद्घृतम् ।
पाययित्वोत्तमां मात्रां श्वभ्रे रुन्ध्याद्गृहेऽपि वा ॥५८॥
विशेषतः पुराणं च घृतं तं पाययेद्भिषक् ।
त्रिदोषघ्नं पवित्रत्वाद्विशेषाद्ग्रहनाशनम् ॥५९॥

केवलम् કેવળ अकेले, पुराणम् જૂનું पुराने घृतम् ઘી घीको, एभिः અથવા આ ઉપર કહેવામાં આવેલાં હિંગ વગેરે દ્રવ્યોથી अथवा इन उपर्युक्त हींग आदि द्रव्योंसे, सिद्धम् वा સિદ્ધ કરેલું જૂનું ઘી सिद्ध किये हुए पुराने घीको पाययेत् પાવું पिलावे, उत्तमाम् મોટી बडी, मात्राम् માત્રા मात्रा पाययित्वा પાઈને पिलाकर, श्वभ्रे ખાડામાં गढेमें, गृहे अपि वा અથવા ઘરમાં या घरमें, रुन्ध्यात् પૂરી રાખવો बंद रखे, भिषक् વૈદ્ય वैद्य, तम् તેને उसे, त्रिदोषघ्नम् ત્રિદોષઘ્ન त्रिदोषघ्न, पवित्रत्वात् અને પવિત્ર હોવાથી और पवित्र होनेसे, विशेषात् વિશેષે કરીને विशेष करके, ग्रहनाशनम् ગ્રહનાશક ग्रहनाशक, पुराणम् જૂનું पुराना, घृतम् ઘી घृत, विशेषतः વિશેષે કરીને विशेष करके, पाययेत् પીવરાવવું पिलावे ॥ ५८-५९ ॥

58-59. The patient may be given a potion of the old ghee alone or the medicated ghee above described. Giving him the maximum dose, he may be locked up in an under-ground cellar or in a house. The physician may administer specially old ghee to the patient. It will be found curative of tridiscordance, and being perfectly pure, it is specially curative of spirit-possession.

गुणकर्माधिकं पानादास्वादात् कटुतिक्तकम् ।
उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम् ॥६०॥
लाक्षारससनिभं शीतं तद्धि सर्वग्रहापहम् ।
मेध्यं विरेचनेष्वग्र्यं

दश- દશ दस, वर्ष- વર્ષ वर्ष, स्थितम् રહેલું रखा हुआ, पुराणम् જૂનું पुराणा, घृतम् ઘી घृत, पानात् પીવાથી पीनेसे, गुण- ગુણ गुण, कर्म- અને કર્મમાં और कर्मोंमें, अधिकम् અધિક થાય છે अधिक होता है, आस्वादात् અને સ્વાદમાં और स्वादमें, कटु- કટુ कटु, तिक्तकम् તેમજ તિક્ત एवं तिक्त, स्यात् હોય છે होता है, उग्रगन्धम् અને ઉગ્ર ગંધવાળું હોય છે और उग्र गन्धवाला होता है, लाक्षारससन्निभम् લાખના રસ જેવું लाक्षारसके समान, शीतम् શીતળ शीत, तत् हि તે वह, सर्व- સર્વ सब ग्रह- ગ્રહને ग्रहका, अपहम् દૂર કરનારું नाशक, मेध्यम् મેધ્ય मेध्य विरेचनेषु અને વિરેચનોમાં और विरेचनोंमें, अग्र्यम् શ્રેષ્ઠ છે श्रेष्ठ है ॥ ६०½ ॥

५९. ग्रहनाशनम्–ग्रहमोक्षणम् (क. ख. ग छ. थ.)

६०. पानात्–स्नानात् (घ)

60-60½ Its properties and actions are intensified when drunk as a potion and it is pungent and bitter in taste The ghee kept for a period of ten years is called 'old' ghee and it possesses very strong odour. The ghee, preserved for a longer period (i. e for more than ten years) is of the color of lac-juice, cooling and curative of all kinds of possessions It is highly promotive of the intellect and stands first as a purgative.

प्रपुराणमतः परम् ॥६१॥
नासाध्यं नाम तस्यास्ति यत् स्याद्वर्षशतस्थितम् ।
दृष्टं स्पृष्टमथाघ्रातं तद्धि सर्वग्रहापहम् ॥६२॥
अपस्मारग्रहोन्मादवतां शस्तं विशेषतः ।

अत આથી પણ इनसे भी, परम् અધિક સમય સુધી રાખેલું ઘી अधिक काल तक रखा हुआ घी, प्रपुराणम् પ્રપુરાણ કહેવાય છે प्रपुराण कहाता है, यत् જે जो, वर्षशत- સો વર્ષ સુધી सौ वर्ष तक, स्थितम् રાખેલું रखा गया, स्यात् હોય हो, तस्य તેને उसके लिए, असाध्यम् नाम કોઈ પણ અસાધ્ય कुछ भी असाध्य, न अस्ति નથી नहीं है, तत् તે वह दृष्टम् દર્શનથી दर्शनसे, स्पृष्टम् સ્પર્શથી स्पर्शसे, अथ અને और, आघ्रातम् સુંઘવાથી જ सूंघनेसे ही, सर्व- સર્વ सब

ग्रह- ગ્રહોનો ग्रहोंको, अपहम् हि નાશ કરે છે नष्ट करता है अपस्मार- અને અપસ્માર और अपस्मार, ग्रह- ગ્રહ ग्रह, उन्मादवताम् તથા ઉન્માદવાળાઓ માટે तथा उन्मादवालोंके लिए, विशेषत વિશેષે કરીને विशेष करके, शस्तम् હિતકર છે हितकर है ॥ ६१-६२½ ॥

61-62½ As regards the ghee preserved for a period of hundred years, there is no disorder which it cannot cure.Even the sight or touch or smell of this ghee is curative of all kinds of spirit-possession. It is specially beneficial in epilepsy and in insanity due to spirit-possession.

उन्मादे नस्याञ्जनयोगा.—

एतानौषधयोगान् वा विधेयत्वमगच्छति ॥६३॥
अञ्जनोत्सादनालेपनावनादिषु योजयेत् ।

विधेयत्वम् કહ્યું कहना अगच्छति ન માનતા દરદી પર न मानते हुए दरदी पर, एतान् આ इन, औषधयोगान् ઔષધયોગોનો औषधयोगोंका, अञ्जन- અંજન अञ्जन, उत्सादन ઉત્સાદન उत्सादन, आलेप- આલેપન आलेपन, नावनादिषु અને નસ્ય વગેરેમાં और नस्य आदिमें, योजयेत् પ્રયોગ કરવો प्रयोग करे ॥ ६३½ ॥

63-63½ If the patient proves recalcitrant, the following drugs may be used as eye-salves, massage, applications and nasal medications.

शिरीषादिनस्यम्, अञ्जनम् च—

शिरीषो मधुकं हिङ्गु लशुनं तगरं वचा ॥६४॥
कुष्ठं च बस्तमूत्रेण पिष्टं स्यान्नावनाञ्जनम् ।

शिरीषः સરસડો शिरीष, मधुकम् જેઠીમધ मुलहठी, हिङ्गु હિંગ हींग लशुनम् લસણ लहसुन, तगरम् તગર

६२. तद्धि सर्वग्रहापहम्—तद्धिपर्वग्रहापहम् (क ख)
,, एतच्छ्लोकादनन्तरम्—
त्रिदोषघ्नं पवित्रत्वाद् विशेषाद् ग्रहनाशनम् ।
गुणकर्माधिकं पाने स्वादे कटुकतिक्तकम् ॥
कर्णाक्षिशिरोगशमनं विषघ्नं पावनं तथा ।
लाक्षारससनिभं शीतं सर्वदोषग्रहापहम् ॥
मेध्यं विरेचनं धन्यं प्रपुराणमतः परम् ।
नासाध्यं नाम तस्यास्ति यत्तु द्वादशवार्षिकम् ॥
दृष्टं स्पृष्टं तथाघ्रातं तद्धिसर्वग्रहापहं ।
अपस्मारविषोन्मादवाते शस्तं यथाऽमृतम् ॥
इत्यधिकः पाठः (प) पुस्तके ।

६३ एतानौषधयोगान् वा विधेयत्वमगच्छति—एतैरौषधयोगैर्वा विधेयत्वं स गच्छति (ख)
,, ,, —एतैरौषधयोगैर्वा विधेयत्वमगच्छति (ग.)

तगर, वचा વજ वचा, कुष्ठम् અને કઠ और कूठ, बस्तमूत्रेण એ બધાંને બકરાના મૂત્રથી इनको बकरेके मूत्रसे पिष्टम् પીસીને पीसकर, नावन- नस्य नस्य, अञ्जनम् અને અંજન और अंजन, स्यात् કરવાં करे ॥ ६४½ ॥

64-64½. Siris, liquorice, asafetida, garlic, indian valerian, sweet flag and costus, pounded in goat's urine will make a good nasal and eye-medication.

व्योषादिनस्यम्, अञ्जनम् च—

तद्वद्व्योषं हरिद्रे द्वे मञ्जिष्ठाहिङ्गुसर्षपाः ॥६५॥
शिरीषबीजं चोन्मादग्रहापस्मारनाशनम् ।

तद्वत् તે જ પ્રમાણે उसी प्रकार, व्योषम् ત્રિકટુ त्रिकटु, द्वे हरिद्रे હળદર તથા દારુહળદર हल्दी तथा दारुहल्दी, मञ्जिष्ठा- મજીઠ मंजीठ, हिङ्गु- હિંગ हींग, सर्षपाः સરસવ सरसों, शिरीषबीजम् च અને સરસડાનાં બીજ और शिरीषके बीज, उन्माद- એ ઉન્માદ ये उन्माद, ग्रह- ગ્રહ ग्रह, अपस्मार- અને અપસ્મારનાં और अपस्मारके, नाशनम् નાશક છે नाशक हैं ॥ ६५½ ॥

65-65½. Similarly the three spices, turmeric and indian berberry, madder, asafetida, rape-seed and siris-seed will be found curative of insanity, possession and epilepsy.

अपामार्गादिवर्तिः —

पिष्ट्वा तुल्यमपामार्गं हिङ्ग्वालं हिङ्गुपत्रिकाम् ॥६६॥
वर्तिः स्यान्मरिचार्धांशा पित्ताभ्यां गोशृगालयोः ।
तयाऽञ्जयेदपस्मारभूतोन्मादज्वरार्दितान् ॥६७॥
भूतार्तानमरार्तांश्च नरांश्चैव दृगामये ।

अपामार्गम् અઘેડો અપામાર્ગ, हिङ्गु હિંગ हींग, आलम् હરતાળ हरिताल, हिङ्गुपत्रिकाम् હિંગુપત્રિકા हिंगुपत्रिका, तुल्यम् એ સઘળાં સમભાગ ये समभाग, मरिच- અને મરી और काली मिर्च, अर्धांशा અર્ધો ભાગ એઓને आधा भाग इनको, गोशृगालयोः ગાય અને શિયાળના गाय और गीदडके, पित्ताभ्यां પિત્તથી पित्तसे, पिष्ट्वा પીસીને पीसकर वर्तिः स्यात् વર્તિ બનાવવી वर्ती बनावे, तया એ વર્તિથી इस वर्तिसे, अपस्मार- અપસ્માર अपस्मार, भूतोन्माद- ભૂતોન્માદ भूतोन्माद, ज्वरार्दितान् तथा જ્વરથી પીડિત तथा ज्वरसे पीड़ित, भूतार्तान् ભૂતપીડિત भूतपीडित, अमरार्तान् च અને દેવપીડિત और देवपीड़ित, नरान् મનુષ્યોને मनुष्योंको दृगामये च एव તેમજ આંખના રોગોમાં एवं अक्षिरोगोंमें, अञ्जयेत् અંજન કરવુ अञ्जन करे ॥ ६६-६७½ ॥

66-67½. Make a collyrium-stick by pounding equal parts of rough chaff, asafetida, yellow arsenic. gummy gardenia, with half its quantity of black pepper in the bile of an ox or jackal This collyrium-stick should be applied to the eye of epileptic subjects or those afflicted with delusionary insanity, spirit-possession and fever or in cases of persons afflicted by spirits or the gods or suffering from eye-diseases

अञ्जनार्थं मरिचयोगः—

मरिचं चातपे मासं सपित्तं स्थितमञ्जनम् ॥६८॥
वैकृतं पश्यतः कार्यं दोषभूतहतस्मृतेः ।

दोषभूतहतस्मृतेः દોષજન્ય તેમજ ભૂતજન્ય અપસ્મારવાળાને दोषजन्य तथा भूतजन्य अपस्मारवालेको, वैकृतम् पश्यत અને વિકૃત દેખનારાને और विकृत देखनेवालेको, मासम् એક માસ एक मास, सपित्तम् પિત્તની સાથે पित्तके साथ, आतपे તડકે धूपमें, स्थितम् રાખેલા रखी हुई, मरिचम् મરીનું काली मिर्चका,

६६. °मपामार्गं हिङ्ग्वाल—°मपामार्गहिङ्गुनी (क ब प.)
,, हिङ्ग्वाल—हिङ्गुल (ख)
,, ,, —हिङ्गनी (द)
६७. तयाञ्जयेत्—तया जयेत् (प)

अञ्जनम् અંજન अजन, कार्यम् કરવું જોઈએ करना चाहिए ॥ ६८½ ॥

68-68½ The collyrium prepared from the paste of black pepper and bile and exposed to the sun for one month should be used in the case of persons who suffer from delusions and loss of memory caused by morbid humors or spirit-possessions.

सिद्धार्थकादिः अगदः—

सिद्धार्थको वचा हिङ्गु करञ्जो देवदारु च ॥६९॥
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम् ।
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम् ॥७०॥
बस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ।
नस्यमालेपनं चैव स्नानमुद्वर्तनं तथा ॥७१॥
अपस्मारविषोन्मादकृत्यालक्ष्मीज्वरापहः ।
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते ॥७२॥
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत् ।

सिद्धार्थक ધોળા સરસવ सफेद सरसों, वचा વજ वच, हिङ्गु હિંગ हींग करञ्जः કરંજ करञ्ज, देवदारु च દેવદાર देवदारु, मञ्जिष्ठा મજીઠ मंजीठ, त्रिफला- ત્રિફળા त्रिफला श्वेता શ્વેતા श्वेता, कटभीत्वक् ધોળા સરસડાની છાલ सफेद शिरीषकी छाल, कटुत्रिकम् ત્રિકટુ त्रिकटु, प्रियङ्गुः પ્રિયંગુ प्रियङ्गु, शिरीष સરસડો शिरीष, रजनीद्वयम् च અને હળદર તેમજ દારુહળદર और हल्दी एवं दारुहल्दी, समांशानि સમ ભાગે सम भागसे, बस्तमूत्रेण બકરાના મૂત્રથી बकरेके मूत्रसे, पिष्ट. પીસેલ पीसा हुआ, अयम् આ यह, अगद· અગદ अगद, पानम् પાન पान, अञ्जनम् અંજન अञ्जन, नस्यम् નસ્ય नस्य, आलेपनम् च एव આલેપન आलेपन, स्नानम् સ્નાન स्नान, तथा उद्वर्तनम् તેમજ ઉદ્વર્તન દ્વારા एव उबटन द्वारा, अपस्मार- અપસ્માર अपस्मार, विष- વિષ विष, उन्माद- ઉન્માદ उन्माद, कृत्या- કૃત્યા कृत्या, अलक्ष्मी- દારિદ્ય दारिद्य, ज्वरापह तथा જ્વરનો નાશ કરે છે तथा ज्वरको नष्ट करता है, राजद्वारे च અને રાજદરબારમાં और राजदरबारमें शस्यते વખણાય છે प्रशस्त माना गया है, एतेन આ દ્રવ્યોના કલ્કથી इन द्रव्योंके कल्कसे, सगोमूत्रम् ગોમૂત્રની સાથે गोमूत्रके साथ, सिद्धम् સિધ્ધ કરેલું सिद्ध किया हुआ, सर्पिः ઘી घृत, तदर्थकृत् તે જ કાર્ય કરે છે उसी कार्यको करता है ॥ ६९-७२½ ॥

69-72½ Rape-seed, sweet flag, asafetida, indian beech, deodar, madder, the three myrobalans white mussel shell creeper, bark of white siris, the three spices perfumed cherry, siris, turmeric and indian berberry—take equal parts of each and make a paste in goat's urine. This antidote may be used as potion, collyrium, nasal medication application, bath or massage It is curative of epilepsy, toxicosis insanity, effects of black magic, poverty and fever. It frees one from the fear of evil spirits and is esteemed in royal courts Also the ghee prepared of the above articles in cow's urine has similar properties

उन्मादे धूमयोगाः—

प्रसेके पीनसे गन्धैर्धूमवर्तिं कृतां पिबेत् ॥७३॥
वैरेचनिकधूमोक्तैः श्वेताद्यैर्वा सहिङ्गुभिः ।

प्रसेके મુખપ્રસેકમાં मुखप्रसेकमें, पीनसे तथा પીનસમાં और पीनसमें, गन्धैः ગન્ધ દ્રવ્યોવડે गन्धद्रव्योंसे, सहिङ्गुभि वा અથવા હિંગસહિત अथवा हींगसहित, वैरेचनिक- વૈરેચનિક वेरेचनिक, धूमोक्तैः ધૂમમાં કહેલ धूममें कही हुई, श्वेताद्यै· શ્વેતાદિ ઔષધિઓ श्वेतादि ओषधियोंसे, कृताम् બનાવેલી

---

७० श्वेता कटभीत्वक् कटुत्रिकम्—व्योषं श्वेता सकटभीत्वचम् (प)
७१ स्नानमुद्वर्तनं तथा—स्नानपानावगाहन (प)
७२. राजद्वारे—राज्यद्वारे (च)

बनाई हुई, धूमवर्तिम् ધૂમવર્તિને धूमवर्तिको, पिबेत् પીવી पिये ॥ ७३½ ॥

73-73½. If the patient is affected with ptyalism or coryza, he may smoke a cigar prepared of drugs of the fragrant group or of the group of the white mussel shell creeper, together with asafetida mentioned in connection with errhine smokes.

शल्लकोलूकमार्जारजम्बूकवृकवस्तजैः ॥७४॥
मूत्रपित्तशकृल्लोमनखैश्चर्मभिरेव च ।
सेकाञ्जन प्रधमन नस्यं धूमं च कारयेत् ॥७५॥
वातश्लेष्मात्मके प्रायः

वातश्लेष्मात्मके વાતજ તથા કફજ અપસ્મારમાં वातजन्य तथा कफजन्य अपस्मारमें, प्राय ઘણુ કરીને बहुत करके, शल्लक શાહુડી सेह, उलूक- ઘુવડ उल्लू, मार्जार- બિલાડા बिल्ले, जम्बूक- શિયાળ गीदड़, वृक- વરુ भेड़िये, वस्तजै અને બકરાનાં और बकरेके, मूत्र મૂત્ર मूत्र, पित्त- પિત્ત पित्त, शकृत्- વિષ્ઠા विष्ठा, लोम- રૂવાં रोंगटे, नखै નખો नखों, चर्मभि एव च અને ચામડાથી और चमोंसे, सेक પરિષેક परिषेक, अञ्जनम् અંજન अञ्जन, प्रधमनम् પ્રધમન प्रधमन, नस्यम् नस्य नस्य, धूमम् च અને ધૂમ और धूम कारयेत् देवां જોઈએ दना चाहिए ॥ ७४-७५½ ॥

74-75½. Affusions, eye-ointments and insufflations, nasal medications and smokes may be prepared from urine, bile, dung, nails and hide of pangolin, owl, cat, jackal, wolf and goat, for use particularly in insanity due to vata and kapha.

पैत्तिकोन्मादचिकित्सा—

पैत्तिके तु प्रशस्यते ।
तिक्तकं जीवनीयं च सर्पिः स्नेहश्च मिश्रकः ॥७६॥
शीतानि चान्नपानानि मधुराणि मृदूनि च ।
शङ्खकेशान्तसन्धौ वा मोक्षयेज्ज्ञो भिषक् सिराम् ।
उन्मादे विषमे चैव ज्वरेऽपस्मार एव च ॥७७॥

पैत्तिके तु પૈત્તિક ઉન્માદમાં पैत्तिक उन्मादमें, तिक्तकम् તિક્ત ઘૃત तिक्त घृत, जीवनीयम् च જીવનીય जीवनीय, सर्पिः ઘૃત घृत, मिश्रक. स्नेहः च અને મિશ્રક સ્નેહ और मिश्रक स्नेह, प्रशस्यते પ્રશસ્ત છે प्रशस्त है, शीतानि च અને શીતળ और शीतल, मधुराणि મધુર मधुर, मृदूनि च तथा મૃદુ तथा मृदु, अन्नपानानि અન્નપાન પણ પ્રશસ્ત છે अन्नपान भी प्रशस्त हैं, उन्मादे ઉન્માદમાં उन्मादमें, विषमे ज्वरे च एव વિષમ જ્વરમાં विषम ज्वरमें अपस्मारे च एव અને અપસ્મારમાં और अपस्मारमें, शङ्ख- શંખપ્રદેશ श - प्रदेश, केशान्तसन्धौ वा અથવા કેશાન્તસંધિમાં अथवा केशान्तसन्धिमें, ज्ञ भिषक् જ્ઞાની વૈદ્ય ज्ञानी वैद्य, सिराम् સિરાનું सिराका, मोक्षयेत् મોક્ષણ કરવું मोक्षण करे ॥ ७५½ ७७ ॥

75½-77. In conditions due to pitta, bitter group ghee, jivaniya ghee, mixed unction and sweet, soft and cooling eats and drinks are recommended The physician skilled in venesection should take out blood from the temporal vein situated near the margin of the hair and temporal region in conditions of insanity, irregular fever and also epilepsy

उन्मादे बृंहणम्—

घृतमांसविवृतं वा निवाते स्थापयेत् सुखम् ।
त्यक्तस्त्वं प्रविशद्बुद्धिस्मृतिः संज्ञां लब्ध्वा प्रमुच्यते ७८

घृत- ઘી घी, मांस- અને માંસથી और मांससे, विवृतम् वा તૃપ્ત કરેલાને तृप्त हुए रोगीको, सुखम्

७७ शङ्खकेशान्तसन्धौ—शङ्खे केशान्तसन्धौ (ग)
,, मृदूनि च—मधूनि च (ग.)
७८ स्थापयेत्—स्थापयेद् (ग)
,, प्रमुच्यते—प्रमुच्यते (ग. च क.)

सुखपूर्वक सुखसे, निवाते પવનરહિત સ્થાનમાં पवनरहित स्थानमें, स्थापयेत् રાખવો रक्खे, मति- આથી તે બુદ્ધિ इससे वह बुद्धि, स्मृति-भ्रंशम् તેમજ સ્મૃતિના ભ્રંશને एवं स्मृतिके भ्रंशको, त्यक्त्वा છોડીને त्याग कर, संज्ञाम् અને સંજ્ઞાને और सज्ञाको, लब्ध्वा પ્રાપ્ત કરીને पा कर, प्रमुच्यते ઉન્માદથી મુક્ત થાય છે उन्मादसे मुक्त हो जाता है ॥ ७८ ॥

78 Or having fed him to repletion on ghee and flesh, the patient should be confined in a comfortable room free from draught By this he becomes free from his derangement of intellect and memory and having regained his normal wits, gets rid of his disease.

उन्मादे त्रासनादि—

**आश्वासयेत् सुहृद्वा तं वाक्यैर्धर्मार्थसंहितैः ।**
**ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि वा ॥७९॥**

सुहृत् वा અથવા મિત્રે अथवा मित्र, तम् તેને उसको, धर्म- ધર્મ धर्म, अर्थसंहितैः तथा અર્થયુક્ત तथा अर्थयुक्त, वाक्यैः વાક્યો વડે वाक्योंसे, आश्वासयेत् આશ્વાસન આપવું आश्वासन देवे, इष्टविनाशम् वा અથવા ઇષ્ટનો વિનાશ अथवा इष्टके विनाशको, ब्रूयात् સંભળાવવો सुनावे, अद्भुतानि वा અથવા અદ્ભુત દૃશ્યોને अथवा अद्भुत दृश्योंको, दर्शयेत् બતાવવાં दिखलावे ॥ ७९ ॥

79. The patient's well-wishers may calm him with words of religious and moral import, or they may shock him out of his distemper by announcing the news of the loss of something he dearly loves or they may win him back to normality by showing him marvels

**बद्धं सर्षपतैलाक्तं न्यसेद्वोत्तानमातपे ।**
**कपिकच्छ्वाऽथवा तप्तैर्लोहतैलजलैः स्पृशेत् ॥८०॥**
**कशाभिस्ताडयित्वा वा सुबद्धं विजने गृहे ।**
**रुन्ध्याच्चेतो हि विभ्रान्तं व्रजत्यस्य तथा शमम् ८१**

बद्धम् वा અથવા તેને બાંધીને अथवा उसे बाध कर, सर्षपतैलाक्तम् સરસિયુ તેલ ચોપડી सरसोंका तैल लगाकर, आतपे તડકામાં धूपमें, उत्तानम् ચત્તો चित न्यसेत् સુવાડવો लिटावे, कपिकच्छ्वा અથવા કૌચાનો अथवा केवाचसे, तप्तैः वा અથવા તપાવેલા अथवा तपाये हुए, लोह- લોઢાનો लोहेसे, तैल- તેલનો तैलसे, जलैः वा કે જળનો या जलसे, स्पृशेत् સ્પર્શ કરાવવો स्पर्श करावे, सुबद्धम् वा અથવા સારી રીતે બાંધી તેને अथवा अच्छी तरह बाध कर उसे, कशाभिः ચાબુક चाबुक, ताडयित्वा લગાવીને लगाकर, विजने નિર્જન निर्जन, गृहे ઘરમાં घरमें, रुन्ध्यात् પૂરી રાખવો बन्द करे, हि કેમકે क्योंकि, तथा એમ કરવાથી ऐसा करनेसे अस्य એનું इसका, विभ्रान्तम् ભમેલુ भ्रान्त चेत ચિત્ત चित्त, शमम् व्रजति શાન્ત થાય છે शान्त होता है ॥ ८०-८१ ॥

80 81. Or the patient may be anointed with mustard oil and tied hand and foot, laid out on his back in the sun; or he may be smeared with the leaves of cowage, or lightly branded with hot irons or scalded with boiling oil or water or, having scourged him with light whips, he may be left well secured with ropes in soilitary confinement. From such drastic measures, the disorientated mind of the man is restored to normality.

**सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैर्गजैश्च तम् ।**
**त्रासयेच्छस्त्रहस्तैर्वा तस्करैः शत्रुभिस्तथा ॥८२॥**
**अथवा राजपुरुषा बहिर्नीत्वा सुसंयतम् ।**
**त्रासयेयुर्वधेनैनं तर्जयन्तो नृपाज्ञया ॥८३॥**

---

८० बद्ध—बद्वा (ह. त.)

८० अथवा तप्तैः—असितसैर्वा (ग.)

उद्धृतदंष्ट्रेण દઢો કાઢી લીધેલા दाढे निकाली हुई हों ऐसे, सर्पेण સાપથી सापसे दान्तैः तथा વશ કરેલા तथा वशवर्ती, सिंहैः સિંહોથી सिंहोंसे, गजैः च તેમજ હાથીઓથી एवं हाथियोंसे, तथा તથા तथा, शस्त्रहस्तैः હાથમાં શસ્ત્રધારણ કરેલા हाथमें शस्त्रधारण किये हुए, तस्करैः वा અથવા ચોરોથી अथवा चोरोंसे, शत्रुभिः કે શત્રુઓથી या शत्रुओंसे, तम् તેને उसे, त्रासयेत् ડરાવવો डराना चाहिए, अथवा અથવા अथवा, राजपुरुषाः રાજાના કર્મચારીઓએ राजाके कर्मचारी, सुसंयतम् સારી પેઠે બાંધી अच्छी तरह बाध कर, बहिः नीत्वा બહાર લઈ જઈને बाहिर ले जा कर, नृपाज्ञया રાજાની આજ્ઞાથી राजाकी आज्ञासे, एनम् એને इसे, वधेन तर्जयन्तः વધની ધમકી આપીને वधकी धमकी देते हुए, त्रासयेयुः ડરાવવો डरावे ॥ ८२-८३ ॥

82-83 Thus he may also be terrorised by means of snakes whose fangs have been removed, or by trained lions and elephants or by men dressed as bandits or foemen with weapons in their hands or men impersonating the king's officers may having dragged him out, securely bound, intimidate him with threats of immediate execution by order of the king

देहदुःखभयेभ्यो हि परं प्राणभयं स्मृतम् ।
तेन याति शमं तस्य सर्वतो विप्लुतं मनः ॥८४॥

हि કેમકે क्योंकि, प्राणभयम् પ્રાણભયને प्राणभयको, देहदुःख- દેહદુઃખના देहदुःखके, भयेभ्यः ભય કરતાં भयसे, परम् મોટો महान, स्मृतम् કહ્યો છે कहा है तेन તેથી इससे, तस्य તેનું उसका, सर्वतः બધી રીતે सर्व पकारसे, विप्लुतम् વિભ્રષ્ટ થયેલું विभ्रष्ट हुआ, मनः મન मन, शमम् याति શાન્ત થાય છે शान्त होता है ॥ ८४ ॥

८४. स्मृतम्—महत् (ख ग )

84. It has been well said that the threat to life is more potent than fear of bodily injury; accordingly, that measure may succeed in helping the disordered mind of the insane patient to regain its composure (when all the previous measures have failed).

इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ।
तस्य तत्सदृशप्राप्तिसान्त्वाश्वासैः शमं नयेत् ॥८५॥

इष्टद्रव्य પ્રિય વસ્તુના प्रिय वस्तुके, विनाशात् વિનાશથી विनाशसे यस्य જેનું जिसका मनः મન मन, उपहन्यते ઉપહત થયું હોય उपहत हुआ हो, तस्य તેના મનને उसके मनको तत्सदृश- તેના જેવી વસ્તુની उसके समान वस्तुकी, प्राप्ति- પ્રાપ્તિથી प्राप्तिसे, सान्त्व- સાન્ત્વનથી सान्त्वनसे, आश्वासैः અને આશ્વાસનથી और आश्वासनसे, शमम् नयेत् શાંત કરવું शान्त करे ॥ ८५ ॥

85 The man who has become unhinged in his mind as the result of losing something that he dearly loved should be consoled by the proffer of a substitute and by words of sympathy and comfort.

कामादिजोन्मादचिकित्सा—

कामशोकभयक्रोधहर्षेर्ष्यालोभसंभवान् ।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत् ॥८६॥

काम- કામ काम शोक- શોક शोक, भय- ભય भय, क्रोध- ક્રોધ क्रोध, हर्ष- હર્ષ हर्ष, ईर्ष्या- ઈર્ષ્યા ईर्ष्या, लोभ- અને લોભથી और लोभसे, संभवान् ઉત્પન્ન થયેલા ઉન્માદોને उत्पन्न हुए उन्मादोंको परस्पर- પરસ્પર परस्पर, प्रतिद्वन्द्वैः વિરોધી विरुद्ध, एभिः एव એ જ ભાવોથી इन्हीं भावोंसे, शमम् नयेत् શાંત કરવા शान्त करे ॥ ८६ ॥

८५ प्राप्तिसान्त्वाश्वासैः—प्राप्त्या सान्त्याश्वासैः (ग)

८६. हर्षेर्ष्यालोभ—मोहेर्ष्याशोक (प)

62 He should take the Panchagavya ghee already described, mixed with the expressed juice of brahmi or small-leaved convolvulus or other vitalizing preparations that are promotive of intelligence

सुहृदश्चानुकूलास्तं स्वाप्ता धर्मार्थवादिनः ।
संयोजयेयुर्विज्ञानधैर्यस्मृतिसमाधिभिः ॥ ६३ ॥

अनुकूला અનુકૂળ अनुकूल, सुहृद मित्रोએ मित्र, धर्म- અને ધર્મ और धर्म, अर्थ- तथा અર્થનો तथा अर्थको, वादिन ઉપદેશ કરનાર कहनेवाले स्वाप्ता અત્યંત આપ્ત પુરુષોએ अत्यन्त आप्त पुरुष, तम् તેને उसको, विज्ञान- વિજ્ઞાન विज्ञान, धैर्य- ધૈર્ય धैर्य, स्मृति- સ્મૃતિ स्मृति, समाधिभि: तथा ચિત્તની એકાગ્રતાથી एव चित्तकी एकाग्रतासे, सयोजयेयु. યુક્ત કરવો युक्त करे ॥ ६३ ॥

63 In addition, his friends sympathizers and trusted mentors who can expound to him both his moral and material good, should instill into him understanding, resolution memory and concentration

अपस्मारे रसायनयोगा —

प्रयुञ्ज्यात्तैललशुनं पयसा वा शतावरीम् ।
ब्राह्मीरसं कुष्ठरसं वचां वा मधुसंयुताम् ॥६४॥

तैल- તેલ तैल, लशुनम् तथा લસણનો तथा लहसनका, पयसा અથવા દૂધની સાથે या दूधके साथ, शतावरीम् वा શતાવરીનો शतावरीका, ब्राह्मीरसम् બ્રાહ્મી- રસનો ब्राह्मीरसका, कुष्ठरसम् કઠના રસનો कूठके रसका, मधुसंयुताम् અથવા મધથી યુક્ત या मधुयुक्त, वचाम् वा વજનો वचका, प्रयुञ्ज्यात् પ્રયોગ કરવો प्रयोग करे ॥ ६४ ॥

64 He may also use garlic in conjunction with til oil, climbing asparagus with milk and the juice of brahmi or costus, or sweet flag with honey

दुश्चिकित्स्यो ह्यपस्मारश्चिरकारी कृतास्पदः ।
तस्माद्रसायनैरेनं प्रायशः समुपाचरेत् ॥६५॥

चिरकारी ચિરકાલસ્થાયી चिरकालस्थायी, कृतास्पदः અને ઘર કરી બેઠેલો और जिसने घर कर लिया हो ऐसा, अपस्मार અપસ્માર अपस्मार, दुश्चिकित्स्य. हि दुश्चिकित्સ્યજ છે दुश्चिकित्स्य ही है, तस्मात तेथी इस लिए, एनम् એનો इसका, प्रायश. પ્રાયઃ प्रायः, रसायनैः રસાયનો વડે रसायनोंसे, समुपाचरेत् ઉપચાર કરવો उपचार करे ॥ ६५ ॥

65 The disease of epilepsy if it has become chronic and has obtained a firm footing, is indeed very intractable It should be treated for the most part by means of vitalization therapy

येभ्यः अपस्मारी रक्ष्य —

जलाग्निद्रुमशैलेभ्यो विषमेभ्यश्च तं सदा ।
रक्षेदुन्मादिनं चैव सद्यः प्राणहरा हि ते ॥६६॥

जल- પાણી जल, अग्नि- અગ્નિ अग्नि, द्रुम- વૃક્ષ वृक्ष, शैलेभ्य પર્વતો पर्वत, विषमेभ्यः च અને વિષમ સ્થળોથી और विषम स्थानोंसे, तम् તેની उसकी, उन्मादिनम् च एव અને ઉન્માદના રોગીની और उन्मादके रोगीकी, सदा હમેશાં सदा, रक्षेत् રક્ષા કરવી रक्षा करे, हि કારણકે क्योंकि, ते તે वे, सद्य तुरत तुरंत, प्राणहरा एव પ્રાણ હરનારાં છે प्राणहारक है ॥ ६६ ॥

66 The epileptic, as well as the insane should be specially protected

६३ स्वाप्ता धर्मार्थवादिन —स्वाप्तधर्मार्थवादिन (ध)
,, विज्ञान–विधान (ध फ)
, सुहृदश्चा समाधिभि ।।-हृदयस्यानुकूलाश्च तथा सिद्धार्थवादिन ।
सयोजयेयुर्विज्ञान धैर्यस्मृतिशमाधिभि ॥ (ढ थ द)
६४. प्रयुञ्ज्यात्–प्रयोज्यम् (च)

६५. कृतास्पद.–महागद. (ध)

from water, fire and trees, mountains and irregular surfaces, since these may become the cause of immediate death to such persons.

अध्यायोक्तार्थसंग्रहः—

तत्र श्लोकौ—

हेतुं कुर्वन्त्यपस्मारं दोषाः प्रकुपिता यथा ।
सामान्यतः पृथक्त्वाच्च लिङ्गं तेषां च भेषजम् ॥६७॥
महागदसमुत्थानं लिङ्गं चोवाच सौषधम् ।
मुनिर्व्याससमासाभ्यामपस्मारचिकित्सिते ॥६८॥

तत्र श्लोकौ તે વિષયમાં ઉપસંહારના બે શ્લોકો છે कि उस विषयमें उपसंहारके दो श्लोक हैं कि, हेतुम् હેતુ हेतु, यथा જે રીતે जिस तरह, प्रकुपिता પ્રકુપિત થયેલ प्रकुपित हुए, दोषा દોષો दोष, अपस्मारम् અપસ્મારને अपस्मारको, कुर्वन्ति કરે છે करते है, सामान्यत સામાન્યપણે सामान्यतः, पृथक्त्वात् च અને પૃથક્ પૃથક્ और अलग अलग, तेषाम् તેઓનાં उनके, लिङ्गम् લક્ષણો लक्षण, भेषजम् च ઔષધ औषध, सौषधम् અને ઔષધસહિત और औषधसहित, महागद- મહારોગનાં महारोगके, समुत्थानम् હેતુ हेतु, लिङ्गम् च તથા લક્ષણ એઓને तथा लक्षण इनको, अपस्मार-चिकित्सिते આ 'અપસ્મારચિકિત્સિત' અધ્યાયમાં इस 'अपस्मारचिकित्सित' अध्यायमें, मुनिः ઋષિએ मुनिने, व्यास- વિસ્તાર विस्तार, समासाभ्याम् તથા સંક્ષેપથી तथा संक्षेपसे, उवाच કહ્યાં છે कहा है ॥ ६७-६८ ॥

Here are the two recapitulatory verses—

67 68. The etiological factors, how the morbid humors being provoked produce the causative factors of epilepsy, the general and special symptoms of these morbid humors together with their treatment, the pathogenesis of the Morbidus Magnus, its manifestation and treatment—all this the sage (Punarvasu) has set forth both in outline and in detail, in this chapter on the Therapeutics of Epilepsy

६७. दोषा —देहा (व)

६८ महागद चिकित्सिते ॥—

अतस्त्वाभिनिवेशस्य प्रोवाच वदता वर ।
प्रजाहितार्थं भगवानपस्मारचिकित्सिते ॥ (द)

, मुनिर्व्याससमासाभ्यामपस्मारचिकित्सिते—प्रजाहितार्थं भगवानपस्मारचिकित्सिते (च ध.)

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते चिकित्सास्थानेऽपस्मारचिकित्सितं नाम दशमोऽध्यायः ॥ १० ॥

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, अप्राप्ते અપ્રાપ્ત अप्राप्त दृढबलसंपूरिते અને દૃઢબલે પૂરા કરેલા और दृढबलसे पूरित किये गये, चिकित्सास्थाने ચિકિત્સાસ્થાન વિષે चिकित्सास्थानमें अपस्मारचिकित्सितम् 'અપસ્માર-ચિકિત્સિત' 'अपस्मारचिकित्सित', नाम નામનો नामका, दशम દશમો दसवाँ, अध्यायः અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ १० ॥

10 Thus in the Section on Therapeutics in the treatise compiled by Agnivesa and revised by Caraka, the tenth chapter entitled 'The Therapeutics of Epilepsy' not being available, the same as restored by Dridhabala, is completed

## एकादशोऽध्यायः ।

## અગિયારમો અધ્યાય अध्याय ग्यारहवाँ

## Chapter XI

क्षतक्षीणचिकित्सितोपक्रम —

अथातः क्षतक्षीणचिकित्सितं व्याख्यास्यामः ॥१॥
इति ह स्माह भगवानात्रेयः ॥२॥

अथ अत હવે અહીથી अब आगे, क्षतक्षीणचिकित्सितम् 'क्षतक्षीणचिकित्सित' नामना અધ્યાયનું 'क्षतक्षीणचिकित्सित' नामके अध्यायका, व्याख्यास्याम વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, आत्रेय आत्रेये आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमे निम्न प्रकारसे ही, आह स કહેલુ છે कहा है ॥ २ ॥

1 We shall now expound 'The Therapeutics of Pectoral Lesions and cachexia'

2 Thus declared the worshipful Atreya.

**उदारकीर्तिर्ब्रह्मर्षिरात्रेयः परमार्थवित् ।**
**क्षतक्षीणचिकित्सार्थमिदमाह चिकित्सितम् ॥ ३ ॥**

उदारकीर्तिः ઉદાર કીર્તિવાળા उदारकीर्तिवाले, परमार्थवित् તત્વજ્ઞાની तत्त्वज्ञानी, ब्रह्मर्षि બ્રહ્મર્ષિ ब्रह्मर्षि, आत्रेयः આત્રેયે आत्रेयने, क्षतक्षीण- ક્ષતક્ષીણની क्षतक्षीणकी, चिकित्सा अर्थम् ચિકિત્સાને માટે चिकित्साके लिए, इदम् આ यह, चिकित्सितम् ચિકિત્સા-અધ્યાય चिकित्सा-अध्याय आह કહ્યો છે कहा है ॥ ३ ॥

3. Atreya, the brahmic sage of great fame and knower of the supreme truth, declared this chapter on therapeutics for the treatment of pectoral lesions and cachexia

क्षतक्षीणस्य निदानम्—

**धनुषाऽऽयस्यतोऽत्यर्थं भारमुद्वहतो गुरुम् ।**
**पततो विषमोच्चेभ्यो बलिभिः सह युध्यतः ॥ ४ ॥**
**वृषं हयं वा धावन्तं दम्यं वाऽन्यं निगृह्णतः ।**
**शिलाकाष्ठाश्मनिर्घातान् क्षिपतो निघ्नतः परान् ॥ ५ ॥**
**अधीयानस्य वाऽत्युच्चैर्दूरं वा व्रजतो द्रुतम् ।**
**महानदीं वा तरतो हयैर्वा सह धावतः ॥ ६ ॥**
**सहसोत्पततो दूरं तूर्णं चातिप्रनृत्यतः ।**
**तथाऽन्यैः कर्मभिः क्रूरैर्भृशमभ्याहतस्य च ॥ ७ ॥**
**विक्षते वक्षसि व्याधिर्बलवान् समुदीर्यते ।**
**स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः ॥ ८ ॥**

धनुषा ધનુષથી धनुषसे, अत्यर्थम् બહુ अत्यन्त, आयस्यत આયાસ કરતા आयास करते हुए गुरुम् ભારે भारी, भारम् બોજો बोझ, उद्वहत ઉપાડતા उठाते हुए, विषम- વિષમ विषम, उच्चेभ्य તથા ઉચ્ચ સ્થાનેથી एवं ऊंचे स्थानोंसे, पतत. પડતા गिरते हुए, बलिभि બળવાનોની बलवानोंके, सह સાથે साथ, युद्ध કરતા लड़ते हुए, धावन्तम् દોડતા दौड़ते हुए, वृषम् બળદ बैल, हयम् ઘોડા घोड़ा अन्यम् અથવા બીજા કોઈ या अन्य, दम्यम् वा દમન કરવા યોગ્ય પ્રાણીને रोकने योग्य प्राणीको, निगृह्णत પકડતા रोकते हुए, शिला- શિલા शिला, काष्ठ- લાકડી लकड़ी, अश्म- પથ્થર पत्थर, निर्घातान् તથા ગદા વગેરેને और गदा आदिको, क्षिपत ફેંકતા फेंकते हुए, परान् શત્રુઓને शत्रुओंको, निघ्नत. મારતા मारते हुए, अत्युच्चै અત્યન્ત ઊંચે સ્વરે अत्यन्त उच्च स्वरसे, अधीयानस्य અધ્યયન કરતા पढते हुए, दूरम् वा અથવા દૂર સુધી या दूर तक, द्रुतम् શીઘ્ર शीघ्रतासे, व्रजतः ચાલતા चलते हुए, महानदीम् वा અથવા મોટીનદીને या बड़ी नदीको, तरत તરતા पार करते हुए, हयै. અથવા ઘોડાઓની या घोड़ोंके, सह સાથે साथ धावत वा દોડતા दौड़ते हुए, सहसा એકદમ सहसा, दूरम् દૂર સુધી दूर तक, उत्पतत. કૂદતા कूदते हुए, तूर्णम् च શીઘ્રતાથી तेजीसे, अतिप्रनृत्यत. અત્યન્ત નૃત્ય કરતા अत्यन्त नृत्य करते हुए, तथा તથા तथा अन्यै બીજા अन्य, क्रूरै ક્રૂર क्रूर, कर्मभि કર્મોથી कर्मोंसे, भृशम् અતિ अति, अभ्याहतस्य च આઘાત પામેલા आहत हुए, स्त्रीषु સ્ત્રીઓમાં स्त्रियोंमें, अतिप्रसक्तस्य च બહુ આસક્ત बहुत आसक्त, रूक्ष- અને રૂક્ષ और रूक्ष, अल्प- અલ્પ अल्प, प्रमित- તેમજ માત્રાથી અતિ અલ્પ एवं मात्रासे

४. धनुषाऽऽयस्यतः—धनुराकृष्यत (ग.)
,, बलिभिः सह युध्यतः—युध्यमानस्य चाधिकै (क ख. त)
५. वाऽन्य—चान्य (ढ.)
६. हयैर्वा—गजैर्वा (ख )
७. दूर—अत्यर्थ (च ध,)

अल्प, अशिन ખાનારની खानेवालेकी, वक्षसि છાતી छातीमें, विक्षते क्षतयुक्त थतां भाव होने पर, बलवान् બળવાન बलवान, व्याधि રોગ रोग, समुदीर्यते ઉત્પન્ન થાય છે उत्पन्न होता है ॥ ४-८॥

4-8 One who strains excessively with the bow, lifts heavy loads, falls from uneven heights and up the steep gradients, fights with stronger men, tries to restrain a young run-away bull, horse or other animal requiring control, or in assaults with foemen heaves boulders or wields clubs or powerful slings; or one who is given to reciting at the top of his voice, or runs a long course at top speed or swims across great rivers, or runs along keeping pace with swift horses, or performs violent feats of high or long jumping, or dances overmuch and at a rapid pace, or one who is injured by similar violent activities, or is addicted to excessive indulgence in women or is habituated to dry, meagre and poor diet—in such a person, the ulcerative lesions having occurred in the chest, this severe disease supervenes.

क्षतक्षीणस्य लक्षणम्—

उरो विरुज्यते तस्य भिद्यतेऽथ विभज्यते ।
प्रपीड्येते ततः पार्श्वे शुष्यत्यङ्गं प्रवेपते ॥९॥
क्रमाद्वीर्यं बलं वर्णो रुचिरग्निश्च हीयते ।
ज्वरो व्यथा मनोदैन्यं विड्भेदोऽग्निवधादपि ॥१०॥

९ विरुज्यते–निरुज्यते (ख.)
,, तस्य–ऽत्यर्थम् (क)
,, विभज्यते–विदह्यते (ख घ त.)
१०. अग्निवधादपि–अग्निवधस्तथा (प. च. फ)

दुष्टः श्यावः सुदुर्गन्धः पीतो विग्रथितो बहुः ।
कासमानस्य च श्लेष्मा सरक्तः संप्रवर्तते ॥११॥
स क्षतः क्षीयतेऽत्यर्थं तथा शुक्रौजसोः क्षयात् ।

तस्य તેની उसकी, उर. છાતી छाती, विरुज्यते પીડાય છે पीडाको प्राप्त होती है, भिद्यते ભેદાઈ જાય છે फटती है, अथ તથા और, विभज्यते ચીરાઈ જાય છે टूटती है, ततः પછી उसके पश्चात्, पार्श्वे બન્ને પડખાં दोनों पार्श्वमें, प्रपीड्येते પીડાય છે पीडा होती है, अङ्गम् અંગ शरीर, शुष्यति સૂકાય છે सूखता है, प्रवेपते તથા કંપે છે तथा कांपता है, क्रमात् ક્રમથી क्रमश, वीर्यम् વીર્ય वीर्य, बलम् બલ बल, वर्णः વર્ણ वर्ण, रुचिः રુચિ रुचि, अग्निः च અને અગ્નિ और अग्नि हीयते ક્ષીણ થાય છે क्षीण होती है, ज्वरः જ્વર ज्वर, व्यथा વ્યથા व्यथा, मनोदैन्यम् મનની દીનતા मनकी दीनता, अग्निवधात् અગ્નિનાશથી अग्निमान्द्यसे, विड्भेद अपि મળભેદ થાય છે मलभेद होता है, कासमानस्य च ઉધરસ ખાતાં खासते हुए रोगीको, दुष्टः दूषित दूषित, श्याव શ્યાવ રંગનો श्याव, सुदुर्गन्ध. બહુ દુર્ગન્ધવાળો बहुत दुर्गन्धसे युक्त, पीत પીળો पीला, विग्रथित ગંઠાયેલો ग्रन्थि-युक्त, बहु. ઘણો बहुत, सरक्तः અને રક્તમિશ્ર और रक्तसे युक्त, श्लेष्मा કફ कफ, संप्रवर्तते નીકળે છે निकलता है, तथा તે પ્રમાણે उस प्रकारसे, स તે પુરુષ वह पुरुष, क्षत. ક્ષતવાળો હોવાથી क्षतवाला होनेसे, शुक्र- તેમજ શુક્ર एवं शुक्र, ओजसो અને ઓજનો और ओजका, क्षयात् ક્ષય થવાથી क्षय होनेसे, अत्यर्थम् અતિ अत्यन्त, क्षीयते ક્ષીણ થઈ જાય છે क्षीण होता है ॥ ९-११½ ॥

9-11½. He suffers from acute pain in his chest and ulcerative lesions form and spread in the lungs The side of the chest is compressed, atrophied and sunken and the pulsating movement is seen there (marked cardiac gustation). Thereafter gradually

११ च श्लेष्मा सरक्त संप्रवर्तते–चाभीक्ष्णं कफः सास्र प्रवर्तते (क प च छ द. थ.)
,, ,, –चात्यर्थं श्लेष्मा सास्र. प्रवर्तते (घ)

vitality, strength, complexion, appetite and digestive power become diminished and also as a consequence of the loss of gastric fire there occur fever, pain, neurasthenia and looseness of stools The patient suffering from cough expectorates sputum which is purulent, dark, offensive of smell, yellow, nummular, copious and tinged with blood Thus the patient with pectoral lesions becomes excessively emaciated; and so does the man who suffers undue loss of semen and vital essence.

क्षतक्षीणस्य पूर्वरूपम्—

**अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतम् ॥१२॥**

अव्यक्तम् थोडुं व्यक्त अल्प व्यक्त, लक्षणम् लक्षण ए लक्षण यह, तस्य तेनुं उसका, पूर्वरूपम् पूर्वरूप छे पूर्वरूप है, इति एम ऐसा, स्मृतम् मानेल छे माना गया है ॥ १२ ॥

12. The indistinct signs are said to be the premonitory symptoms.

विशेषलक्षणम्—

**उरोरुक्शोणितच्छर्दिः कासो वैशेषिकः क्षते ।**
**क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटिग्रहः ॥१३॥**

क्षते क्षतमां क्षतमें, उरोरुक् छातीमां पीडा छातीमें पीड़ा, शोणितच्छर्दि लोहीनी उलटी रक्तकी कै, वैशेषिकः कासः अने विशिष्ट प्रकारनी उधरस ए लक्षणो थाय छे और विशिष्ट प्रकारकी खासी ये लक्षण होते है, क्षीणे अने क्षीण पुरुषमां और क्षीण पुरुषमे, सरक्त- रक्तयुक्त रक्तयुक्त मूत्रत्वम् मूत्र थवुं मूत्रका आना, पार्श्व- पडखां पार्श्व, पृष्ठ- वांसो पीठ, कटि- अने कमरनुं और कमरका, ग्रह. पकडावुं ए लक्षणो थाय छे जकड़ा जाना ये लक्षण होते हैं ॥ १२ ॥

13 Pain in the chest, hemoptysis and especially cough appear in pectoral ulcerative lesions In cachexia there will be hematuria and rigidity of the side of the chest, back and waist

क्षतक्षीणस्य साध्यासाध्यविचार —

**अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः ।**
**परिसंवत्सरो याप्यः सर्वलिङ्गं तु वर्जयेत् ॥१४॥**

अल्पलिङ्गस्य थोडां लक्षणवाळा अल्प लक्षणयुक्त, दीप्त- प्रदीप्त प्रदीप्त अग्ने अग्निवाळा अग्निवाले, बलवत अने बळवान रोगीनो और बलवान रोगीका, नव नवो रोग नया रोग, साध्यः साध्य छे साध्य है, परिसंवत्सर एक वर्ष वीती जतां रोग एक वर्ष बीत जाने पर रोग, याप्यः याप्य थाय छे याप्य होता है, सर्वलिङ्गम् अने सघळां लक्षणवाळा रोगने सब लक्षणसे युक्त रोगको, तु तो तो, वर्जयेत् असाध्य समजी तजी देवो असाध्य जान कर छोड़ देना चाहिए ॥ १४ ॥

14. The disease which manifests a few symptoms, which is of recent origin and occurs in a person who is strong and whose gastric fire is powerful, is curable. If the disease has been existing for more than a year it is palliable and if it is accompanied with all the symptoms it is irremediable.

उरःक्षते लाक्षादियोगाः —

**उरो मत्वा क्षतं लाक्षां पयसा मधुसंयुताम् ।**
**सद्य एव पिबेज्जीर्णे पयसाऽद्यात् सशर्करम् ॥१५॥**

उर छातीमां छातीमें, क्षतम् क्षत थयुं छे एम क्षत हुआ, मत्वा समज्या पछी जानकर, मधु- मधथी मधुसे, संयुताम् मिश्रित मिली हुई, लाक्षाम् लाख लाख, पयसा दूधनी साथे दूधके साथ, सद्यः तरत तुरत, एव ज ही, पिबेत् पीवी पीये, जीर्णे ते पची गया पछी उसके जीर्ण होने पर, पयसा दूध साथे दूधके साथ, सशर्करम् साकरसहित चीनीसे मिश्रित, अद्यात् अन्ननुं भोजन करवुं अन्न खावे ॥ १५ ॥

१४. परिमवत्सरो याप्य —गते सवत्सरे याप्यः (ख.)

15 Once a diagnosis of ulcerative lesions in the chest has been made the patient should be immediately made to drink a draught prepared of lac mixed with milk and honey Immediately after this dose is digested, he may take his meal mixed with milk and sugar.

पार्श्वबस्तिरुजी चाल्पपित्ताग्निस्तां सुरायुताम् ।
भिन्नविट्कः समुस्तातिविषापाठां सवत्सकाम् ॥१६॥
लाक्षां सर्पिर्मधूच्छिष्टं जीवनीयगणं सिताम् ।
त्वक्क्षीरीं समितां क्षीरे पक्त्वा दीप्तानल· पिबेत् १७

पार्श्व- પડખાં पार्श्व बस्ति- તથા બસ્તિમાં तथा बस्तिमें, रुजी પીડાવાળા रुजायुक्त, अल्प- અને અલ્પ और अल्प, पित्त પિત્ત पित्त, अग्नि च તથા અગ્નિ- વાળા રોગીએ तथा अग्निवाला रोगी, ताम् તે લાખ उस लाक्षाको, सुरायुताम् સુરાથી યુક્ત सुरासे मिलाकर, पिबेत् પીવી पीवे, भिन्नविट्क મળભેદવાળાએ मलभेद- वाला, समुस्त- મુસ્ત मुस्त, अतिविषा- અતિવખની કળી अतीस, पाठाम् અને પાઠાસહિત और पाढीके साथ, सवत्सकाम् તેમજ ઇન્દ્રજવસહિત પીવી एव इन्द्रजौके सहित पीवे, दीप्तानल અને પ્રદીપ્ત અગ્નિ- વાળાએ और प्रदीप्त अग्निवाला, लाक्षाम् લાખ लाक्षा, सर्पिः ઘી घी, मधूच्छिष्टम् મીણ मोम, जीवनीयगणम् જીવનીયગણ जीवनीयगण, सिताम् સાકર चीनी, त्वक्क्षीरीम् વાંસકપૂર वंशलोचन, समिताम् અને ઘઉંનો લોટ એઓને और गेहूंका आटा इनको, क्षीरे દૂધમાં दूधमें, पक्त्वा પકાવીને पकाकर पिबेत् પીવાં पीवे ॥ १६-१७ ॥

16 17. If the patient has pain in the side or the hypogastric region or the pitta and the gastric fire are feeble this dose should be given with sura wine and if he suffers from loose stools then the draught of lac should be given mixed with nut-grass, atees, patha and kurchi seeds. If the gastric fire of the patient is strong he should take this dose of lac mixed with ghee, bees' wax, the drugs of the life-promoter group, sugar, bamboo manna and wheat-flour prepared in milk

इक्ष्वालिकादि क्षीरम्—

इक्ष्वालिकाबिसग्रन्थिपद्मकेशरचन्दनैः ।
शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षती ॥१८॥

क्षती ઉરક્ષતના રોગીએ क्षती, इक्ष्वालिका- એખરો तालमखाना, बिस- કમળના તંતુ कमलदण्डके तंतु, ग्रन्थि- પીપરીમૂળના ગંઠોડા पिप्पलीमूल, पद्म- केशर- કમળકેસર कमलकेसर, चन्दनै તથા ચન્દનથી तथा चन्दनसे, शृतम् ઉકાળેલું उबाला हुवा मधुयुतम् અને ઠંડુ થયા પછી મધ મેળવેલુ और शीतल होने पर मधु मिलाया हुआ, पय. દૂધ दूध, सन्धान- अर्थम् ક્ષતના સન્ધાન માટે क्षतके सन्धानके लिए, पिबेत પીવુ पीवे ॥ १८ ॥

18 The patient with pectoral lesi ons may take milk, prepared with sugar-cane, lotus rhyzomes, lotus anthers and red sandalwood and mixed with honey for the healing of these lesions.

यवानां चूर्णमादाय क्षीरसिद्धं घृतप्लुतम् ।
ज्वरे दाहे सिताक्षौद्रसक्तून् वा पयसा पिबेत् ॥१९॥

ज्वरे જ્વરમાં ज्वर, दाहे તથા દાહમાં और दाहमें, घृतप्लुतम् ઘી મેળવેલ घी मिलाया हुआ, यवानाम् જવનો जौका, चूर्णम् લોટ आटा, आदाय લઈને लेकर, क्षीरसिद्धम् દૂધમાં પકાવી दूधमें पकाकर, पिबेत् પીવો पीवे, सिता- અથવા સાકર या चीनी, क्षौद्र- તથા મધથી

१६. पार्श्वबस्तिरुजी–पार्श्वबस्तिरुज (च. फ)

१७. समिता–समित (च. फ.)

१९. चूर्णमादाय–चूर्णमामाना (च फ·

युक्त तथा मधुयुक्त, सक्तून् वा साथवो सक्तुको, पयसा दूधनी साथे दूधके साथ, (पिबेत् पीवो पीवे) ॥ १९ ॥

19 If the patient suffers from fever and burning, he may be given barley powder prepared with milk and mixed with ghee or he may take the fried barley powder with sugar, honey and milk.

मधूकादियोग —

मधूकमधुकद्राक्षात्वक्क्षीरीपिप्पलीबलाः ।
कासी पार्श्वास्थिशूली च लिह्यात्सघृतमाक्षिकाः २०॥

कासी ઉધરસવાળા खासीवाला, पार्श्वास्थि- तथा પાસળીના तथा पसलियोंमें, शूली શૂળવાળા રોગીએ शूलवाला रोगी, सघृत- घी घी, माक्षिका तथा મધ- सहित और मधुसहित, मधूक- મહુડાનાં ફૂલ महुवेके फूल, मधुक- જેઠીમધ मुलहठी, द्राक्षा- દ્રાક્ષ मुनक्का, त्वक्क्षीरी- વાંસકપૂર वशलोचन, पिप्पली- પીપર पिप्पली, बला અને બલા और बलाको, लिह्यात् ચાટવાં चाटे ॥ २० ॥

20. If the patient suffers from cough and pains in the side of the chest or in the bones, he may lick the powder prepared of mahwa flowers, liquorice, grapes, bamboo manna, long pepper and sida mixed with ghee and honey

एलादिगुटिका—

एलापत्रत्वचोऽर्धाक्षाः पिप्पल्यर्धपलं तथा ।
सितामधुकखर्जूरमृद्वीकाश्च पलोन्मिताः ॥२१॥
संचूर्ण्य मधुना युक्ता गुटिकाः संप्रकल्पयेत् ।
अक्षमात्रां ततश्चैकां भक्षयेन्ना दिने दिने ॥२२॥
कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्च्छां मदं भ्रमम् ।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥२३॥
शोषप्लीहाढ्यवातांश्च स्वरभेदं क्षतं क्षयम् ।
गुटिका तर्पणी वृष्या रक्तपित्तं च नाशयेत् ॥२४॥

इत्येलादिगुटिका ।

एला- એલચી इलायची पत्र- તેજપત્ર तेजपत्र, त्वच- तथा તજ तथा दालचीनी, अर्धाक्षा દરેક અધી તોલો प्रत्येक आधा कर्ष, तथा पिप्पली પીપર पिप्पली, अर्धपलम् અધી પલ आधा पल, सिता- સાકર चीनी, मधुक- જેઠીમધ मुलहठी, खर्जूर- ખજૂર खजूर मृद्वीका- च तथा દ્રાક્ષ तथा मुनक्का पलोन्मिता દરેક ४ તોલા प्रत्येक एक पल, संचूर्ण्य ખાંડીને पीसकर, मधुना મધથી मधुसे, युक्ता મેળવી मिलाकर, अक्षमात्राम् એક એક તોલાની एक एक कर्षकी, गुटिका ગોળીઓ गुटिकायें, संप्रकल्पयेत् બનાવવી बनावे, ततः च અને તેમાંથી और उनमेंसे ना પુરુષે पुरुष, एकाम् એક ગોળી एक गुटिका, दिने दिने દરરોજ प्रतिदिन भक्षयेत् ખાવી खावे, गुटिका આ ગોળી यह गुटिका, कासम् ઉધરસ कास, श्वासम् શ્વાસ श्वास, ज्वरम् જ્વર ज्वर, हिक्काम् હેડકી हिचकी, छर्दिम् ઉલટી कै, मूर्च्छाम् મૂર્ચ્છા मूर्च्छा, मदम् મદ मद, भ्रमम् ભ્રમ भ्रम, रक्तनिष्ठीवनम् રક્ત થૂંકવુ रक्त थूकना, तृष्णाम् તૃષા प्यास, पार्श्वशूलम् પાર્શ્વશૂલ पार्श्वशूल, अरोचकम् અરોચક अरोचक, शोष- શોષ शोष, प्लीह- પ્લીહા प्लीहा, आढ्यवातान् च આઢ્યવાત आन्ध्यवात, स्वरभेदम् સ્વરભેદ स्वरभेद, क्षतम् ઉરઃક્ષત उरःक्षत, क्षयम् ક્ષય क्षय, रक्तपित्तम् च અને રક્તપિત્તને और रक्तपित्तको, नाशयेत् નાશ કરે છે नष्ट करती है, तर्पणी વળી તે તર્પણ કરનારી पुनः वह तर्पण करनेवाली, वृष्या तथा વૃષ્ય तथा वृष्य है ॥ २१-२४ ॥ इति આ यह, एलादिगुटिका એલાદિગુટિકા છે एलादिगुटिका है।

21-24 Take ½ tola each of small cardamom, cinnamon leaf and cinnamon, 2 tolas of long pepper and 4 tolas each of sugar, liquorice, dates and grapes. Pulverise them and mixing the whole with honey, make it into

२०. पार्श्वास्थि—पर्शास्थि (क ख. ध. छ ड. त द. प)
२२ गुटिका —गुलिका (थ)
२४. गुटिका–गुलिका (थ)
,, तर्पणी–वृंहणी (फ)

pills. The person may take these pills daily in a dose of one tola This pill will cure cough, dyspnea, fever, hiccup, vomiting, fainting, intoxication giddiness, hemoptysis, thirst pleurodynia, anorexia, consumption, splenic disorders, rheumatic condition, alteration of voice, pectoral lesions, cachexia and hemothermia This pill is also highy nourishing and aphrodisiac Thus has been described the compound cardamom pill

रक्तातिप्रवृत्तौ कतिपययोगाः—

रक्तेऽतिवृत्ते दक्षाण्डं यूषैस्तोयेन वा पिबेत् ।
चटकाण्डरसं वाऽपि रक्तं वा छागजाङ्गलम् ॥२५॥

रक्ते રક્તની रक्तकी, अतिवृत्ते અતિશય પ્રવૃત્તિ થતાં अति प्रवृत्ति होने पर, यूषैः યૂષથી यूषोंसे, तोयेन वा અથવા પાણીથી या जलसे, दक्षाण्डम् કૂકડાનું ઈંડું मुर्गीका अडा, चटकाण्डरसम् अपि वा અથવા ચકલાના ઇંડાંનો રસ या चिड़ीके अंडेका रस, छाग- અથવા બકરાનું अथवा बकरेका, जाङ्गलम् કે જંગલ પશુઆદિનું या जांगल पशुआदिका, रक्तम् वा રક્ત रक्त, पिबेत् પીવું पीवे ॥ २५॥

25 If there is profuse bleeding, the patient may take a potion of the hen's egg mixed with gruel or water or he may take the contents of the sparrow's egg or the blood of the goat or a jangala animal.

चूर्णं पौनर्नवं रक्तशालितण्डुलशर्करम् ।
रक्तष्ठीवी पिबेत् सिद्धं द्राक्षारसपयोघृतैः ॥२६॥
मधूकमधुकक्षीरसिद्धं वा तण्डुलीयकम् ।

रक्तष्ठीवी રક્ત થૂંકનારા રોગીએ रक्त थूकनेवाला रोगी, रक्तशालि- રાતી શાળના लाल शालिके, तण्डुल- ચોખા तण्डुल, शर्करम् અને સાકર और चीनी, द्राक्षारस- દ્રાક્ષના રસ मुनक्केका रस, पयः- દૂધ दूध, घृतैः અને ઘૃતથી और घृतसे, सिद्धम् સિદ્ધ કરેલું सिद्ध किया हुआ, पौनर्नवम् સાટોડીનું पुनर्नवाका, चूर्णम् ચૂર્ણ चूर्ण, मधूक- અથવા મહુડાનાં ફૂલ या महुवेके फूल, मधुक- જેઠીમધ मुलहठी, क्षीर- અને દૂધથી और दूधसे, सिद्धम् પકાવેલ सिद्ध, तण्डुलीयकम् वा તાંદળજો चौलाई, पिबेत् પીવો पीवे ॥ २६½ ॥

26-26½. The person spitting blood may take the powder of hogweed, red salt-rice and sugar prepared with grape-juice milk and ghee. Or he may take the amaranth vegetable prepared with mahwa flowers, liquorice and milk.

मूढवाते योग —

मूढवातस्त्वजामेदः सुराभृष्टं ससैन्धवम् ॥२७॥

मूढवातः મૂઢવાતવાળાએ मूढवातवाला रोगी, तु તો तो, ससैन्धवम् સિંધાલૂણથી મિશ્રિત सैंधानमकसे मिश्रित, सुराभृष्टम् અને સુરામાં છમકારેલ और सुरामें छोंकी हुई, अजामेदः બકરીનો મેદ बकरेकी चर्बी, अद्यात् ખાવો खावे ॥ २७ ॥

27. If the patient is afflicted with claudication of vata, he may take goat's fat fried in sura wine with a little of rock-salt.

क्षतक्षीणे कतिपययोगाः—

क्षामः क्षीणः क्षतोरस्कस्त्वनिद्रः सबलेऽनिले ।
शृतक्षीरसरेणाद्यात् सक्षौद्रघृतशर्करम् ॥२८॥

क्षाम કૃશ कृश, क्षीण તથા ક્ષીણ तथा क्षीण, क्षतोरस्क ઉરઃક્ષતના રોગીએ उरःक्षती, तु તો तो,

२६½. क्षीरसिद्ध—द्राक्षासिद्ध (प)

२८. सबलेऽनिले—मबलेऽनले (घ. च.)
,, ,, —प्रबलेऽनले (थ.)
, शृत—घृत (थ.)
, सरेण—रसेन (ख. थ)

अनिले વાયુ वातके, सबले પ્રબળ હોવાથી प्रबल होनेसे, अनिद्रः નિદ્રા આવતી ન હોય તો निद्रा न आती हो तो, शृत- ઉકાળેલા क्वथित, क्षीर- દૂધની दूधकी, सरेण મલાઈ સાથે मलाईके साथ, सक्षौद्र- મધ मधु, घृत- ઘી घी, शर्करम् અને સાકરસહિત और चीनीसहित, अजात् બકરીનો મેદ ખાવો बकरेकी चर्बी खावे ॥२८॥

28. If the patient with pectoral lesions is very weak and cachetic and is suffering from insomnia and if his vata morbidity is strong, he may take goat's fat with the top layer of cream of boiled milk with honey, ghee and sugar.

शर्करां यवगोधूमौ जीवकर्षभकौ मधु ।
शृतक्षीरानुपानं वा लिह्यात् क्षीणः क्षती कृशः ॥२९॥

क्षीण ક્ષીણ क्षीण, कृशः તથા દૂબળા तथा कृश, क्षती ઉરઃક્ષતના રોગીએ उरःक्षती, शर्कराम् સાકર चीनी, यव- જવ जौ, गोधूमौ ઘઉં गेहूं, जीवक- જીવક जीवक, ऋषभकौ ઋષભક ऋषभक, मधु અને મધ और मधु, शृत- ઉકાળેલા शृत, क्षीर- દૂધના दूधके, अनुपानम् અનુપાનથી अनुपानसे, लिह्यात् ચાટવાં चाटे ॥ २९ ॥

29 Or the emaciated and cachectic pthisical patient may lick sugar, powder of baked barley, wheat. jivaka rishabhaka and honey, followed by a drink of boiled milk.

क्रव्यादमांसनिर्यूहं घृतभृष्टं पिबेच्च सः ।
पिप्पलीक्षौद्रसंयुक्तं मांसशोणितवर्धनम् ॥३०॥

स. તે वह, मांस- માંસ मांस, शोणित- તથા રક્તની और रक्तको, वर्धनम् વૃદ્ધિ કરનાર बढानेवाले, क्रव्याद- માંસ ભક્ષણ કરનારાં પ્રાણીઓનો मांसाहारी जीवोंके, मांसनिर्यूहम् च માંસરસ मांसरसको, घृत- भृष्टम् ઘીમાં છમકારી કરી થયા પછી घृतमें छौंक कर शीतल होनेके पश्चात्, पिप्पली- તેમાં પીપર उसमें पिप्पली, क्षौद्र- તથા મધ तथा मधु, संयुक्तम् નાખી डालकर, पिबेत् પીવો पीवे ॥ ३० ॥

30. The patient may drink the soup of the flesh of carnivorous animals, seasoned with ghee and mixed with long pepper and honey. This is a great promoter of flesh and blood

न्यग्रोधोदुम्बराश्वत्थप्लक्षशालप्रियङ्गुभिः ।
तालमस्तकजम्ब्वूत्वक्प्रियालैश्च सपद्मकैः ॥३१॥
साश्वकर्णैः शृतात् क्षीरादद्याज्जातेन सर्पिषा ।
शाल्योदनं क्षतोरस्कः क्षीणशुक्रश्च मानवः ॥३२॥

क्षतोरस्क ઉરક્ષતવાળા उरःक्षती, क्षीणशुक्रः च અને ક્ષીણવીર્યવાળા और क्षीणवीर्यवाला, मानवः મનુષ્યે मनुष्य, सपद्मकैः પદ્મક पद्माख, साश्वकर्णै તેમજ શાલની સાથે एवं साखुके साथ, न्यग्रोध- વડ बरगद, उदुम्बर- ઊંબરો गूलर, अश्वत्थ- પીંપળો पीपल, प्लक्ष- પીપળ पिलखन, शाल- શાલ शाल, प्रियङ्गुभि ઘઉંલા प्रियङ्गु, तालमस्तक- તાડની ટોચના ભાગ ताल- मस्तक, जम्बूत्वक्- જાંબુની છાલ जामुनकी छाल, प्रियालैः અને ચારોળીથી और चिरौंजीसे, शृतात् ઉકાળેલા शृत, क्षीरात् દૂધમાંથી दूधमेंसे, जातेन ઉત્પન્ન થયેલા उत्पन्न, सर्पिषा ઘૃતથી घीसे, शाल्योदनम् શાળના ચોખાનો ભાત शालि चावलका ओदन, अद्यात् ખાવો खावे ॥ ३१-३२ ॥

31-32. The patients suffering from pectoral lesions and paucity of semen should be given cooked sali rice with ghee prepared from the milk decocted with banyan fig, gular fig, holy fig, yellow-barked fig, indian sal, perfumed cherry, the tuft of the palm, the bark of the jambul, buchanan's mango, himalayan cherry and the asvakarna sal.

२९ शर्करा-शर्करा (ब)

३१. न्यग्रोध–मधुर (प)
,, प्रियालैः –पियालैः (ग)

यष्ट्याह्वादिघृतम्—

**यष्ट्याह्वनागबलयोः क्वाथे क्षीरसमं घृतम् ।**
**पयस्यापिप्पलीवांशीकल्कसिद्धं क्षते शुभम् ॥३३॥**

यष्ट्याह्व- જેઠીમધ मुलहठी, नागबलयो तथा ગગેટીના और गंगेरनके, क्वाथे ક્વાથમાં क्वाथमें, पयस्या- ક્ષીરકંદ बिलाईकन्द, पिप्पली- પીપર पिप्पली, वांशी- અને વાંસકપૂરના और वंशलोचनके, कल्क- કલ્કથી कल्कसे, सिद्धम् સિદ્ધ કરેલ सिद्ध, क्षीरसमम् तथा સમભાગ દૂધવાળું तथा समानभाग दूधवाला घृतम् ઘી घी, क्षते ઉરક્ષતમાં उरःक्षतमें, शुभम् સારું છે हितकर है ॥३३॥

33. The medicated ghee prepared in the decoction of liquorice and gingo fruit, and an equal quantity of milk with the paste of milky yam, long pepper and bamboo manna, is beneficial in pectoral lesions

कोलादिघृतम् -

**कोललाक्षारसे तद्वत् क्षीराष्टगुणसाधितम् ।**
**कल्कैः कटुङ्गदार्वीत्वग्वत्सकत्वक्फलैर्घृतम् ॥३४॥**

तद्वत् તે જ પ્રમાણે उसी प्रकार, कोल- બોરના बेरके, लाक्षा- અને લાખના और लाक्षाके, रसे ક્વાથમાં क्वाथमें, कटुङ्ग- અરલુની છાલ अरलुकी छाल, दार्वी- દારૂહળદરની दार्वीकी, त्वक्- છાલ छाल, वत्सक- કડાની कुडेकी त्वक्- છાલ छाल, फलै અને ફળના और फलके, कल्कैः કલ્કથી कल्कसे, क्षीर-अष्टगुण- ઘીથી આઠગણા દૂધમાં घीसे आठगुने दूधमें, साधितम् સિદ્ધ કરેલું सिद्ध किया हुआ, घृतम् ઘૃત શુભ છે घी शुभ है ॥ ३४ ॥

34. Similarly the medicated ghee prepared in the solution of jujube and lac, and milk eight times the quantity of ghee, together with the paste of the barks of indian calosanthes, indian berberry and kurchi and kurchi seeds is beneficial in pectoral lesions

उर क्षते अमृतप्राशघृतम्—

**जीवकर्षभकौ वीरां जीवन्तीं नागरं शटीम् ।**
**चतस्रः पर्णिनीर्मेदे काकोल्यौ द्वे निदिग्धिके ॥३५॥**

**पुनर्नवे द्वे मधुकमात्मगुप्तां शतावरीम् ।**
**ऋद्धिं परूषकं भार्गीं मृद्वीकां बृहतीं तथा ॥३६॥**

**शृङ्गाटकं तामलकीं पयस्यां पिप्पलीं बलाम् ।**
**बदराक्षोटखर्जूरवातामाभिषुकाण्यपि ॥३७॥**

**फलानि चैवमादीनि कल्कान् कुर्वीत कार्षिकान् ।**
**धात्रीरसविदारीक्षुच्छागमांसरसं पयः ॥३८॥**

**कुर्यात् प्रस्थोन्मितं तेन घृतप्रस्थं विपाचयेत् ।**
**प्रस्थार्धे मधुनः शीते शर्करार्धतुलां तथा ॥३९॥**

**द्विकार्षिकाणि पत्रैलाहेमत्वङ्मरिचानि च ।**
**विनीय चूर्णितं तस्माल्लिह्यान्मात्रां सदा नरः ॥४०॥**

**अमृतप्राशमित्येतन्नराणाममृतं घृतम् ।**
**सुधामृतरसं प्राश्य क्षीरमांसरसाशिना ॥४१॥**

जीवक- જીવક जीवक, ऋषभकौ ઋષભક ऋषभक, वीराम् શતાવરી शतावर जीवन्तीम् ડેડી जीवन्ती, नागरम् સૂંઠ सोंठ, शटीम् ષટ્કચૂરો कचूर, चतस्रः पर्णिनी શાલપર્ણી- પૃશ્નિપર્ણી- મુદ્ગપર્ણી- માષપર્ણી शालपर्णी- पृश्नपर्णी- मुद्गपर्णी- माषपर्णी, द्वे मेदे મેદા, મહામેદા मेदा, महामेदा काकोल्यौ કાકોલી ક્ષીરકાકોલી काकोली, क्षीरकाकोली, निदिग्धिके ઊભી ભોરીંગણી, બેઠી ભોરીંગણી छोटी और बडी कटेरी द्वे पुनर्नवे લાલ અને સફેદ સાટોડી श्वेत और रक्त गदहपुरना, मधुकम्

36 मधुकमात्मगुप्ता—मधुके सात्मगुप्ताम् (ख.)
३९. कुर्यात—दत्त्वा (च)
,, कुर्यात्प्रस्थोन्मित तेन—दत्त्वा प्रस्थोन्मितान् भागान् (छ)
,, कुर्यात्प्रस्थोन्मित तेन घृतप्रस्थं—एषा प्रस्थोन्मितान् भागान् घृतप्रस्थे (क ग घ न)
४० द्विकार्षिकाणि पत्रैलाहेमत्वङ्मरिचानि च — पलार्धकं च मरिचत्वगेलाम्बुकेशरात् (च ट ध.)
,, विनीय चूर्णित तस्मात्—चूर्णितानि विनीयास्मात् (क घ त)

३३ क्षीरसम- क्षीररसे (च)
,, पयस्या—पयसा (ड ध)
,, शुभम्—हितम् (च)

જેઠીમધ मुलहठी, आत्मगुप्ताम् કૌવચ केवाच, शतावरीम् શતાવરી शतावर, ऋद्धिम् ऋद्धि ऋद्धि, परूषकम् ફાલસા फालसा, भार्ङ्गीम् ભારંગી भारंगी, मृद्वीकाम् દ્રાક્ષ मुनक्के, तथा बृहतीम् ઊભી ભોરીંગણી बड़ी कटेरी, शृङ्गाटकम् સીંગોડાં सिघाड़ा तामलकीम् ભોંયઆમલી भुईआवला, पयस्याम् ભોંયકોળુ बिलाईकन्द, पिप्पलीम् પીપર पिप्पली, बलाम् બલા बला, बदर- બોર बेर, अक्षोट- અખરોટ अखरोट, खर्जूर- ખજૂર खजूर, वाताम- બદામ बादाम, अभिषुकाणि અપિ પિસ્તાં पिस्ता, एवम् आदीनि અને એવા પ્રકારનાં બીજા और इस प्रकारके अन्य, फलानि ફળો फल कार्षिकान् એક એક તોલો લઈને एक एक कर्ष लेकर कल्कान् કલ્ક कल्क, कुर्वीत બનાવવો करे धात्रीरस- આમળાંનો રસ आवलेका रस विदारी- ભોંયકોળું बिलाईकन्द, इक्षु- શેરડી ईख, छाग- બકરાનો बकरेका, मांसरसम् માંસરસ मांसरस, पय: તથા દૂધ और दूध, प्रस्थोन्मितम् દરેક ૬૪ તોલા प्रत्येक एक प्रस्थ, कुर्यात् લેવાં लेवे, तेन તેનાથી उनसे, घृतप्रस्थम् ૬૪ તોલા ઘી घी एक प्रस्थ, विपाचयेत् પકાવવું पकावे, शीते ઠંડુ થાય ત્યારે शीत होने पर, मधुन મધ मधुना, प्रस्थार्धम् ૩૨ તોલા आधा प्रस्थ, तथा शर्करा- સાકર चीनी, अर्धतुलाम् २०० તોલા पचास पल, पत्र- તેજપત્ર तेजपत्र, एला- એલચી इलायची, हेम- લાલ નાગકેસર रक्त नागकेसर, त्वक्- તજ दालचीनी मरिचानि च અને મરી और मरिच, द्विकार्षिकाणि દરેક બે તોલા प्रत्येक दो कर्षका, चूर्णितम् ચૂર્ણ કરી चूर्ण करके, विनीय મેળવીને मिलाकर, तस्मात् તેમાંથી उसमेंसे नर મનુષ્યે पुरुष, सदा હમેશાં नित्य, मात्राम् માત્રા પ્રમાણે मात्रामे, लिह्यात् ચાટવું चाटे, इति एतद् આ यह, अमृतप्राशम् घृतम् અમૃતપ્રાશ ઘૃત अमृतप्राश घृत, नराणाम् મનુષ્યોનુ मनुष्योंके लिए अमृतम् અમૃત છે अमृत है क्षीर- દૂધ दूध, मांसरस- તથા માંસરસનુ तथा मांसरसके, अशिना: ભોજન કરનારે खानेवालेको, सुधा- સુધા सुधा, अमृत- તથા અમૃત સમાન तथा अमृत समान, रसम રસવાળુ આ ઘૃત रसवाला यह घृत, प्राश्यम् ખાવુ જોઈએ खाना चाहिए ॥ ३५-४१ ॥

35-41. Jivaka, rishabhaka, milky yam, cock swallow wort, dry ginger, long zedoary, tetrafolia, the two kinds of meda, two kinds of kakoli, indian night shade and yellow-berried night shade and white and red hog-weed, liquorice, cowage, climbing asparagus, riddhi, falsa, betel-killer, grape, yellow berried nightshade, indian water chestnut, feather foil. milky yam. long pepper, heart-leaved sida, jujube, walnut date, almond and abhishuka and simalar other drugs; take one tola of each of these and make a paste of it and prepare a medicated ghee in sixty-four tolas of ghee with 64 tolas each of the juice of emblic myrobalan, juice of white yam, sugarcane juice, juice of the goat's flesh and cow's milk with the above paste. When it is cooled mix it with 32 tolas of honey, 200 tolas of sugar and the powder of 2 tolas of each of cinnamon leaf, small cardamom, fragrant poon, cinnamon and black pepper The patient may lick this Amrita Prasa ghee—ambrosial linctus—in proper dose which acts as ambrosia on men A man taking the milk and meat juice should take this nectarial or ambrosial ghee.

नष्टशुक्रक्षतक्षीणदुर्बलव्याधिकर्शितान् ।
स्त्रीप्रसक्तान् कृशान् वर्णस्वरहीनांश्च बृंहयेत् ॥४२॥
कासहिक्काज्वरश्वासदाहतृष्णास्रपित्तनुत् ।
पुत्रदं वान्तिमूर्छाहृद्योनिमूत्रामयापहम् ॥४३॥
[illegible]

---

४२ ज्वर-वान्ति (प)
„ वमि–छर्दि (ग.)

नष्टशुक्र- જેનુ વીર્ય નાશ પામ્યુ છે એવા जिनका वीर्य नष्ट हो गया हो ऐसे, क्षतक्षीण- क्षतक्षीણ क्षतक्षीण, दुर्बल- દુર્બળ दुर्बल, व्याधि- રોગથી व्याधिसे, कर्शितान् ક્ષીણ થયેલા कृश, स्त्रीप्रसक्तान् સ્ત્રીમાં આસક્ત स्त्रीसे आसक्त, कृशान् કૃશ कृश, वर्ण- तथा વર્ણ तथा वर्ण, स्वर- અને સ્વર और स्वर, हीनान् च જેના હીન થયા છે એવા પુરુષોનુ जिनके हीन हो गये है ऐसे पुरुषोंको, बृंहयेत् બૃંહણ કરે છે बृंहण करता है, कास કાસ कास, हिक्का- હિક્કા हिक्का, ज्वर- જ્વર ज्वर श्वास- શ્વાસ श्वास, दाह- દાહ दाह, तृष्णा- તૃષા तृषा, असृक्पित्तनुत् तथा રક્તપિત્તનો નાશ કરે છે तथा रक्तपित्तका नाशक, पुत्रदम् પુત્ર આપનારુ पुत्र देनेवाला, वमि- અને વમન और वमन, मूर्च्छा- મૂર્ચ્છા मूर्च्छा हृद्- હૃદય हृदय, योनि- યોનિ योनि, मूत्र- तथा મૂત્રના तथा मूत्रके, आमयापहम् રોગનો નાશ કરનારુ છે रोगोंका नाशक है ॥ ४२-४३ ॥ इति આ यह, अमृतप्राशघृतम् અમૃતપ્રાશઘૃત છે अमृतप्राश घृत है ।

42-43. This ghee will act as a roborant on persons emaciated from loss of semen, pectoral lesion, cachexia, debility and diseases, those who resort to over-indulgence in women, those who have gone thin, and also, those who have lost their complexion and voice It is curative of cough, hiccup, fever, dyspnea, burning, thirst, hemothermia, vomiting, fainting, stomach disorders, gynecic and urinary disorders and it promotes procreative power Thus has been described the Amrita Prasa ghee.

उर क्षते श्वदंष्ट्रादिघृतम्—

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्यकत्तृणम् ।
दर्भमूलं पृथक्पर्णीं पलाशर्षभकौ स्थिराम् ॥४४॥
पलिकं साधयेत्तेषां रसे क्षीरचतुर्गुणे ।
कल्कैः स्वगुप्ताजीवन्तीमेदर्षभकजीवकैः ॥४५॥
शतावर्यृद्धिमृद्वीकाशर्कराश्रावणीबिसैः ।
प्रस्थः सिद्धो घृताद्वातपित्तहृद्द्र(द्ध)वशूलनुत् ॥४६॥
मूत्रकृच्छ्रप्रमेहार्शःकासशोषक्षयापहः ।
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः ॥४७॥

इति श्वदंष्ट्रादिघृतम् ।

श्वदंष्ट्रा- ગોખરુ गोखरु, उशीर- વીરણનો વાળો खस, मञ्जिष्ठा- મજીઠ मजीठ, बला- બલા बला काश्मर्य- શીવણનાં ફળ गंभारीके फल, कत्तृणम् રોહિષઘાસ रुषाघास, दर्भमूलम् દર્ભનાં મૂળ दर्भमूल पृथक्पर्णीम् પીઠવણ पीठवन, पलाश- ખાખરો ढाक, ऋषभकौ ઋષભક ऋषभक, स्थिराम् સાલવણ सरीवन, पलिकम् દરેક ૪ તોલા લઈ प्रत्येकको पलमात्र लेकर, साधयेत् ક્વાથ કરવો क्वाथ करे, क्षीरचतुर्गुणे ચારગણા દૂધસહિત चौगुने दूधसहित, तेषाम् તેના उनके, रसे ક્વાથમાં क्वाथमें, स्वगुप्ता- કૌચ केवाँच जीवन्ती- ડોડી जीवन्ती, मेदा- મેદા मेदा ऋषभक- ઋષભક ऋषभक जीवकैः જીવક जीवक, शतावरी- શતાવરી सतावर, ऋद्धि- ઋદ્ધિ ऋद्धि, मृद्वीका- દ્રાક્ષ मुनक्के, शर्करा- સાકર चीनी श्रावणी- ગોરખમુંડી मुण्डी, बिसैः અને કમળદંડના તંતુ એઓના और कमलदंडके तंतु इनके कल्कैः કલ્કથી कल्कसे, सिद्ध સિદ્ધ કરેલુ सिद्ध किया हुआ, घृतात् घी घीका, प्रस्थ. ६४ તોલા एक प्रस्थ, वात- વાત वात पित्त- પિત્ત पित्त, हृद्द्रव- હૃદ્દ્રવ हृद्द्रव, शूल- અને હૃદયના શૂલનો और हृच्छूलका, नुत् નાશ કરે છે नाशक है मूत्रकृच्छ्र- મૂત્રકૃચ્છ્ર मूत्रकृच्छ्र, प्रमेह- પ્રમેહ प्रमेह, अर्श- અર્શ अर्श, कास- ઉધરસ कास, शोष- શોષ शोष, क्षय- तथा ક્ષયનો तथा क्षयका, अपह નાશ કરે છે नाशक है, धनु - અને ધનુષ્ય और धनुष, स्त्री- સ્ત્રી स्त्री, मद्य- મદ્ય मद्य, भार- ભાર भार, अध्व- तथा મુસાફરીથી तथा चलनेसे, खिन्नानाम् ખિન્ન થયેલાઓનાં खिन्न पुरुषोंके, बल- બળ बल, मांसदः तथा માંસ વધારનાર છે तथा मांसको बढ़ानेवाला है ॥ ४४-४७ ॥ इति આ यह, श्वदंष्ट्रादिघृतम् શ્વદંષ્ટ્રાદિઘૃત છે श्वदंष्ट्रादिघृत है।

४५. पलिक—पलिकान् (च)

44-47. Decoct 4 tolas of each of small caltrops, cuscus grass, indian madder, heart-leaved sida, white teak, ginger grass, roots of sacrificial grass, painted leaved uraria, palas, rishabhaka and ticktrefoil, till it is reduced to one-fourth of its quantity and prepare a ghee in this solution by adding 64 tolas of ghee, four times the quantity of milk, and the paste of cowage, cock swallow wort, meda, rishabhaka, jivaka, climbing asparagus, riddhi, grapes, sugar, east indian globe thistle and lotus stalks. This ghee is curative of disorders of vata, pitta, tachycardia, colic, dysuria, urinary disorders, piles, cough, consumption, wasting and is a promotive of strength and flesh in persons emaciated as the result of overstrain, practising the bow, over-indulgence in women and wine and carrying of heavy loads and the fatigue due to excessive walking. Thus has been described the compound small Caltrops Ghee

उर क्षते मधुकादिघृतम्—

**मधुकाष्टपलद्राक्षाप्रस्थक्काथे घृतं पचेत् ।**
**पिप्पल्यष्टपले कल्के प्रस्थं सिद्धे च शीतले ॥४८॥**
**पृथगष्टपलं क्षौद्रशर्कराभ्यां विमिश्रयेत् ।**
**समसक्तु क्षतक्षीणे रक्तगुल्मे च तद्धितम् ॥४९॥**

मधुक- જેઠીમધ मुलहठी, अष्टपल- ३२ તોલા आठ पल, द्राक्षा- અને દ્રાક્ષ और मुनक्के, प्रस्थ- ६४ તોલાના प्रस्थमात्रके, क्वाथे ક્વાથમાં क्वाथमें, पिप्पली- પીપરના पिप्पलीके, अष्टपले ३२ તોલા आठ पलके, कल्के કલ્કમાં कल्कमें, प्रस्थम् ६४ तोला एक प्रस्थ, घृतम् ઘૃત घृत, पचेत् પકાવવું पकावे, सिद्धे સિદ્ધ થયા પછી सिद्ध होनेके पश्चात्, शीतले च ઠંડું થતાં ठंडा होने पर, क्षौद्र- મધ मधु शर्कराभ्याम् तथा સાકર और चीनी, पृथक् જુદાં જુદાં पृथक् पृथक्, अष्टपलम् ३२ તોલા आठ पल लेकर, विमिश्रयेत् મેળવવાં मिलावे, समसक्तु સમાન સાથવો મેળવેલું समान भागमें सत्तु मिलाया हुआ, तत् તે ઘૃત वह घृत, क्षतक्षीणे क्षत-क्षीणमां क्षतक्षीणमें, रक्तगुल्मे च અને રક્તગુલ્મમાં और रक्तगुल्ममें, हितम् હિતકર છે हितकर है ॥४८-४९॥

48-49. Take 32 tolas of liquorice and 64 tolas of dried grapes and to the decoction obtained from these add 64 tolas of ghee and 32 tolas of the paste of long pepper, and cook. After it has been taken off the fire and allowed to cool, add 32 tolas each of honey and sugar. This medicated ghee taken with equal quantity of fried barley flour is beneficial in cases of pectoral lesions and cachexia and gulma due to vitiated menstrual blood.

उर क्षते सर्पिर्गुडयोगा —

**धात्रीफलविदारीक्षुजीवनीयरसैर्घृतम् ।**
**अजागोपयसोश्चैव सप्त प्रस्थान् पचेद्भिषक् ॥५०॥**
**सिद्धशीते सिताक्षौद्रद्विप्रस्थं विनयेच्च तत् ।**
**यक्ष्मापस्मारपित्तासृक्कासमेहक्षयापहम् ॥५१॥**
**वयःस्थापनमायुष्यं मांसशुक्रबलप्रदम् ।**
**घृतं तु पित्तेऽभ्यधिके लिह्याद्वातेऽधिके पिबेत् ॥५२॥**
**लीढं निर्वापयेत् पित्तमल्पत्वाद्धन्ति नानलम् ।**
**आक्रामत्यनिलं पीतमूष्माणं निरुणद्धि च ॥५३॥**

भिषक् વૈદ્ય वैद्य, धात्रीफल- આમળાં आमले, विदारी- ભોંયકોળું बिलाईकन्द, इक्षु- શેરડી ईख, जीवनीय- અને જીવનીયગણની ઔષધિઓના और

४८ घृत पचेत्--पचेद् घृतात् (च)

५० जीवनीयरसैर्घृतम्—जीवनीयरसाद् घृतात् (ग छ ज न)

५१ कासमेहक्षयापहम्—योनिमूत्रामयापहम् ग ।

जीवनीयगणोक्त ओषधियोंके. रसैः क्वाथथी क्वायसे, घृतम् घी घृतके अजा- અને બકરીનું और बकरीके गो- તથા ગાયનું और गौके, पयसो· च દૂધ दूधके, सप्त एव સાત જ सात ही, प्रस्थान् પ્રસ્થ प्रस्थको, पचेत् પકાવવું पकावे, सिद्ध- घी સિદ્ધ થઈ घी सिद्ध होनेके पश्चात्, शीते ઠંડુ થતાં ठंडा होने पर सिता- સાકર चीनी, क्षौद्र- તથા મધ और मधुके, द्विप्रस्थम् ६४ तोला दो प्रस्थ, विनयेत् મેળવવું मिलावे, तत् च તે ઘૃત वह घृत यक्ष्म- રાજયક્ષ્મા राजयक्ष्मा, अपस्मार- અપસ્માર अपस्मार, पित्तासृक्- રક્તપિત્ત रक्त- पित्त कास- કાસ कास, मेह- પ્રમેહ प्रमेह, क्षय- અને ક્ષયનો और क्षयको, अपहम् નાશ કરે છે नष्ट करनेवाला है, वयःस्थापनम् તેમજ વયસ્થાપક एवं वयःस्थापक, आयुष्यम् આયુષ્ય વધારનાર आयु बढाने- वाला, मांस અને માંસ और मांस, शुक्र- શુક્ર शुक्र, बल તથા બળને तथा बलको, प्रदम् આપનાર છે देने- वाला है, पित्ते પિત્ત पित्तके अभ्यधिके અધિક વધ્યું હોય ત્યારે ज्यादा बढने पर, तु તો तो, घृतम् घी घृतको, लिह्यात् ચાટવું चाटे, वाते વાત वातके, अधिके વધ્યો હોય ત્યારે ज्यादा बढने पर, पिबेत् પીવું पीवे, लीढम् ચાટેલું घी चाटा हुआ घृत, अल्प- त्वात् થોડું હોવાથી अल्प होनेसे, पित्तम् પિત્તને पित्तको, निर्वापयेत् શાંત કરે છે शान्त करता है, अन- लम् અને અગ્નિનો और अग्निको, न हन्ति નાશ નથી કરતુ नष्ट नहीं करता पीतम् પીધેલું घी पिया हुआ घृत, अनिलम् વાયુને वायुको, आक्रामति દબાવે છે दबाता है, ऊष्माणम् અને ઊષ્માને और ऊष्माको, निरुणद्धि च શાંત કરે છે शान्त करता है ॥ ५०-५३ ॥

50-53. The physician should take 64 tolas each of the following seven articles: juices of chebulic myrobalan, white yam, sugar cane, drugs of the life-promoter group, ghee, goat's milk and cow's milk and should cook the whole together. After it has been allowed to cool, add 64 tolas each of sugar candy and honey. This medicated ghee is curative of consumption, epilepsy, hemothermia, cough, urinary disorders and wasting, it is also rejuvenating and promotive of life and promotes flesh, semen and vitality. Ghee should be taken in the form of linctus in conditions where pitta is predominant, and where vata is predominant it should be taken in the form of a potion. When used as a linctus, the dose being small, it quiets the pitta, without quenching the gastric fire, when used as a potion, (the dose being large) it subdues vata, while preventing the diffusion of the gastric fire.

क्षामक्षीणकृशाङ्गानामेतान्येव घृतानि तु ।
त्वक्क्षीरीशर्करालाजचूर्णैः स्त्यानानि योजयेत् ५४
सर्पिर्गुडान् समध्वंशाञ्जग्ध्वा चानु पयः पिबेत् ।
रेतो वीर्यं बलं पुष्टिं तैराशुतरमाप्नुयात् ॥५५॥

इति सर्पिर्गुडाः ।

क्षाम- થાકી ગયેલા थके हुए, क्षीण ક્ષીણ क्षीण, कृश- અને દુર્બલ और कृश, अङ्गानाम् અંગવાળાઓને शरीरवालोंको, तु તો तो, त्वक्क्षीरी- વાંસકપૂર वंशलोचन, शर्करा- સાકર चीनी, लाज- તથા શાળના और लाजाके, चूर्णैः ચૂર્ણથી चूर्णसे स्त्यानानि ઘાટાં કરેલાં अवलेहके समान बने, एतानि एव આ જ इन्हीं, घृतानि ઘૃતોની घृतोंका, योजयेत् યોજના કરવી प्रयोग करना चाहिए, समध्वंशान् સમાન ભાગમાં મધવાળા समान प्रमाणमें मधुमिश्रित, सर्पिर्गुडान् ઘીના લાડુ घीके लड्डू, जग्ध्वा ખાઈને खाकर, अनु च પાછળથી पीछे, पयः દૂધ दूध, पिबेत् પીવું पीवे, तैः તેનાથી મનુષ્ય उनसे पुरुष, रेतः રેત रेत, वीर्यम् વીર્ય वीर्य, बलम् બળ बल,

---

५४. त्वक्क्षीरीशर्करालाज—त्वक्क्षीरीपिप्पलीलाज (च. श. द. ध.)
,, स्त्यानानि—पानानि (ख)
५५. चानु पय. पिबेत्—चाद्यात् पयोऽनु च (ध)

पुष्टिम् अने पुष्टि और पुष्टिको आशुतरम् तरत ज शीघ्र ही, आप्नुयात् प्राप्त करे छे प्राप्त करना है ॥ ५४-५५ ॥ इति आ ये, सर्पिर्गुडा घीना लाडु छे घीके लड्डू है।

54-55 All these ghees made into a thick paste with the powders of bamboo manna, sugar and roasted paddy powder, may be used for persons who are weak, emaciated and thin The patient may take this medicated ghee rolled into balls with the addition of equal quantity of honey It should be followed by a potion of milk By a course of this one obtains increase of semen, vitality strength and plumpness at a quicker rate. Thus have been described the ghee ball preparations

बला विदारी ह्रस्वा च पञ्चमूली पुनर्नवा ।
पञ्चानां क्षीरिवृक्षाणां शुङ्गा मुष्ट्यंशका अपि ॥५६॥

एषां कषाये द्विक्षीरे विदार्याजरसांशिके ।
जीवनीयैः पचेत् कल्कैरक्षमात्रैर्घृताढकम् ॥५७॥

सितापलानि पूते च शीते द्वात्रिंशतं क्षिपेत् ।
गोधूमपिप्पलीवांशीचूर्णं शृङ्गाटकस्य च ॥५८॥

समाक्षिकं कौडविकं तत् सर्वं खजमूर्च्छितम् ।
स्त्यानं सर्पिर्गुडान् कृत्वा भूर्जपत्रेण वेष्टयेत् ॥५९॥

ताञ्जग्ध्वा पलिकान् क्षीरं मद्यं वाऽनुपिबेत् कफे ।
शोषे कासे क्षते क्षीणे श्रमस्त्रीभारकर्शिते ॥६०॥

रक्तनिष्ठीवने तापे पीनसे चोरसि स्थिते ।
शस्ताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः ॥६१॥
इति द्वितीयसर्पिर्गुडाः ।

बला બલા बला, विदारी ભોંયકોળુ विलाईकन्द, ह्रस्वा લઘુ लघु, पञ्चमूली પંચમૂળ पञ्चमूल, पुनर्नवा च સાટોડી गदहपुरना. पञ्चानाम् તથા પાંચ तथा पाचों, क्षीरिवृक्षाणाम् ક્ષીરી વૃક્ષોના क्षीरी वृक्षोंके, मुष्टि-अंशका ચાર ચાર તોલા प्रत्येकके पल मात्र, शुङ्गा શુંગ शुंग, एषाम् એઓના इनके, विदारी- ભોંયકોળુ विलाईकन्द, आजरसांशिके અને બકરાના માંસરસ-સહિત और बकरेके मांसरससे युक्त, द्विक्षीरे બમણા દૂધવાળા दुगुने दूध मिलाये हुए, कषाये ક્વાથમાં क्वाथमें, अक्षमात्रैः એક એક તોલા प्रत्येक कर्षमात्र जीवनीयैः જીવનીય ગણની ઔષધિઓના जीवनीय गणोक्त ओषधियोंके कल्क કલ્કથી कल्कसे, घृत-आढकम् २५६ તોલા ઘી घृत एक आढक, पचेत् પકાવવુ पकावे शीते ટાઢુ થયા પછી ठंडा होने पर पूते च ગાળી લઈને छान लेकर, द्वात्रिंशतम् બત્રીસ बत्तीस, सितापलानि પલ સાકર पल मिश्री, गोधूम ઘઉં गेहूं, पिप्पली- પીપર पिप्पली, वांशी- અને વાંસ-કપૂરનુ और वंशलोचनका चूर्णम् ચૂર્ણ चूर्ण शृङ्गा-टकस्य च અને શીંગોડાંનુ ચૂર્ણ और सिंघाड़ेका चूर्ण, समाक्षिकम् મધસહિત मधुसहित, कौडविकम् १६ તોલા चार पल, क्षिपेत् નાખવુ छोड़े, तत् એ इन, सर्वम् બધાંને सबको, खज- તાવીથાથી खजदण्डसे, मूर्च्छितम् ભેળવીને मिलाकर, स्त्यानम् અવલેહ જેવું થતાં अवलेह हो जाने पर, सर्पिर्गुडान् ઘીના લાડુ घीके लड्डू, कृत्वा બનાવીને बनाकर, भूर्जपत्रेण ભોજપત્રથી भूर्जपत्रसे, वेष्टयेत् વીંટવું लपेट देवे, पलिकान् પલમાત્ર पलमात्र, तान् તે उनको, जग्ध्वा ખાઈને खाकर, क्षीरम् દૂધ दूध मद्यम् वा અથવા મદ્યનુ या मद्यका, अनुपिबेत् અનુપાન કરવુ अनुपान करे, कफे કફમાં कफमें, शोषे શોષમાં शोषमें, कासे કાસમાં कासमें, क्षते ક્ષતમાં क्षतमें, क्षीणे ક્ષીણતામાં क्षीणतामें, श्रम- શ્રમ श्रम, स्त्री- સ્ત્રી स्त्री, भार અને ભારથી और भारसे, कर्शिते કૃશ થયેલાને कृश हुएको,

५७ रसांशिके–रसाशके (ज)

५८. पूते च–पूतेऽस्मिन् (क ष)

,, द्वात्रिंशतं क्षिपेत्–द्वात्रिंशदावपेत् (ष)

५९. समाक्षिकं कौडविकं–सक्षौद्रं कुडवांशेन (ष)

६१. स्थिते–क्षते (ट)

रक्तनिष्ठीवने લોહી થૂકવામાં रक्त थूकनेमें, उरसि છાતીમાં छातीमें, स्थिते રહેલા स्थित, तापे સંતાપમાં संतापमें, पीनसे च પીનસમાં पीनसमें, पार्श्व- પાર્શ્વ पार्श्व, शिरः- તથા શિરના और शिरके, शूले શૂળમાં शूलमें, स्वर- અને સ્વરના और स्वरके, वर्णयोः તથા વર્ણના तथा वर्णके, भेदे च ભેદમાં भेदमे, शस्ताः પ્રશસ્ત છે प्रशस्त है ॥ ५६-६१ ॥ इति આ એ, द्वितीय- બીજા दूसरे, सर्पिर्गुडाः ઘીના લાડુ છે घीके लड्डू हैं।

56-61. Take four tolas each of heart-leaved sida, white yam, minor pentaradix, hog weed and sprouts of the five milk-yielding trees (viz the five varieties of fig). To the decoction obtained from these, add twice its quantity of milk and an equal quantity of the juice of white yam and the meat-juice of goat s flesh, one tola of the paste of each of the ten drugs of the life-promoter group and 256 tolas of ghee. Cook the whole together. After it has cooled, filter and add 128 tolas of sugar-candy and 16 tolas each of the powder of wheat, long pepper, bamboo manna, indian water chestnut and honey The whole should be beaten up into the consistency of a paste by means of a wooden stick and rolled into balls. These ghee-balls should be wrapped round in birch leaves. This preparation should be taken in a dose of 4 tolas and followed by a potion of milk or, in the case of kapha disorders, by a potion of wine These ghee-balls are recommended in the disorders of consumption, cough pectoral lesions, wasting, emaciation due to overwork, indulgence in women and carrying of heavy weights, in hemoptysis, in heat or colds affecting the chest in pain in the sides of the chest or in the head and in loss of voice and complexion. Thus has been described the second variety of ghee balls

त्वक्क्षीरीश्रावणीद्राक्षामूर्वर्षभकजीवकैः ।
वीरर्धिक्षीरकाकोलीबृहतीकपिकच्छुभिः ॥६२॥

खर्जूरफलमेदाभिः क्षीरपिष्टैः पलोन्मितैः ।
धात्रीविदारीक्षुरसप्रस्थैः प्रस्थं घृतात् पचेत् ॥६३॥

शर्करार्धतुलां शीते क्षौद्रार्धप्रस्थमेव च ।
दत्त्वा सर्पिर्गुडान् कुर्यात्कासहिक्काज्वरापहान् ॥६४॥

त्वक्क्षीरी- વાંસકપૂર वंशलोचन, श्रावणी- ગોરખમુંડી मुंडी, द्राक्षा દ્રાક્ષ मुनक्के, मूर्वा- મૂર્વા मूर्वा, ऋषभक- ઋષભક ऋषभक, जीवकै જીવક जीवक, वीरा- શતાવરી शतावर ऋद्धि- ઋદ્ધિ ऋद्धि क्षीरकाकोली- ક્ષીરકાકોલી क्षीरकाकोली, बृहती- ઉભી ભોંયરીંગણી बडी कटेरी, कपिकच्छुभि ક્રૌંચ केवाँच, खर्जूरफल ખજૂર खर्जूर मेदाभिः મેદા मेदा, पलोन्मितैः એમાંના પ્રત્યેકના ૪ તોલા इनके प्रत्येकके पलप्रमाण, क्षीर- દૂધમાં दूधमें, पिष्टैः પીસેલા કલ્કથી पीसे गये कल्कसे, धात्री- આમળાં आवले विदारी- ભોંયકોળું विलाईकन्द, इक्षुरस- તથા શેરડીનો રસ और ईखका रस, प्रस्थैः દરેકના ६४ તોલાથી प्रत्येकके प्रस्थसे, घृतात् ઘી घीका, प्रस्थम् ६४ તોલા एक पस्थ, पचेत् પકાવવું पकावे शीते ઠંડું થયા પછી તેમાં ठंडा होने पर उसमें, शर्करा- સાકર चीनी, अर्धतुलाम् २०० તોલા पचास पल, क्षौद्र- અને મધ और शहद, अर्धप्रस्थम् च एव ३२ તોલા आधा प्रस्थ दत्त्वा નાખીને डालकर, कास- કાસ कास, हिक्का- હેડકી हिक्का, ज्वर- તથા જ્વરનો और ज्वरका, अपहान् નાશ કરનારા नाशक, सर्पिर्गुडान् ઘીના લાડુ घीके लड्डू, कुर्यात् કરવા बनावे ॥ ६२-६४ ॥

---

६३ खर्जूरफलमेदाभिः—खर्जूरविषमेदाभि (प)

६४. दत्त्वा—क्षिप्त्वा (क म. च)

62-64. Prepare a paste in milk of 4 tolas of each of the following 13 articles—east indian globe thistle, grape, trilobed virgin's bower, rishabhaka, jivaka, milky yam riddhi, kshira kakoli, yellow-berried night shade, cowage, date and meda Add to the paste thus obtained 64 tolas of the juice of each of emblic myrobalans, white yam. and sugarcane and cook in 64 tolas of ghee. After cooling, add 200 tolas of sugar and 32 tolas of honey and roll into balls These ghee-balls are curative of cough, hiccup and fever.

यक्ष्माणं तमकं श्वासं रक्तपित्तं हलीमकम् ।
शुक्रनिद्राक्षय तृष्णां हन्तु कार्श्यं सकामलम् ॥६५॥
इति तृतीयाः सर्पिर्गुडाः ।

यक्ष्माणम् એઓ રાજયક્ષ્મા वे राजयक्ष्मा, तमकम् श्वासम् तमક શ્વાસ तमक श्वास, रक्तपित्तम् રક્તપિત્ત रक्तपित्त, हलीमकम् હલીમક हलीमक, शुक्र- શુક્રનો शुक्रके, निद्रा- તથા નિદ્રાનો तथा निद्राके क्षयम् ક્ષય क्षय, तृष्णाम् તૃષા तृषा, सकामलम् અને કમળા सहित और कमलासहित, कार्श्यम् કૃશતાનો कृशताको, हन्तु નાશ કરે छे नष्ट करते हैं ॥६५॥ इति આ ये, तृतीया ત્રીજા तीसरे, सर्पिर्गुडाः ઘીના લાડુ છે घीके लड्डू हैं।

65 Consumption asthma, hemothermia, halimaka, loss of semen insomnia thirst, emaciation and jaundice are also cured by these ghee-balls Thus has been described the third kind of ghee-balls

नवमामलकं द्राक्षामात्मगुप्तां पुनर्नवाम् ।
शतावरीं विदारीं च समङ्गां पिप्पलीं तथा ॥६६॥
पृथग्दशपलान् भागान् पलान्यष्टौ च नागरात् ।
यष्ट्याह्वसौवर्चलयोर्द्विपलं मरिचस्य च ॥६७॥
क्षीरतैलघृतानां च त्र्याढके शर्कराशते ।
कथिते तानि चूर्णानि दत्त्वा विल्वसमान् गुडान् ६८
कुर्यात्तान् भक्षयेत् क्षीणः क्षतः शुष्कश्च मानवः ।
तेन सद्यो रसादीनां वृद्ध्या पुष्टिं स विन्दति ॥६९॥
इति चतुर्थसर्पिर्गुडाः ।

नवम् નવાં नये, आमलकम् આમળાં आवले, द्राक्षाम् દ્રાક્ષ मुनक्के, आत्मगुप्ताम् કૌવચ केवाँच, पुनर्नवाम् સાટોડી गदहपुरना शतावरीम् શતાવરી सतावर, विदारीम् च ભોંયકોળુ बिलाईकन्द, समङ्गाम् રીસામણી लजावन्ती, तथा તથા तथा, पिप्पलीम् પીપર पिप्पली, पृथक એઓના જુદા જુદા इनके पृथक् पृथक्, दशपलान् ४० તોલાના दशपलके, भागान् ભાગ भाग नागरात् સૂંઠના सोंठके, अष्टौ આઠ आठ, पलानि પલ पल, यष्ट्याह्व જેઠીમધ मुलहठी, सौवर्चलयोः સંચળ सौवर्चल, मरिचस्य च અને મરી और मरिच, द्विपलम् દરેકના આઠ તોલા प्रत्येकके दो पल तानि चूर्णानि એઓના ચૂર્ણને इनके चूर्णको क्षीर- દૂધ दूध, तैल- તેલ तैल घृतानाम् च અને ઘૃત और घीके, त्र्याढके ७६८ તોલામાં या तीन आढकमें, कथिते તથા ચાસણી કરેલી तथा चासनी की हुई, शर्कराशते સાકર ४०० તોલામાં चीनीके सौ पलमें दत्त्वा નાખીને डालकर, विल्वसमान् ચાર ચાર તોલાના पलपलके, गुडान् લાડુ लड्डू, कुर्यात કરવા बनावे तान् લાડુઓનું लड्डुओंको, क्षीण ક્ષીણરોગી क्षीणरोगी क्षत ઉરક્ષતવાળા उरक्षतरोगी, शुष्क. च અને સૂકાઈ ગયેલા और कृश, मानव મનુષ્ય मनुष्य, भक्षयेत् ભક્ષણ કરવું खावे, तेन તેથી उससे, सद्य શીઘ્ર शीघ्र, रसादीनाम् રસાદિની रसादिकी, वृद्ध्या વૃદ્ધિ થવાથી वृद्धिसे, स તે वह, पुष्टिम् પુષ્ટિને पुष्टिको विन्दति પામે છે प्राप्त करता है ॥ ६६-६९ ॥ इति આ ये, चतुर्थ- ચોથા चौथे, सर्पिर्गुडा ઘીના લાડુ છે घीके लड्डू है।

66-69 Take 40 tolas of each of fresh emblic myrobalans, grapes, cowage, hog's weed, climbing asparagus, white yam, sensitive plant and long

६६. समङ्गाम्–समाशा (व. त)

